श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ वासवीहृदयानंदंवेदशास्त्र(स्त्रा)प्रणायकं । वेदव्या संगुरूपास्यंवंदेऽभीष्टप्र(दंसतां)दायकं ॥ १ ॥ श्रीरामंहनुमत्सेव्यंश्रीकृष्णंभीमसेवितं । श्रीव्यासंश्रीमदानंदतीर्थसंसेव्यमाभजे ॥ २ ॥ हृत्तमोनाशकंशास्त्रप्रभयातत्वभासकं । नमामिश्रीमदानंदतीर्थाचार्यदिवाकरं ॥ ३ ॥ श्रुतिक्षीराब्धिसामर्थ्यबुद्धिमंदरभूभृता । प्राप्तान्यायसुधायेनतंजयेंद्रमहंभजे ॥ ४ ॥ ब्रह्मण्यतीर्थवार्ध्युत्थंव्यासतीर्थेंदुमाभजे । तात्पर्यचंद्रिकायुक्तंसर्वतापापहंसतां ॥ ५ ॥ वेदव्यासाब्धिसंजातंसदाहरिपदाश्रयं । पदार्थकौमुदीयुक्तंवेदेशेंदुमहंभजे ॥ ६ ॥ श्रीमन्न्यायसुधायायैर्भावः

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ।

हरिः ॐ। निखिलगुणनिकायंनित्यनिर्धूतहेयंशुभतममतिमेयंशुद्धसौख्यास्युपायं ।

सम्यक्प्रदर्शितः । तान्वंदेयादवाचार्यान्सदाविद्यागुरूनहं ॥ ७ ॥ अथतत्कृपयान्यायामृतस्येदंप्रकाशनं । क्रियतेश्रीनिवासेन गुरुशिक्षानुसारतः ॥ ८ ॥ इहखलुव्यासतीर्थश्रीमच्चरणः श्रुतमर्थंमिमनिषयानिबिभंत्सुः परीक्षकप्रवृत्त्यंगभूतमनुबंधचतुष्टयं वक्तुंविशिष्टविषयादिमद्ब्रह्ममीमांसयानिबध्यसंबंधयितुंचतुर्लक्षणीमीमांसाविवक्षितविशेषणचतुष्टयवत्त्वेनेष्टदेवतामभिष्टवीति ॥ निखिलेत्यादिना ॥ निखिलगुणपूर्णत्वनित्यनिर्धूतहेयत्वयोर्हेतुहेतुमद्भावः श्रियःपत्येनित्यागणितगुणमाणिक्यविशदप्रभाजालोल्लासोपहतसकलावद्यतमसइतिटीकाकारोक्तरीत्यावगंतव्यः । ननुनिकायमितिकथं । निकाय्यनिलयालयाइत्यमरकोशे "पा

य्यसान्नाय्यनिकाय्यधाय्यामानहविर्निवाससामिधेनीषु"इतिसूत्रेचनिकाय्यशब्दस्यैवनिलयवाचित्वोक्तेर्निकाय्यमितिवक्तव्यत्वा
दितिचेत् । अत्राहुः । निपूर्वकान्निवासार्थकाच्चिनोतेर्धातुविशेषाद्घञ्प्रत्ययेऽकारमात्रंविहायसर्वस्यापिलोपेचकारस्थस्यइकारस्य
एकाररूपेगुणेप्राप्तेअचोऽञ्णितीतिऐकाररूपवृद्धौसत्यांतस्यचायादेशेचकारस्यककारादेशेनिकायमितिरूपस्य "निवासचितिशरी
रोपसमाधानेष्वादेश्चक"इतिसूत्रेनिवासार्थेसाधिततयानिखिलगुणानांनिवासआश्रयइत्यर्थोद्रष्टव्यइति । गुरुचरणास्तु । नायं
निकायशब्दःकोशसूत्रोक्तरीत्यानिवासार्थेरूढोभिप्रेतः । किंतुअव्ययानामनेकार्थत्वान्निखिलगुणाएवानितरांकायोयस्येत्यर्थस्या
भिप्रेततयानकोपिक्षुद्रोपद्रवइत्याहुः ॥ शुभतमेति ॥ मतिशब्दस्यध्यानार्थत्वेतस्याःशुभतमत्वंनामवैराग्यभक्तिदार्ढ्योपकृत

सकलनिगमगेयंसर्वशब्दाभिधेयंनवजलधरकायंनौमिलक्ष्मीसहायं ॥ १ ॥

त्वं । तेनमेयंसाक्षात्कर्तव्यं । अपरोक्षज्ञानार्थत्वेतुवैराग्यभक्तिध्यानजातत्वेनशुभतमत्वंतस्यमंतव्यं । तेनमेयंविषयीकर्तव्यं ।
यद्वानित्यानित्यवस्तुविवेकवैराग्यशमदमादिसंपत्तिमुमुक्षारूपसाधनचतुष्टयसंपन्नत्वेनशुभतमायेपुरुषास्तेषांमत्यामेयं श्रवणादि
द्वाराऽपरोक्षज्ञानेनविषयीकरणीयमित्यर्थः । सौख्यस्यशुद्धत्वंनामदुःखासंभिन्नत्वंमंतव्यं । अनेनविशेषणचतुष्टयेनाऽध्यायचतु
ष्टयार्थःसंगृहीतइतिध्येयं । तथाचभगवतोविषयत्वाच्छुद्धसौख्यस्यपरमप्रयोजनत्वान्मतिशब्दोक्तापरोक्षज्ञानस्यचावांतरप्रयो
जनत्वाच्छुभतमानांचाऽधिकारित्वाद्यथायोग्यंसंबंधसद्भावात्प्रेक्षावतामत्रप्रवृत्तिरुचितेत्यपिसूचितं । गुणपूर्णत्वोपपादनायाह ॥
सकलेति ॥ वैदिकानांसर्वशब्दानांयौगिकत्वात्तदभिधेयत्वेसकलगुणपूर्णत्वमेवसिद्ध्यति । यथोक्तं "अतोऽनंतगुणोविष्णुर्य

च्छब्दायोगवृत्तय"इति । ननुकासुचिच्छाखासुअन्यथाप्युच्यमानत्वान्नविष्णोर्निखिलनिगमगेयत्वंयुक्तमित्याशंकापरिहारायसू त्रकृदुक्तंगतिसामान्यंहृदिनिधायाह ॥ सर्वशब्देति ॥ वैदिकप्रकृत्यादिसर्वशब्दाभिधेयमित्यर्थः । अतोनानयोर्विशेषणयोः पुनरुक्तिरितिभावः । यद्वाअधिकारिभेदेनवाक्यसमन्वयपदसमन्वयाभ्यांभगवानेवप्रतिपाद्यइतिवाक्यान्वयाज्ज्योतिरुपक्रमादि त्यादिसूत्रोक्तप्रकारंहृदिनिधायेदंविशेषणद्वयं । अतोनपुनरुक्तिरितिमंतव्यं । निराकारस्यब्रह्मणोबुद्ध्यावनारोहाच्छुभतममतिमे यत्वंयदुक्तंतदयुक्तमित्याशंकापरिहारायोक्तं नवजलधरकायमितीत्याहुः । वस्तुतस्तुनिखिलगुणनिकायमित्यनेनैवनिराकारत्वशं कायाःपरिहृतत्वात्स्वोपास्यदेवतास्वरूपकथनायैवेदंविशेषणमितिमंतव्यं । नवजलधरोवर्षाकालीनोमेघः तद्वद्विद्यमानःकायोय

विघ्नौघवारणंसत्याशेषविश्वस्यकारणं । करुणासिंधुमानंदतीर्थबंधुंहरिंभजे ॥ २ ॥

अभ्रमंभंगरहितमजडंविमलंसदा । आनंदतीर्थमतुलंभजेतापत्रयापहं ॥ ३ ॥

स्यतंनीलमेघश्यामंश्रीकृष्णमित्यर्थः । लक्ष्मीसहायमित्यत्रलक्ष्म्याःसहायइतिविग्रहोनतुलक्ष्मीरेवसहायोयस्येति । तथात्वेमहि मातिशयाऽलाभात् । एवंचलक्ष्म्याःभगवान्सहायइतिवचनेनग्रंथस्यवाङ्मनोव्यापाररूपत्वाल्लक्ष्म्याश्चवाङ्मनसदेवतात्वाद्यल क्ष्म्यावाङ्मनसदेवतात्वंतदपितदधीनमितिप्रमेयसूचनेनभगवतोमहामहिमालभ्यतइतिध्येयं ॥ १ ॥ स्वापेक्षितविघ्ननिवारणगु णवत्त्वेनभगवंतंसेवते ॥ विघ्नौघेति ॥ सत्याशेषेतिविशेषणमुत्तरग्रंथोपक्षेपायभूमिकारचनरूपमितिज्ञेयं ॥ २ ॥ आदिगुरूंस्से वते ॥ अभ्रममिति ॥ भ्रमरूपज्ञानरहितं । गंगादिसर्वतीर्थेषुभ्रमोनामाऽऽवर्तस्तिष्ठतीत्याशयः । भंगरहितंप्रतिवादिप्रयुक्तप

राभवरहितं । अन्यत्रतुवसंतादिकालेप्रवाहविच्छेदरूपोभंगोस्तीत्यवसेयं । अजडं जाड्याख्यदोषरहितं । इतरत्रतुजलात्मकत्वा
त्जाड्यमस्तीतिबोध्यं । विमलंविगतमलं । "शमलंपापमुद्दिष्टंरागद्वेषादिकंतथा । अपराधश्चशमलंमलंचशमलंविदु"रितिकर्मनि
र्णयवचनात्मलशब्दोक्तपापरहितमित्यर्थः । अपरत्रतुवर्षाकालेकल्मषतादिरूपंमलमस्तीत्यवसेयं । तापत्रयापहं स्मरणादिना
आध्यात्मिकादितापत्रयवारकं । इतरत्रतुआधिभौतिकाख्यबाह्यतापवारकत्वमेवेतिध्येयं । अतएवातुलंगंगादितीर्थासदृशं ॥ ३॥

चित्रैःपदैश्चगंभीरैर्वाक्यैर्मानैरखंडितैः । गुरुभावंव्यंजयंतीभातिश्रीजयतीर्थवाक् ॥ ४ ॥
समुत्सार्यतमःस्तोमंसन्मार्गंसंप्रकाश्यच । सदाविष्णुपदासक्तंसेवेब्रह्मण्यभास्करं ॥ ५ ॥
ज्ञानवैराग्यभक्त्यादिकल्याणगुणशालिनः । लक्ष्मीनारायणमुनीन्वंदेविद्यागुरून्मम ॥ ६ ॥
श्रीमध्वशास्त्रदुग्धाब्धिधीमंदरमहीभृता । आमथ्योद्ध्रियतेन्यायामृतंविबुधतृप्तये ॥ ७ ॥

जयतीर्थवाक्स्तुतिव्याजेनतान्स्तौति ॥ चित्रैरिति ॥ पदानांचित्रत्वंनामाऽऽकांक्षादियुक्तत्वं । वाक्यानांगंभीरत्वंनामास्पष्टा
र्थत्वं । मानानामखंडितत्वंनामप्रतिप्रमाणराहित्यंद्रष्टव्यं । गुरोरानंदतीर्थस्ययोगुरुभावस्तं ॥ ४ ॥ स्वसंन्यासगुरुंसेवते ॥ स
मुत्सार्येति ॥ भास्करपक्षेविष्णुपदमाकाशं । " वियद्विष्णुपदंव्योमे "त्यभिधानात् ॥ ५ ॥ स्वविद्यागुरून्प्रणमति ॥ ज्ञाने
ति ॥ ६ ॥ स्वग्रंथनामाह ॥ श्रीमध्वेति ॥ प्रसिद्धाऽमृतपक्षेविबुधाःदेवाः । ग्रंथपक्षेविबुधाःपंडिताः ॥ ७ ॥ न्यायामृतो

द्धरणस्यमूलकोशैरेवशिष्यैःकर्तुंशक्यत्वाद्व्यर्थोयंभवतांश्रमइत्यतआह ॥ **विक्षिप्तेति** ॥ **अनुक्तेति** ॥ भगवत्पादटीकाकारा भ्यांकंठतोऽनुक्तमर्थादुक्तमितिव्याख्येयं । अन्यथातदुभयापेक्षयास्वस्यसार्वज्ञ्यापत्तिरितिध्येयं ॥ ८ ॥ ॥ सत्याशेषविश्वस्य कारणमित्युपक्षिप्तंविश्वस्यसत्यत्वमसहमानोमायावादीप्रत्यवतिष्ठते ॥ **नन्विति** ॥ अत्रैवकारार्थश्चिंत्यते । विशेषणसंगतोऽय मेवकारः । तस्यचविशेष्यतावच्छेदकेएवकारसमभिव्याहृतपदार्थतावच्छेदकव्याप्यत्वार्थकत्वस्यशंखःपांडुरएवेत्यादौदर्शनेन विश्वत्वेमिथ्यात्वव्याप्यत्वलाभात्सर्वोपिशंखःपांडुरइतिलाभवत्सर्वमपिविश्वंमिथ्येतिप्राप्त्यासत्याशेषविश्वस्यकारणमितियत्स

**विक्षिप्तसंग्रहात्क्वापिक्वाप्युक्तस्योपपादनात् । अनुक्त**
**कथनात्क्वापिसफलोयंश्रमोमम ॥ ८ ॥ ननुमिथ्यैवविश्वं**

त्याशेषविश्वस्यकारणत्वमुक्तंतदसदितिभावः । यद्वाविश्वमेवमिथ्येतिविशेष्यसंगतोऽयमेवकारः । तस्यचविशेष्यतावच्छे दकानवच्छिन्नेविशेषणसंबंधव्युदासार्थत्वस्यपार्थएवधनुर्धरइत्यादौदर्शनेनाऽत्रविश्वत्वानाक्रांतेब्रह्मणितुच्छेचमिथ्यात्वसंबंधव्य वच्छेदस्तदर्थः । तथाचविश्वमेवमिथ्यातत्कारणत्वंदूरोत्सारितमितिभावः । अथवैवकारःकार्त्स्न्यार्थे । जगदेवदुः खपंकनिमग्नमितिवत् । तथाचमिथ्याशब्दैवशब्दाभ्यांसत्याशेषेत्युक्तविशेषणद्वयाक्षेपलाभइत्याशयः । संप्रदायस्तुप्र माणबाधाद्यशेषप्रतिज्ञादोषोद्धारार्थोत्रैवकारः । नचैतदलौकिकं । “ मिथ्यैवभेदोविमतोभेदत्वाच्चंद्रभेदवदि ”त्यनुव्या

घटादीनांकुलालादिकर्तृकतायाःसिद्धत्वेनसिद्धसाधनतास्यात् । अतःकृत्यजन्यानीत्युक्तं । तर्हितार्किकमतेसर्वस्यापीश्वरकृतिजन्यत्वेनाऽऽश्रयासिद्धौप्राप्तायांजन्यत्वंकृतिविशेषणमुपात्तं । नहीदंसंभवति । आद्यजन्यपदस्यतार्किकरीत्याकृत्यसद्भावेपिमीमांसकरीत्यातदभावात् तस्यनिरीश्वरवादित्वेनाश्रयासिद्धेस्तेनोद्भावयितुमशक्यतयोभयसिद्धप्रयोजनाभावेनतद्वैयर्थ्यशंकायांविशेषणस्यसार्थक्येप्रयोजनवत्त्वमेवतंत्रंनतुतस्योभयसिद्धत्वमपीतियथातार्किकैःसमाधीयतेतथेहापीति । अत्रेदंचिंत्यं । यदुक्तंस्वार्थानुमितिदशायांसिद्धसाधनतावारणायविशेषणंसार्थकमितितदयुक्तं । पक्षतावच्छेदकावच्छिन्नेसर्वत्रसाध्यसिद्धेरुद्देश्यत्वपक्षेसिद्धसाधनताऽभावःपृथिवीइतरभिन्नेत्यत्रदृष्टः यथाहिघटत्वावच्छेदेनेतरभेदसिद्धावपिपृथिवीत्वरूपपक्षतावच्छेदकावच्छिन्नेसर्वत्रसाध्यसिद्धेरभावेनसिद्धसाधनतायाअभावात् । एवमिहापिशुक्तिरूप्यत्वावच्छेदेनमिथ्यात्वरूपसाध्यसिद्धावपिअसद्विलक्षणत्वेसतिब्रह्मान्यत्वावच्छेदेनसर्वत्रवियदादौमिथ्यात्वरूपसाध्यसिद्ध्यभावेनसिद्धसाधनतायाअभावादबाध्यत्वविशेषणंव्यर्थमिति । केचित्तुपक्षतावच्छेदकावच्छिन्नेयत्रकुत्रचित्साध्यसिद्धेरुद्देश्यत्वपक्षेंऽशेसिद्धसाधनतायाःसंभवाद्विशेषणंसार्थकमित्याहुः । अत्रपृथिवीइतरभिन्नेत्यस्यापिदुष्टत्वापत्तेस्तदयुक्तं । अपरेतुअसद्विलक्षणत्वेसतिब्रह्मान्यत्सत्यमितिप्रतिवादिनासाधनीयं । तत्रमायिनाशुक्तिरूप्येबाधउद्भाव्येत तदर्थमबाध्यत्वेसतीत्युक्तमित्याहुः । ननुनात्रऽबाधःसंभवति । तथाहि । यद्धर्मावच्छेदेनयस्मिन्धर्मिणिसाध्यंसाध्यतेतद्धर्मावच्छेदेनतत्रतदभावज्ञानंबाधः । यथाऽग्नित्वावच्छेदेनाग्नावनुष्णत्वंसाध्यतेतद्धर्मावच्छेदेनैवाग्नावुष्णत्वज्ञानंचेद्बाधः । नतुअग्नित्वावच्छेदेनानुष्णत्वेसाध्येद्रव्यत्वावच्छेदेनयत्रकुत्रचिदुष्णत्वज्ञानंबाधः । समानप्रकारकवि

रहज्ञानस्यैवबाधत्वात् । एवंचपक्षतावच्छेदकावच्छिन्नेसर्वत्रसाध्यसिद्धेरुद्देशत्वेनाऽसद्विलक्षणत्वेसति ब्रह्मान्यत्वावच्छेदेनसर्व
त्रप्रपंचेसत्यत्वस्यास्माभिःसाध्यमानत्वाच्छुक्तिरूप्यत्वावच्छेदेनसत्यत्वाभावस्यासिद्धत्वमादायबाधोक्त्ययोगइतिचेन्न । त्वदुक्तं
हिसंपूर्णबाधलक्षणं । यदाहिपक्षतावच्छेदकावच्छिन्नेयत्रकुत्रचित्साध्यसिद्धेरुद्देश्यत्वंतदापक्षतावच्छेदकावच्छिन्नेयत्रकुत्रचित्सा
ध्याभावस्यासिद्धौअंशेबाधः । तथाचासद्विलक्षणत्वेसतिब्रह्मान्यत्वावच्छेदेनयत्रकुत्रचित्सत्यत्वसिद्धेरुद्देश्यत्वंयदातदाऽसद्विल
क्षणत्वेसतिब्रह्मान्यत्वावच्छिन्नेयत्रकुत्रचिच्छुक्तिरूप्येसत्यत्वाभावसिद्ध्यांशेबाधोमायिनोद्भाव्यतापि । तदर्थमबाध्यत्वविशेषण
मितिनकोपिदोषः । अथाऽबाध्यत्वेसतीत्याद्युक्तौमायिमतेआश्रयासिद्धिः । तन्मतेविश्वस्यबाध्यत्वेनपक्षालाभात् । अतोब्रह्मप्र
मान्येनेत्युक्तं । तथाचतन्मतेजगतोब्रह्मप्रमाबाध्यत्वेपितदन्येनाबाध्यत्वसत्त्वान्नाश्रयासिद्धिरितिभावः । नन्वत्रनञ्द्वयंकस्मादु
पात्तंब्रह्मप्रमाबाध्यत्वेसतीत्येवकस्मान्नोक्तमितिचेदुच्यते । तथात्वेतत्ववादिमतेआश्रयासिद्धिः । तन्मतेजगतःसत्यत्वेनब्रह्मप्रमा
बाध्यत्वाभावात् । अतोनञ्द्वयगर्भता । तथाचास्मन्मतेसर्वथाऽबाध्यत्वेनविशेषणपर्यवसानं । तन्मतेतुब्रह्मज्ञानबाध्यत्वेनेति
नकोपिदोषइतिद्रष्टव्यं । नन्वत्रप्रमापदंकिमर्थंब्रह्मज्ञानान्यज्ञानाबाध्यत्वेसतीत्येवकस्मान्नोक्तमितिचेदुच्यते । ब्रह्मज्ञानान्यज्ञा
नाबाध्यत्वेसतीत्युक्तौसर्वप्रत्ययवेद्येचेत्यादिवचनान्नेदंरूप्यमितिबाधकज्ञानस्यापिशुक्त्यवच्छिन्नचैतन्यविषयकत्वेनब्रह्मज्ञानत्वा
त्तद्बाध्येअतएवब्रह्मज्ञानान्यज्ञानाबाध्येशुक्तिरूप्येमिथ्यात्वसिद्ध्यासिद्धसाधनतास्यात्तदर्थंप्रमापदं । वेदांतजन्यनिष्प्रकारकब्रह्म
ज्ञानस्यैववस्तुगत्याप्रमात्वेननेदंरूप्यमितिज्ञानस्यवस्तुगत्यातन्मतेऽप्रमात्वात् । ब्रह्मप्रमान्येनाबाध्यत्वस्यशुक्तिरूप्येऽभावेनधर्मि

कोटावप्रवेशान्नसिद्धसाधनतेतिध्येयं । अत्रयद्यपिप्रमात्वंनामनतद्वतितत्प्रकारकत्वंविवक्षितं । निर्विकल्पकाऽव्याप्तेः । ब्रह्मप्रमायानिष्प्रकारकत्वेनब्रह्मत्ववतिब्रह्मत्वप्रकारकत्वाभावात् । तथापिविशेष्यावृत्त्यप्रकारकत्वंविवक्षितंसविकल्पकप्रमायांविशेष्यवृत्तिप्रकारकत्वमादायनिर्विकल्पकायांतुसर्वथानिष्प्रकारकत्वेनलक्षणपर्यवसानं । प्रकृतेचवेदांतजन्यप्रमायाःनिर्विकल्पकरूपतयासर्वथानिष्प्रकारकत्वेनब्रह्मावृत्त्यप्रकारकत्वात्उक्तंप्रमालक्षणमस्तीतिनकोपिदोषइतिध्येयं । अथब्रह्मप्रमान्येनाबाध्यत्वेसतीत्याद्युक्तौब्रह्मण्यारोपितक्षणिकत्वेब्रह्मस्थायीतिप्रमाबाध्येब्रह्मप्रमान्येनेत्यादिविशेषणजातस्यसत्त्वेनधर्मित्वप्राप्तौतत्रमिथ्यात्वसाधनेसिद्धसाधनतास्यादित्यस्वरसादाह ॥ सप्रकारेण(रकेण)वेति ॥ तथाचनब्रह्मण्यारोपितक्षणिकत्वस्यविप्रतिपत्तिधर्मिता ।

## सप्रकारेणवा अबाध्यत्वेसतिअसद्विलक्षणत्वेसतिब्राह्मान्य

तस्यस्थायीब्रह्मेतिसप्रकारकप्रमाबाध्यत्वेनसप्रकारकेणाबाध्यत्वाभावादित्याहुः । तच्चिंत्यं । नेदमस्वरसोद्भावनंयुक्तं । तथाहि । अत्रब्रह्मप्रमाशब्देननिष्प्रकारकप्रमायाएवविवक्षितत्वेनब्रह्मस्थायीतिप्रमायाब्रह्मप्रमात्वाभावेनब्रह्मण्यारोपितक्षणिकत्वमादायसिद्धसाधनतायावक्तुमशक्यत्वात् । किंचब्रह्मप्रमेत्यत्रप्रमाशब्देनातत्वावेदकप्रमाविवक्षितोततत्वावेदकप्रमा । नाद्यः । शुक्तिरूप्यस्यापिनेदंरजतमित्यतत्वावेदकप्रमाबाध्यत्वेनातत्वावेदकब्रह्मप्रमान्येनाबाध्यत्वादेःसत्त्वेनतस्यमिथ्यात्वसाधनेपुनःसिद्धसाधनतायादुर्वारत्वापातात् । नद्वितीयः । तथात्वेब्रह्मण्यारोपितक्षणिकत्वमादायसिद्धसाधनतायावक्तुमशक्यत्वात् । ब्रह्मस्था

यीतिप्रमायाःतत्वावेदकत्वाभावेनब्रह्मण्यारोपितक्षणिकत्वेतत्वावेदकप्रमान्येनाबाध्यत्वस्याभावेनतदादायसिद्धसाधनतायाअयो
गेनसप्रकारकेणवेत्यस्यवैयर्थ्यापत्तेरिति । संप्रदायस्तु । ब्रह्मप्रमेत्यस्यहिब्रह्मविषयिणीप्रमेत्यर्थः । ब्रह्मवेदांतजन्यवृत्ति(व्या
प्यं)विषयंनेतिमतेब्रह्मप्रमायाएवाभावेनतद्घटितविप्रतिपत्त्ययोगइत्यस्वरसादाहसप्रकार(रे)केणवेति यद्वक्ष्यतिविश्वमिथ्यात्व
स्याऽनुमानबाधकथनावसरे "ब्रह्मवृत्तिव्याप्यमपिनेतिमतेनतुद्वितीयतृतीये" इति । ननुचब्रह्मान्यदित्यस्ययदिब्रह्मप्रतियोगि
कान्योन्याभाववत्त्वमर्थस्तर्ह्यसतोनिस्स्वरूपत्वेनब्रह्मप्रतियोगिकान्योन्याभावस्य धर्मिस्वरूपभूतस्यासत्यऽसंभवेन तदाऽऽदाय
बाधाऽप्रसक्तेरसद्विलक्षणत्वेसतीतिविशेषणवैयर्थ्यात् । यदिचान्योन्याभावस्यप्रतियोगितावच्छेदकात्यंताभावव्याप्यतयाब्रह्म
त्वात्यंताभाववत्त्वमर्थस्तर्हिनिर्धर्मकेब्रह्मण्यपितस्यसत्त्वेनतत्रमिथ्यात्वसाधनेबाधापत्तेः। नचब्रह्मणोनिर्धर्मकत्वेनब्रह्मत्वात्यंताभा
वाधिकरणत्वमपिनास्तीतिवाच्यं । अभावरूपाधर्मानाद्वैतंनिघ्नंतीतिमंडनमिश्रोक्तेरितिचेदुच्यते । द्वितीयपक्षांगीकारेदोषाभा
वात् । नचोक्तरीत्याबाधइतिवाच्यं । मायिकब्रह्मत्वसद्भावेनतदत्यंताभावाधिकरणत्वाभावेनतस्यपक्षबहिर्भूतत्वेनतत्रबाधाप्रस
क्तेः । अथवाऽऽद्यएवपक्षोभिप्रेतः । नचोक्तदोषः । तस्याऽसन्मतेधर्मिस्वरूपत्वेपिपरमतेतदभावेनतद्रीत्याबाधवारणायविशे
षणसार्थक्यादित्याहुः । वस्तुतस्तुब्रह्मान्यत्वंनामब्रह्मविलक्षणत्वं वैलक्षण्यंचतद्विरुद्धधर्मयोगित्वं तच्चास्त्यसति निषेधबुद्धि
विषयत्वादिरूपब्रह्मविरुद्धधर्मसद्भावात् । अतस्तदादायबाधपरिहारायासद्विलक्षणत्वेसतीत्युक्तमित्यवगंतव्यं । अथवाब्रह्मान्य
दित्यस्यब्रह्मान्यद्यस्मादित्यर्थकरणेनाऽसतोपिप्राप्त्या । तत्रबाधपरिहारायासद्विलक्षणत्वेसतीतिविशेषणस्यसार्थक्यात् । प्रति

योगित्वादिधर्माणांरूपादिवद्धर्मिसत्तासापेक्षत्वाभावादित्यालोचनीयं ॥ प्रतिपन्नोपाधाविति ॥ यस्ययदधिष्ठानत्वेनप्रतिपन्नंतत्रेत्यर्थः । (प्रतियोग्याधारत्वेनप्रतिपन्नेत्यर्थः) तुच्छेऽतिव्याप्तिवारणायेदंविशेषणं । तत्रप्रतिपन्नोपाधेरेवाभावादितिभावः । नन्वत्रनिषेधशब्दोयदिप्रागभावध्वंसान्योन्याभावपरस्तर्हितत्प्रतियोगित्वस्यघटादिप्रपंचेसत्त्वेनासिद्धसाधनताप्रसंगः । प्रागभावविवक्षायामविद्यादावनादौबाधापत्तिश्च । अतोत्यंताभावपरएववाच्यः । तथाचत्रैकालिकपदंव्यर्थमितिचेत् । अत्रकेचित् । त्रैकालिकनिषेधशब्देनाखंडवृत्त्यात्यंताभावएवविवक्षितइत्यदोषइत्याहुः । गुरुचरणास्तु । निषेधशब्दःसंसर्गाभावपरः । तथाच

त्प्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगिनवा पारमार्थिकत्वाकारेणत्रैकालिकनिषेधप्रतियोगिनवा अखंडार्थनिष्ठवेदांतजन्यनिष्प्रकारकब्रह्मप्रमाबाध्यमपिविश्वंब्रह्मप्रमान्येनवासप्रका

त्रैकालिकसंसर्गाभावोत्यंताभावएवेतिनकोपिक्षुद्रोपद्रवइतिनिरूपयंति । प्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वेसाध्येऽत्यंतासत्त्वप्राप्तिः । नचेष्टापत्तिः । असद्विलक्षणस्वरूपांगीकारात्तथाचबाधइत्यस्वरसादाह ॥ पारमार्थिकत्वेति ॥ असद्विलक्षणंव्यावहारिकंस्वरूपमनुपमृद्यपारमार्थिकत्वाकारेणनास्तीतिसाध्यतइतिनदोषइतिभावः । ब्रह्मप्रमान्येनवासप्रकारेणवेत्यनयोर्विशेषणयोःकृत्यंदर्शयति ॥ अखंडार्थेति ॥ ब्रह्मप्रमाबाध्यमपीत्युक्त्याब्रह्मप्रमान्येनाबाध्यत्वमुपपादितं । निष्प्रकारकब्रह्मप्रमेत्युक्त्यासप्रकारेणाबाध्यत्वमुपपादितं । वेदांतजन्यप्रमायानिष्प्रकारकत्वोपपादनायाखंडार्थनिष्ठेत्युक्तं । निर्विशेषार्थनिष्ठेत्यर्थः ॥

विप्रतिपत्तिरूह्येति ॥ अत्रविप्रतिपत्तिर्नामसंशयजनिकाविरुद्धार्थप्रतिपादकवाक्यद्वयरूपैवविवक्षितादृष्टव्या । ननुमूलकोशेआचार्यैःटीकाकारैर्वाकुत्रापिविप्रतिपत्तेरप्रदर्शितत्वात्तत्प्रदर्शनेभवतामकौशलंस्यादितिचेत् । सत्यं । नप्रदर्शनीयैवविप्रतिपत्तिः । तर्हिभवद्भिःकस्मात्साप्रदर्शितेतिचेत्तत्राह ॥ इदंचेति ॥ वस्तुतइति ॥ अत्यावश्यकतयेत्यर्थः । अंगीकृत्येदमुक्तं । वस्तुतस्तुतार्किकमतेपिनविप्रतिपत्तिप्रदर्शनस्यावश्यकता । कुतइतिचेन्निष्प्रयोजनत्वादितिगूढाभिसंधिराह ॥ तत्पक्षेपीति ॥

रेणवानबाध्यमितिनाश्रयासिद्धिः । एवमुत्तरत्रापिपूर्वोत्तरपक्षानुमानप्रतिज्ञेसं

कलय्यविप्रतिपत्तिरूह्या । इदंचविप्रतिपत्तिप्रदर्शनंतार्किकरीत्यैव नतुवस्तुतः।

तत्पक्षेपिविप्रतिपत्तिवाक्यस्यपक्षपरिग्रहैकफलकत्वात् । तस्यचकथाबाह्येन

ननुतर्हिकथंनिष्प्रयोजनत्वं । पक्षपरिग्रहस्यैवफलत्वादितिशंकायांतस्यान्यथासिद्धत्वेनविप्रतिपत्तिवाक्यसापेक्षत्वाभावादित्याशयमुद्घाटयति ॥ तस्येत्यादिना ॥ तस्य पक्षपरिग्रहस्यसिद्धावित्यन्वयः । लौकिकरीत्यनुसारिणाभाषारूपेणवादिवाक्येनमयाप्रपंचमिथ्यात्वंसाध्यतइतिसंस्कृतरूपेणवादिवाक्येनेत्यन्वयोदृष्टव्यः । ननुयदिकर्णाटकमहाराष्ट्रद्राविडादिभाषारूपेणवादिवाक्येनपक्षपरिग्रहरूपफलसिद्धिःतदाऽपशब्दादिनानिग्रहापत्तिः । तथायदिमयाप्रपंचमिथ्यात्वंसाध्यतइतिसंस्कृतरूपेणवादिवा

क्येनतत्सिद्धिस्तर्हिंप्रपंचशब्देनब्रह्मशुक्तिरजत(तुच्छ)योरपिप्राप्त्याबाधसिद्धसाधनतेस्यातामित्याशंकापरिहारायोक्तं ॥ **निग्रहा नर्हेणेति** ॥ तत्कुतइत्यतउक्तं । कथाबाह्येनेति । समयबंधादितःपूर्वतनेत्यर्थः । कथायामेवनिग्रहइतिभावः । उक्तकुसृष्टिःब्रह्म प्रमान्येनेत्यादिविशेषणंप्रक्षिप्यतत्प्रयोजनान्वेषणरूपा । ननुतार्किकमतेपक्षपरिग्रहरूपफलस्यान्यथासिद्ध्यातदर्थविप्रतिपत्तिवा क्यस्यवैयर्थ्येपिप्रयोजनांतरार्थंतत्सार्थकमितिचेत्तत्रविकल्पयामः । तत्प्रयोजनंसाध्योपस्थितिर्वापक्षत्वप्रयोजकसंशयोवा । तत्राद्य

**निग्रहानर्हेणलौकिकरीत्यनुसारिणासंस्कृतरूपेणवाभाषारूपेणवामयाप्रपंचमिथ्या त्वंसाध्यतइतिवादिवाक्येनवात्वयाप्रपंचमिथ्यात्वंसाध्यमितिमध्यस्थपरिकल्पि तविषयस्वीकारेणवासिद्धौप्रतिज्ञाव्यतिरिक्तस्यउक्तकुसृष्टियुक्तस्यविप्रतिपत्तिवा क्यस्यवैयर्थ्यात् । नचसाध्योपस्थित्यर्थंतत् । प्रतिज्ञयैवतत्सिद्धेः । नचपक्षत्वप्रयो जकसंशयार्थंतत् । वादिप्रतिवादिनोःप्राश्निकानांचनिश्चयवत्त्वेनतदयोगात् ।**

माशंक्यनिराकरोति ॥ **नचसाध्येति** ॥ तत्विप्रतिपत्तिवाक्यं । हेत्वभिधानप्रयोजकाकांक्षाजनकत्वेनसाध्योपस्थितेरावश्यक त्वादितिभावः । द्वितीयमाशंक्यनिराचष्टे ॥ **नचपक्षत्वेति** ॥ पक्षतायाःसंदेहघटितत्वादितिभावः । यथाहुःपदार्थविदः । “संदिग्धसाध्यधर्माधर्मीपक्ष” इति । पक्षत्वप्रयोजकसंशयोपिनबाद्यादीनामित्याह ॥ **वादीति** ॥ तथाचनिश्चायकप्रमाणरूप

विशेषदर्शनसद्भावेनविशेषादर्शनाख्यहेत्वभावान्नविप्रतिपत्तिवाक्यस्यबाधादिसंशयाधायकत्वमितिभावः । ननुविशेषदर्शनसद्भावेनबाधादीनांस्वारसिकसंशयासंभवेप्याहार्यसंशयाधायकत्वेनविप्रतिपत्तिवाक्यस्यपक्षत्वप्रयोजकत्वंसंभवति । तस्यविशेषदर्शनाप्रतिबद्धत्वादित्यतआह ॥ आहार्येति ॥ अतिप्रसंगेनेति ॥ अनुमित्युत्तरकालेसिद्धिस्थलेसिषाधयिषाविरहदशायामप्याहार्यसंशयसंभवेनपक्षत्वापत्त्यानुमित्यापत्तिरित्यतिप्रसंगेनेत्यर्थः । वैयात्यादिष्टापत्तौचोदितायामाह ॥ विप्रतिपत्तीति ॥ आहार्यसंशयस्येत्येतदनुवर्तते । ननुबाधादीनांनिश्चयवत्त्वेनविप्रतिपत्तिवाक्यस्यबाधादिषुस्वारसिकसंशयाधायकत्वंनास्तीत्युक्त

आहार्यसंशयस्यचातिप्रसंगे(गित्वे)नपक्षत्वाप्रयोजकत्वात् । विप्रतिपत्तिवाक्यानपेक्षत्वाच्च । संशयंविनापिसिषाधयिषाविरहसहकृतसाधकमाना(साधकबाधकप्रमाणा)भावरूपस्यपक्षत्वस्यसंभवाच्च ।

मयुक्तं । तथात्वेकथायांवादिनाप्रतिवादिनंप्रतिप्रतिवादिनावादिनंप्रत्यनुमानेप्रयुक्तेअनुमितिरेवनस्यात् । संदेहघटितपक्षतायाअनुमितिजनिकायाअभावादित्यतआह ॥ संशयमिति ॥ सिषाधयिषाविरहेति ॥ ननुसर्वत्रानुमानरूपसाधकप्रमाणस्यैवसत्त्वेनतदभावादसंभवइतिचेदुच्यते । साधकमानपदस्यानुमानातिरिक्तसाधकमानपरत्वात् । तथाचसिषाधयिषाविरहसहकृतानुमानातिरिक्तसाधकमानरूपविशिष्टस्याभावःसर्वत्रानुगतः । तथाहि । सिद्धिस्थलेनुमानातिरिक्तप्रत्यक्षरूपसाधकमानरूप

विशेष्यस्यसत्त्वेपिविशेषणाभावेनविशिष्टस्याभावोस्ति । महानसेवह्निमनुमिनुयामितिसिषाधयिषयाह्यनुमानंतत्रप्रवर्तते । धूमानुमानस्थलेविशेषणमस्ति । सिद्धिस्थलएवहिसिषाधयिषा नसर्वत्र । इच्छायाज्ञानसाध्यत्वमेवनत्वनुमित्यादिरूपज्ञानस्येच्छासाध्यत्वं । सत्यांसामग्र्यामिच्छाभावेनज्ञानानुदयाभावात् । अन्यथाऽनिच्छतोपिदुर्गंधज्ञानंनस्यात् । तस्मात्तत्रविशेषणसद्भावेपिविशेष्याभावाद्विशिष्टाभावः । एवमेवघनगर्जितस्थलेपिद्रष्टव्यं । यथोक्तमनुमानप्रकाशे रुचिदत्तोपाध्यायेन । "साधकमानपदमनुमानातिरिक्तसाधकमानपरंवेति" । एवंविप्रतिपत्तिवाक्यस्याफलत्वेनानावश्यकत्वमुपपाद्यपरपक्षेप्रमाणमुत्थापयति ॥ प्र

**प्रमाणंचात्रानुमानं । विमतंमिथ्या "दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वाच्छुक्तिरूप्यवत्" इत्यानंदबोधोक्तेः । "अयंपटःएतत्तंतुनिष्ठात्यंताभावप्रतियोगीपटत्वादंशित्वात्पटांतरवत्" इतितत्वप्रदीपोक्तेः ।**

**माणंचेति** ॥ प्रकृतत्वानुसंधानार्थश्चशब्दः । तथाहीत्यत्रहीत्यनेनात्रविश्वमिथ्यात्वेयत्प्रतिज्ञातंप्रमाणं तच्चानुमानरूपमित्यर्थः । अनुमानंप्रमाणमितिकुतोवगतमित्यतआह ॥ **विमतमित्यादि** ॥ आनंदबोधोक्तेर्हेतोरत्रानुमानंप्रमाणमित्येतदवगम्यतइतियोज्यं । एवंतत्वप्रदीपोक्तेरित्येतदपिव्याख्येयं । **एतत्तंतुनिष्ठेति** ॥ एतत्पटस्येतरत्राभावःसिद्धएवास्तिएतत्तंतुष्वप्यभावसाधनेमिथ्यात्वमेवसिद्ध्यतीतिभावः । ननुविमतमित्यत्रपक्षतावच्छेदिकाविमतिर्नामविरुद्धार्थप्रतिपादकंवाक्यद्वयंसंशयरूपंज्ञानंवेति

वक्तव्यं । तयोश्चकथंप्रपंचनिष्ठपक्षतावच्छेदकत्वं । वाक्यस्यशब्दरूपत्वेनगगनमात्रनिष्ठतयापक्षतान्यूनवृत्तित्वात् । संशयरूपज्ञानस्यचपक्षताशून्यात्मनिष्ठत्वेनाधिकवृत्तित्वादितिचेत्सत्यं । वाक्यद्वयस्यापिप्रपंचेप्रतिपाद्यप्रतिपादकभावसंबंधेनसंशयरूपज्ञानस्यचविषयविषयिभावसंबंधेनसत्त्वसंभवेनदोषाभावात् । नन्वत्रनविमतिःपक्षतावच्छेदिका । तस्याःब्रह्मतुच्छविषयकत्वरूपातिप्रसंगपरिहारायावच्छेदकसापेक्षत्वेनयदवच्छेदकमुच्यतेब्रह्मप्रमान्येनेत्यादिकंतस्यैवपक्षतावच्छेदकत्वमस्तु किंतज्ज्ञानाधीनज्ञानायाविमतेःपक्षतावच्छेदकत्वोक्त्या व्यर्थत्वादित्याशंक्यशरीरलाघवादियमेवपक्षतावच्छेदिकेत्याह ॥ यद्यपीत्यादिना ॥

यद्यपिविमतिरपिनियतविषयत्वायावच्छेदक(कांतर)सापेक्षा । त
थापिसावयवत्वसाधितेनकार्यत्वेनपृथिव्याःसकर्तृकत्वसाधनमिव
स्वनियामकनियतयालब्ध्याविप्रतिपत्त्यापक्षतावच्छेदोनविरुद्धः ।

नियतविषयत्वायब्रह्मतुच्छाऽविशेष्यकावियदादिप्रपंचमात्रविशेष्यकाविमतिरितिनियतविषयत्वायेत्यर्थः ॥ अवच्छेदकेति ॥ ब्रह्मप्रमान्येनेत्याद्यवच्छेदकेत्यर्थः । तथाचतस्यैवपक्षतावच्छेदकत्वमस्त्वितिभावः । तथापिस्वनियामकनियतयाविप्रतिपत्त्याविमत्यापक्षतावच्छेदोनविरुद्धइत्यन्वयः ॥ स्वनियामकेति ॥ स्वस्याःविमतेःनियतविषयत्वेनियामकंयद्ब्रह्मप्रमान्येनेत्यादिकंतन्नियतयाब्रह्मतुच्छाविषयकत्वेननियतविषययेत्यर्थः । तत्रहेतुर्लब्ध्येति । स्वनियामकनियतस्यापिप्रयोगोदृष्टइत्याशयेनोक्तं ।

स्वावयवत्वेति । व्याप्यव्याप्यस्यसुतरांव्याप्यत्वात्कार्यत्वव्याप्येनसावयवत्वेनैवसकर्तृकत्वसाधनोपपत्तौकार्यत्वरूपहेतूक्तिर्व्य र्थेत्याशंकायांगौरवात्सावयत्वमप्यप्रयुज्यलाघवात्तत्साधितंकार्यत्वमेवप्रयुज्यतेतद्वदित्यर्थः । ननुविमतेःशरीरलाघवेपिप्रतिपत्ति गौरवान्नपक्षतावच्छेदकत्वं । शब्दगौरवापेक्षयाप्रतिपत्तिगौरवस्यज्यायस्त्वादतोविप्रतिपत्तिधर्मितावच्छेदकमेवानुमानेपक्षताव च्छेदकमस्त्वित्यस्वरसादाह ॥ यद्वेति ॥ विप्रतिपत्त्याविमतिरेवपक्षतावच्छेदिका । नचविप्रतिपत्तिधर्मितावच्छेदकमेवात्रपक्ष तावच्छेदकमस्त्वितिवाच्यं । स्यादिदं यदिब्रह्मप्रमान्येनेत्यादिरूपेणादौविप्रतिपत्तिमुक्त्वाविमतंमिथ्येतिप्रयुज्येत । नचैवं ।

यद्वापृथिवीसत्यामिथ्यावाजलंसत्यंमिथ्यावेत्यननुगत
धर्म्याश्रयाअनुगताविप्रतिपत्तिःपक्षतावच्छेदिका ।

किंतुपृथिवीसत्यामिथ्यावेत्याद्यननुगतधर्म्याश्रयांविप्रतिपत्तिमादौप्रदर्श्यपश्चाद्विमतंमिथ्येत्यादिप्रयुज्यते । तथाचविप्रतिपत्तौ यद्धर्मितावच्छेदकंपृथिवीत्वादिकंतस्याननुगतत्वान्नपक्षतावच्छेदकत्वंयुक्तं । नचविमतेरप्यननुगतत्वान्नतस्याअपिपक्षतावच्छे दकत्वंयुक्तमित्यतउक्तं ॥ अनुगतेति ॥ अननुगतानामपिविमतीनांविश्वधर्मिकसत्यत्वमिथ्यात्वकोटिकविमतित्वेनानुगतीकृ तानांपक्षतावच्छेदकत्वसंभवात् । नचैवंविप्रतिपत्तिधर्मितावच्छेदकभूतानांपृथिवीत्वादीनामननुगतानामपिसत्यत्वमिथ्यात्वकौ टिकविप्रतिपत्तिधर्मितावच्छेदकत्वेनानुगतानांपक्षतावच्छेदकत्वंयुक्तमितिवाच्यं । सत्यत्वमिथ्यात्वकोटिकविमतित्वाऽपेक्षया

सत्यत्वमिथ्यात्वकोटिकविप्रतिपत्तिधर्मितावच्छेदकत्वस्यचानुगमकस्यगुरुत्वात् । अतोलाघवाद्विमतिरेवपक्षतावच्छेदिकेति भावः । ननुविमतेःपक्षतावच्छेदकत्वेपक्षतावच्छेदकसामानाधिकरण्येनसाध्यसिद्धेरुद्देश्यत्वात्पक्षतावच्छेदकीभूतायाश्चविमतेः समयबंधादिनाव्यवहितत्वेनानुमानकालेऽभावान्नानुमानेनतत्सामानाधिकरण्येनसाध्यसिद्धिरूपोद्देश्यसिद्धिरित्याशंक्यसमाध त्ते ॥ यद्यपीत्यादिना ॥ सैवेति ॥ विमतिरेवेत्यर्थः । श्यामत्वोपलक्षितोरक्तइतिवद्विमतंविमतिविषयत्वोपलक्षितंमिथ्येत्ये वंविमतेरुपलक्षणतयापक्षतावच्छेदकत्वंयुक्तमित्यर्थः । पक्षांतरमाह ॥ तज्ज्ञानंवेति ॥ विमतिविषयत्वज्ञानंवेत्यर्थः । समय

यद्यपिविमतिस्समयबंधादिनाव्यवहितत्वान्नानुमानकालेस्ति । तथापिसैवो
पलक्षणतयातज्ज्ञानंवाविशेषणतया(पक्षता)वच्छेदकमस्तु । अतएवविमत
मित्येवप्राचांप्रयोगः । नतुवियदादीत्येवपक्षनिर्देशः । अवच्छेदकाभावेऽ

बंधाद्यनंतरंविमतिविषयत्वज्ञानंस्मृतिरूपंतदुत्तरक्षणेचपरामर्शः । तदुत्तरक्षणेऽनुमितिरित्यंगीकारेणविमतिविषयत्वज्ञानस्यैव विनश्यदवस्थस्यानुमानकालवृत्तित्वेनपक्षतावच्छेदकत्वंयुक्तमितिभावइत्याहुः । गुरुचरणास्तु । तज्ज्ञानंवेत्यस्यात्रास्माकंविम तिर्जाताऽभूदित्येवंरूपविमतिविषयत्वज्ञानमनुव्यवसायरूपमित्यर्थः । एवंरूपंचज्ञानमस्मन्मतेसाक्षिरूपमितितस्यानुमितिकाले जागरूकत्वाद्युक्तंविशेषणत्वमित्युपदिशंति । विमतेरेवपक्षतावच्छेदकत्वेवृद्धसंमतिमाह ॥ अतएवेति ॥ विमतेरेवपक्षताव च्छेदकत्वसिद्ध्यर्थमवच्छेदकांतराणिनिराचष्टे ॥ नत्वित्यादिना ॥ अवच्छेदकाभावइति ॥ आदिपदग्राह्यतावच्छेदकाभा

वइत्यर्थः ॥ असंकुचितेनेति ॥ ब्रह्मतुच्छसंग्रहाविरोधित्वादितिभावः । प्रपंचशब्दस्यविश्वविस्तारवाचित्वात्प्रपंचोविश्वविस्तारस्तत्समुदायइतियावत् । सःपक्षीभूतोविश्वसमुदायःसमुदायिनान्यःतत्स्वरूपोवेत्याशंक्याद्येदोषमाह ॥ प्रपंचशब्देनेति ॥ वियदादिविश्वान्योयस्तत्समुदायइत्यर्थः ॥ वियदादीति ॥ समुदायस्यैवमिथ्यात्वंप्राप्तमितिभावः । समुदायस्यसमुदाय्यनतिरिक्तत्वाद्वियदादिविश्वस्यैवपक्षत्वमितिद्वितीयपक्षेत्वाह ॥ वियदादीनामेवेति ॥ अवच्छेदकेति ॥ आदिपदग्राह्यतावच्छेदकेत्यर्थः ॥ उक्तदोषादिति ॥ असंकुचितेनादिपदेनात्मादेरपिग्रहणापातादित्युक्तदोषादित्यर्थः । ननुवियदित्ये

संकुचितेनादिशब्देनआत्मादेरपिग्रहणप्रसंगात् । नापिप्रपंचइत्येवपक्षनिर्देशः । प्रपंचशब्देनवियदाद्यन्यतत्समुदायोक्तौवियदादिमिथ्यात्वासिद्धेः । वियदादीनामेवोक्तावव‍च्छेदकाभावेनोक्तदोषात् । नापिवियदित्येवपक्षनिर्देशः । घटादिस्तुपक्षतुल्यइतिवाच्यं ।

वपक्षनिर्देशःकर्तुंनशक्यते । तथात्वेघटादेःपक्षबहिर्भावेनतत्रदृश्यत्वसत्त्वेपिमिथ्यात्वाभावेनव्यभिचारापत्तेरित्यतआह ॥ घटादिस्त्विति ॥ नहिपक्षेपक्षतुल्येवाव्यभिचारइत्याशयः । कुतोनवाच्यमितिचेदुच्यते । घटादेःपक्षतुल्यत्वेननिश्चितव्यभिचाराभावेपिसंदिग्धानैकांत्यंस्यादेव । ननुसंदिग्धानैकांत्यमपिकथं । निश्चितसाध्याभाववतिहेतुसंदेहरूपस्यतल्लक्षणस्याभावात् । घटादौसाध्याभावस्यसंदिग्धत्वाद्धेतोर्निश्चितत्वादितिचेन्न । निश्चितसाध्याभाववतिहेतुसंदेहइवनिश्चितहेतुमतिसाध्यसंदेहेपिसं

दिग्धानैकांत्यात् । व्यभिचारोहिहेतुसत्त्वसाध्याभावरूपव्यंशः । तयोर्मध्येएकस्यनिश्चयेऽपरस्यसंदेहेसंदिग्धानैकांत्यं । घटादौतुहेतोर्निश्चयात्साध्यस्यचसंदिग्धत्वात्संदिग्धानैकांत्यमपरिहार्यमित्याह ॥ **निश्चितेति** ॥ नन्वस्यसंदिग्धानैकांत्यलक्षणत्वे अनुमानमात्रोच्छेदः । सर्वानुमानेसाध्यसंदेहस्यांगत्वादित्यतउक्तं ॥ **पक्षादन्यत्रेति** ॥ पक्षादन्यत्रनिश्चितहेतुमतिसाध्यसंदेहेपीत्यन्वयः । पक्षएवसाध्यसंदेहस्यांगत्वंतदन्यत्रतुसाध्यसिद्धिरेवांगं । तथाचघटादेःपक्षादन्यत्वात्तत्रचहेतोर्निश्चितत्वात्साध्यस्यचसंदिग्धत्वात्संदिग्धानैकांत्यमेव । नचसंदिग्धसाध्यवत्त्वेनघटादेरपिपक्षत्वमेवनपक्षादन्यत्वमितिवाच्यं । संदिग्धसाध्यवत्त्वंपक्षत्वमिहनाभिप्रेतंयत्रसिद्धिस्थलेसिषाधयिषायामनुमानप्रवृत्तिस्तत्रत्येपक्षेऽव्याप्त्यापत्तेः । किंनामप्रतिज्ञाविषयत्वं । तच्चघ

**पक्षादन्यत्रनिश्चितसाध्याभाववतिहेतुसंदेहइवनिश्चितहेतुमतिसाध्यसंदेहेपिसंदिग्धानैकांत्यात् ।**

**प्रतिज्ञांप्रत्यविषयेघटेस्वार्थानुमानानुगतस्यसाधकबाधकप्रमाणविरहरूपपक्षत्वस्य**

टादौनास्तीतिपक्षादन्यत्वमेवेत्याशयः । ननुतथापिनसंदिग्धानैकांत्यं । घटादेःपक्षादन्यत्वाभावात् । नचप्रतिज्ञाविषयत्वरूपलक्षणानाक्रांतत्वात्पक्षादन्यत्वंघटादेरितिवाच्यं । अस्यपक्षलक्षणत्वेस्वार्थानुमितिपक्षेव्याप्तेः । तत्रावयवप्रयोगाभावेनपक्षवचनरूपप्रतिज्ञायाएवाभावात् । अतःस्वार्थानुमानपक्षसाधारण्यायसाधकबाधकप्रमाणाभावएवपक्षत्वमितिवाच्यं । तथाचघटेमिथ्यात्वसाधकस्यप्रमाणस्यैतदनुमानव्यतिरिक्तस्याभावान्मिथ्यात्वबाधकप्रमाणाभावाच्चास्तिपक्षत्वमितिपक्षादन्यत्वघटितसंदिग्धानैकांत्यलक्षणाभावान्नघटेव्यभिचारोस्तीतिवियदित्येवपक्षनिर्देशोस्त्वित्याशंक्यनिराकरोति ॥ **प्रतिज्ञामिति** ॥ प्रतिज्ञा

विषयत्वंपक्षत्वं । नचसाध्येतिव्याप्तिः । प्रतिज्ञाविशेष्यत्वमित्यर्थकरणात् ॥ सत्त्वेपीति ॥ तथाचनपक्षादन्यत्वमस्तीतिनसंदिग्धानैकांत्यमितिवियदित्येवास्तुपक्षनिर्देशइत्याशयः ॥ एवंपक्षनिर्देशस्येति ॥ वियदित्येवपक्षनिर्देशस्येत्यर्थः ॥ घटादिसाधारणेति ॥ ब्रह्मप्रमान्येनेत्यादिरूपेत्यर्थः । तथाचवियन्मात्रस्यपक्षत्वेपिउक्तविधयानघटेसंदिग्धानैकांत्यं । तथापिघटादिसाधारणविप्रतिपत्त्यनुसारेणैवपक्षनिर्देशेकर्तव्येतद्बहिर्भावेनवियन्मात्रस्यैवपक्षतयानिर्देशस्याकौशलव्यंजकत्वादितिभावः । ननुविप्रतिपत्तिधर्मितावच्छेदकस्यैवानुमानेपक्षतावच्छेदकतायाउक्तरीत्यासंभवेपिअनुमानेयापक्षतावच्छेदिकालघ्वीविमतिःसैव

**सत्वेपिएवं(विध)पक्षनिर्देशस्यघटादिसाधारणविप्रतिपत्त्य**
**नानुगुण्याच्च । विप्रतिपत्तौतुनविमतिर्धर्मितावच्छेदिका**

विप्रतिपत्तौधर्मितावच्छेदिकास्तु । अतःकिमुक्तकुसृष्टियुक्तब्रह्मप्रमान्येनेत्यादिधर्मितावच्छेदकाश्रयणेनेत्यतआह । विप्रतिपत्तौत्विति । अनुगतावच्छेदकमंतरेणविमतेर्नियतविषयत्वासंभवादनुगतावच्छेदकेनानुगतानियतविषयाविमतिरेवविप्रतिपत्तौधर्मितावच्छेदिकेतिवक्तव्यं । तत्रानुगमकोधर्मःकिंप्रमान्येनेत्याद्युक्तरूपोवाविमतिरेववा । नाद्यः । उक्तकुसृष्टियुक्तत्वेनतदनादरणात् । आदरेवासएवविप्रतिपत्तौधर्मितावच्छेदकोस्तुकृतंतद्ब्रह्माधीनग्रहयाविमत्याधर्मितावच्छेदकत्वेनकल्पितया । नद्वितीयः । विमत्यानुगतीकृताविमतिर्धर्मितावच्छेदिकेत्युक्तौस्वेनानुगतीकृतस्यस्वस्यैवधर्मितावच्छेदकत्वप्राप्त्याआत्माश्रयस्यस्पष्टत्वादिति ॥ १२ ॥

भावेनाह ॥ आत्माश्रयादिति ॥ एतत्पटानाद्यभावत्वादिति ॥ मृत्पिंडनिष्ठेघटध्वंसेव्यभिचारवारणायानादीतिविशेषणं । मृत्पिंडनिष्ठघटप्रागभाववारणायपटेति । पटांतरप्रागभाववारणायैतदिति ॥ एतत्पटान्योन्याभाववदिति ॥ एतत्तंतुरेतत्पटोनेतिप्रतीतेरितिभावः । ननुतर्हिएतत्पटाभावत्वादित्येवास्तु । नचैतत्पटध्वंसेव्यभिचारइतिवाच्यं । एतत्पटध्वंसेसाध्यस्यापिसत्त्वेनव्यभिचाराभावात् । अतोनादीतिपदंव्यर्थमितिचेत्तत्राह ॥ तंत्विति ॥ समवायिकारणनाशजन्यकार्यनाशेउक्त

आत्माश्रयात् । नवीनास्तुएतत्पटात्यंताभावःएतत्तंतुनिष्ठःएतत्पटानाद्यभावत्वात् एतत्पटान्योन्याभाववत् । (एतत्तं)तंतुनाशजन्यस्य(स्यैतत्प)पटनाश(स्यैतत्तं)स्य तंत्ववृत्तित्वादनादीतिविशेषणं । विमतंवाब्रह्मप्रमान्यैनेत्यादिविप्रतिपत्तिवाक्योक्तविशेषणत्रयवत्वेसतिअव्याप्यवृत्तित्वानधिकरणंवास्वसमानाधिकरणात्यंताभावप्रतियोगि । अनात्मत्वात्संयोगवदिति । अत्रचपक्षधर्मताबलान्मिथ्यात्वसिद्धिः ।

हेतोःसत्त्वेपिसाध्याभावाद्व्यभिचारःस्यात् । अतोनादीतिविशेषणमित्यर्थः । विमतंवा स्वसमानाधिकरणेत्यन्वयः । वक्ष्यमाणसाध्यवत्त्वतदभावाभ्यांविमतमित्यर्थः । प्रकारांतरेणपक्षंनिर्दिशति ॥ ब्रह्मेत्यादि ॥ अव्याप्यवृत्तित्वमादायार्थांतरतापरिहारायाव्याप्यवृत्तित्वानधिकरणमित्युक्तं । इदंचपक्षद्वयेपिज्ञेयं । ननुकथमनेनमिथ्यात्वसिद्धिरित्यतआह ॥ अत्रचेति ॥ अ

व्याप्यवृत्तित्वानधिकरणमितिपक्षविशेषणबलात्अव्याप्यवृत्तित्वेनपक्षेसाध्योपसंहारायोगेनस्वसमानाधिकरणव्याप्यवृत्त्यत्यंता भावप्रतियोगित्वरूपंमिथ्यात्वमेवपक्षेसिद्ध्यतीत्यर्थः । अत्रोत्तरत्रचपक्षधर्मबलादित्येवपाठः । पक्षधर्मताबलादितिपाठेतुस्वार्थे तल्प्रत्यययोर्व्याख्येयः । विमतमित्येवोक्तौनित्यद्रव्यात्यंताभावस्यकेवलान्वयित्वे(नावृत्तित्वेनापिपर्यवसानोपपत्तेरर्थांतरतास्या दित्यतउक्तं ॥ नित्यद्रव्यान्यदिति ॥ वृत्तिमदित्यर्थः ।) नसिद्धसाधनतापत्तेर्विमतमित्येतद्विवृणोति ॥ नित्यद्रव्यान्यदि ति ॥ वृत्तिमदित्यर्थः । दृष्टांतेसाध्यवैकल्यंपरिहरति ॥ तार्किकमतइति ॥ अवृत्तित्वेनेति ॥ समवायेनसंबंधेनकुत्राप्य

विमतंनित्यद्रव्यान्यत्केवलान्वय्यत्यंताभावप्रतियोगिपदार्थत्वात् । नित्यद्रव्यवत् ।
तार्किकमतेनित्यद्रव्याणामवृत्तित्वेनतदत्यंताभावःकेवलान्वयीतिनदृष्टांतःसाध्य
विकलः । अतएवनात्मनिव्यभिचारः । मिथ्यात्वसिद्धिस्तुपक्षधर्मताबलात् ।

वृत्तित्वेनेत्यर्थः । आत्मनिव्यभिचारशंकामपाकरोति ॥ अतएवेति ॥ नित्यद्रव्याणामवृत्तित्वेनतदत्यंताभावस्यकेवलान्वयि त्वादेवेत्यर्थः । आत्मनोपिनित्यद्रव्यतयाऽवृत्तित्वेनतदत्यंताभावस्यापिकेवलान्वयित्वेनसाध्यस्यापिसत्त्वादित्यर्थः । ननुकथम नेनमिथ्यात्वसिद्धिःनित्यत्वेनापिसाध्यपर्यवसानोपपत्तेरित्यतआह ॥ मिथ्यात्वसिद्धिस्त्विति ॥ वृत्तिमत्त्वार्थकनित्यद्रव्या न्यत्वेनपक्षविशेषणात्अवृत्तित्वमादायपक्षेसा(ध्यपर्यवसानायोगात्)ध्योपसंहारायोगात् । स्वसमवायिकारणवृत्तिमतामपिप

दार्थानांअत्यंताभावस्यकेवलान्वयित्वेसाधितेसतिस्वसमवायिकारणेपितदत्यंताभावप्राप्त्यामिथ्यात्वसिद्धिरितिभावः ॥ आत्म त्वावच्छिन्नेति ॥ आत्मत्वावच्छिन्नधर्मिताकात्मेभदप्रतियोगिनःप्रपंचस्यापारमार्थिकत्वसिद्ध्यामिथ्यात्वसिद्धिरितिद्रष्टव्यं । आत्मानात्मानौशुक्तिरूप्यंनेतिप्रतीतेःशुक्तिरूप्यप्रतियोगिकेआत्मानात्मधर्मिकेभेदेसिद्धसाधनत्ववारणायात्मभेदइत्यनुक्त्वाआ त्मत्वावच्छिन्नधर्मिताकोभेदइत्युक्तं । आत्मत्वेनव्यावर्तिता याधर्मिता तत्कःतद्वानित्यर्थः । तस्मिंश्चभेदेनात्मत्वंधर्मितावच्छे दक मनात्मन्य(वृत्तित्वे)भावेनन्यूनवृत्तित्वात्किंतुद्वित्वमेवेतिभावः ॥ अनात्ममात्रेति ॥ शुक्तिरूप्यमात्मानात्मानौनेतिप्रती

आत्मत्वावच्छिन्नधर्मिताकोभेदोनपरमार्थसत्प्रतियोगिकः । अना
त्ममात्रप्रतियोगिकत्वात् । शुक्तिरूप्यप्रतियोगिकभेदवदित्याहुः ।
मिथ्यात्वंचयद्यपिनात्यंतासत्वं अपसिद्धांतात् । नाप्यनिर्वाच्यत्वं

तेःशुक्तिरूप्यधर्मिकेआत्मानात्मप्रतियोगिकेभेदेपरमार्थसदात्मप्रतियोगिकत्वसद्भावेनसाध्याभावाद्व्यभिचारवारणायमात्रपदं ॥ शुक्तिरूप्येति ॥ तत्प्रतियोगिकात्मधर्मिकभेदवदित्यर्थः । अत्रसामान्यंपक्षःविशेषोदृष्टांतइत्यवधेयं । मिथ्यात्वंपंचधानिर्व क्तुंसंभावितप्रकारानाशंक्यस्वयमेवदूषयति ॥ मिथ्यात्वंचयद्यपीति ॥ यद्यपीत्यस्यव्यवहितेनाग्रेतनेनतथापीत्यनेनसंबंधः ॥ अपसिद्धांतादिति ॥ मिथ्यात्ववादिभिरस्माभिःप्रपंचस्यासद्वैलक्षण्यांगीकारा(दत्यंतासत्वसाधनेतत्ववादिभिरपसिद्धांतउ

द्धाव्येतेत्यर्थः)दित्यर्थः ॥ अप्रसिद्धेरिति ॥ सत्यत्ववादिनानिर्वाच्यवस्त्वनंगीकारेण(अस्माभिरेतादृश)मयैतादृशमिथ्यात्वसा धनेऽप्रसिद्धविशेषणतांमांप्रतिदद्यादित्यर्थः । एवमेवोत्तरत्रापिद्रष्टव्यं ॥ निर्धर्मकत्वरूपहेतोरिति ॥ ब्रह्मसत्त्वानधिकरणंन भवतिनिर्धर्मकत्वादित्यत्रनिर्धर्मकत्वरूपहेतोःपक्षेसत्त्वेनिर्धर्मकत्वरूपधर्मस्यैवप्राप्त्यानिर्धर्मकत्वहेतुनाव्याघातः । निर्धर्मकत्वस्यप क्षेऽभावेसधर्मकत्वस्यैवप्राप्त्यानिर्धर्मकत्वहेतुनाव्याघातः । एवंसत्त्वानधिकरणत्वाभावरूपसाध्यस्यपक्षेसत्त्वेतादृशसाध्यरूपधर्म

अप्रसिद्धेः । नापिसद्विविक्तत्वं सतोपिसदंतरविविक्तत्वात् । नापिसत्वानधिकरणत्वं निर्धर्मकेब्र ह्मण्यपिसत्वात् । नचनिर्धर्मकत्वादेवतत्रसत्वानधिकरणत्वमपिनेतिवाच्यं । निर्धर्मकत्वरूपहेतोः सत्वानधिकरणत्वाभावरूपसाध्यस्यचभावाभावाभ्यांव्याघातेनाभावरूपधर्मनिषेधायोगात् । अ न्यथाऽसत्वानधिकरणत्वस्यापितत्राभावेनतद्व्यावृत्त्यर्थमनिर्वाच्यलक्षणेसत्वानधिकरणत्वरूपवि शेषणायोगात् । नचप्रमित्यविषयत्वंमिथ्यात्वं । ब्रह्मतुवेदांतजन्यवृत्तिव्याप्यमितिवाच्यं ।

स्यैवलाभेननिर्धर्मकत्वहेतुनाव्याघातएव । तादृशसाध्यरूपधर्माभावेसत्त्वानधिकरणत्वरूपधर्मस्यैवप्राप्त्यापुनर्निर्धर्मकत्वहेतुना व्याघातएवेत्यर्थः ॥ अभावरूपेति ॥ तथाचसत्त्वानधिकरणत्वरूपेऽभावरूपधर्मेब्रह्मण्यंगीकार्येमिथ्यात्वलक्षणमतिव्याप्तमि त्यर्थः । ब्रह्मण्यभावरूपधर्मानंगीकारेबाधकमाह ॥ अन्यथेति ॥ तत्र ब्रह्मणि । अनिर्वाच्यलक्षणे सदसत्त्वानधिकरणत्वरूपे मिथ्यात्वलक्षणे ॥ ब्रह्मत्विति ॥ तथाचवेदांतजन्यवृत्तेःप्रमितित्वान्नब्रह्मण्युक्तलक्षणस्याऽतिव्याप्तिरितिभावः । शुक्तिरूप्या

दावसंभवीदंलक्षणमित्याह ॥ शुक्तीति ॥ अनुव्यवसायमिति ॥ शुक्तिरूप्यज्ञानवानहमित्यनुव्यवसायंप्रतीत्यर्थः । ननु साक्षात्प्रमित्यविषयत्वंमिथ्यात्वंविवक्षितं । शुक्तिरूप्यादिकंतुव्यवसायद्वारैवाऽनुव्यवसायरूपप्रमितिविषयः । नसाक्षात् । अतोनासंभवइत्यतआह ॥ साक्षाचेति ॥ सत्वप्रकारकेति ॥ बाधकज्ञानरूपप्रमांप्रतिनिषेध्यत्वेनसाक्षाद्विषयत्वादसंभवपरिहारायसत्वप्रकारकेत्युक्तंअनुव्यवसायरूपसत्त्वप्रकारकप्रमांप्रतिव्यवसायद्वाराविषयत्वेनाऽसंभवपरिहारायसाक्षादित्युक्तं ॥ आवश्यकत्वादिति ॥ (आवश्यकत्वादिति । घटादीनांसत्वप्रकारकप्रमांप्रतिसाक्षाद्विषयत्वमस्तिरूप्यादौनास्तीतितावत्सिद्धं ।

शुक्तिरूप्यादेरपिव्यवसायद्वारा अनुव्यवसायंप्रतिसाक्षाच्चबाधकज्ञानंप्रतिमिथ्यात्वनिषेध्यत्वेनविषयत्वात् । सत्वप्रकारकप्रमांप्रतिसाक्षादविषयत्वंचेदावश्यकत्वात्सत्वाभावएवमिथ्यात्वंस्यात् । नापिभ्रांतिविषयत्वं । ब्रह्मणोप्यधिष्ठानत्वेनतद्विषयत्वात् ।

तत्रकिंनियामकमितिपृष्टेघटादौसत्वस्यविद्यमानत्वात्सत्वप्रकारकप्रमांप्रतिसाक्षाद्विषयत्वमस्ति । शुक्तिरूप्यादौतदभावान्नास्तीत्युत्तरंवक्तव्यं। तथाचसत्वप्रकारकप्रमांप्रतिसाक्षादविषयतावच्छेदकतयासत्वाभावस्यावश्यकत्वात्सत्वाभावएवमिथ्यात्वंस्यात् । तथाचनिर्धर्मकेब्रह्मणिअतिव्याप्तिरित्यर्थइतिसांप्रदायिकोर्थइतिपाठांतरंक्वचित्दृश्यते ।) रूप्यादीनांसत्त्वप्रकारकप्रमांप्रतिसाक्षाद्विषयत्वंनास्तीत्यत्रकिंनियामकमितिपृष्टेसाक्षात्सत्वप्रकारकप्रमांप्रतिविषयतावच्छेदकतयासत्त्वस्यघटादौदृष्टत्वाच्छुक्तिरूप्यादौचतदभावादितिसत्त्वाभावस्यावश्यकत्वंवाच्यं । तथाचसत्त्वप्रकारकप्रमांप्रतिसाक्षादविषयत्वप्रयोजकतयासत्त्वाभावस्याऽऽव

श्यकत्वात्सत्त्वाभावएवमिथ्यात्वंस्यात् । तथाचनिर्धर्मकेब्रह्मण्यतिव्याप्तिरितिसांप्रदायिकोऽर्थः ॥ भ्रांतिमात्रेति ॥ ब्रह्मतु प्रमांप्रत्यपिविषयइतिभावः ॥ उक्तरीत्येति ॥ व्यवसायद्वारानुव्यवसायंप्रतीत्याद्युक्तरीत्येत्यर्थः । तथाचभ्रांतिमात्रविषयत्वा भावादव्याप्तिरितिभावः । अस्तुतर्ह्यध्यस्तत्वमेवमिथ्यात्वमित्यतआह ॥ विशेषणमात्रस्यचेति ॥ साधकंकारणमितियथाप र्यायःतद्वदित्यर्थः । तथाचात्माश्रयप्रसंगइतिज्ञातव्यं ॥ नापिबाधकज्ञानविषयत्वमिति ॥ नन्वन्यथाविज्ञातस्यसम्यग्वि

भ्रांतिमात्रविषयत्वस्यचोक्तरीत्याशुक्तिरूप्यादावप्यभावात् । अध्यस्ततयाभ्रांतिविषयत्वं चेद्विशेष्यवैयर्थ्यात् । विशेषणमात्रस्यचनिरुच्यमानमिथ्यात्वानतिरेकात् । नापिबाध्यत्वं तद्धिनतावदन्यथाविज्ञातस्यसम्यग्विज्ञातत्वं । मिथ्यात्वक्षणिकत्वादिनाविज्ञातस्यप्रपंचस्यस त्यत्वस्थायित्वादिनाविज्ञातत्वेनसिद्धसाधनात् । नापिबाधकज्ञानविषयत्वं ब्रह्मण्यतिव्याप्तेः ।

ज्ञानविषयत्वबाधकज्ञानविषयत्वयोःकोभेदइतिचेन्न । सम्यग्विज्ञानविषयत्वमित्यस्यसम्यग्विज्ञाननिवर्त्यत्वमित्यत्रतात्पर्यं । अत्रबाधकज्ञाननिवर्त्यत्वेतात्पर्यं । तत्रतुज्ञाननिवर्त्यत्वमात्रे । अतएवोत्तरज्ञाननिवर्त्यत्वंपूर्वज्ञानस्यवक्ष्यति । नहितत्पूर्वज्ञानबा धकमितिव्यवह्रियते । अतोनदोषइत्याहुः । अन्येतुब्रह्मण्यतिव्याप्तिरूपंदूषणांतरंवक्तुंपूर्वोक्तमेवाशंक्यनिराकरोति ॥ नापीति ॥ तथाचब्रह्मण्यतिव्याप्तेरपिबाधकज्ञानविषयत्वंनलक्षणमित्यपिशब्दान्वयोद्रष्टव्यइत्याहुः ॥ ब्रह्मणीति ॥ अधिष्ठानत्वेनतस्या

पिबाधकज्ञानविषयत्वादितिभावः । निषेध्यत्वेनबाधकज्ञानविषयत्वंमिथ्यात्वमतोनब्रह्मण्यतिव्याप्तिरित्यभिप्रेत्यनिषेध्यत्वंवि व्रीयते ॥ नास्तीत्यादिना ॥ मन्मतइति ॥ मिथ्यात्ववादिनोममतेआपणस्थंरूप्यमेवनास्तीत्यादिनिषेधप्रतियोगि । नतुपु रतःप्रतीयमानंरूप्यं । तत्रप्रातिभासिकसत्वांगीकारेणैवंविधनिषेधायोगात् । एवंविधनिषेधप्रतियोगिचापणस्थंरूप्यमेव । आभा सस्यप्रसक्त्यानाभासस्यनिषेधइत्यंगीकारात् । तथाचशुक्तिरूप्येऽसंभवइतिभावः ॥ सत्त्वेपीति ॥ यथातत्रज्ञाननिवर्त्यत्वसद्भावेपि नतत्प्रयुक्तोमिथ्यात्वव्यवहारस्तद्वदितिभावः । तथाचार्थांतरतेतिहृदयं ॥ स्वेति ॥ प्रतियोगीत्यर्थः । मृत्पिंडेव्यावहारिकोघटोस्तिपार

नापिनास्तिनासीन्नभविष्यतीतिबोध्यमानाभावप्रतियोगित्वेनतद्विषयत्वं । मन्मतेह्यापणस्थरूप्य
स्यैवतत्प्रतियोगित्वात् । नापिज्ञाननिवर्त्यत्वं उत्तरज्ञाननिवर्त्यपूर्वज्ञानादाविवसत्वेप्युपपत्तेः । ना
पिस्वसमानाधिकरणात्यंताभावप्रतियोगित्वंमिथ्यात्वं अव्याप्यवृत्तिसंयोगादेरिवसत्वेप्युपपत्तेः ।

मार्थिकस्तदत्यंताभावोप्यस्तीत्याशयः । स्वसमानाधिकरणात्यंताभावप्रतियोगित्वोपपादनायाव्याप्यवृत्तीत्युक्तं ॥ सत्त्वेपीति ॥ त थाचतत्प्रयुक्तोमिथ्यात्वव्यवहारोयथानास्तितद्वदित्यर्थः । अव्याप्यवृत्तित्वानाश्रयेत्यत्यंताभावविशेषणं । अनेनसंयोगादेरिवेत्युक्ता र्थांतरानवकाशइतिहृदयं । व्याप्यवृत्तित्वाश्रयेत्येवोक्तौगुणकर्माद्यवच्छेदेनसंयोगात्यंताभावस्यापिव्याप्यवृत्तित्वात्पुनःसंयोगादि कमादायार्थांतरतास्यादतोनञ्द्वयगर्भत्वं । तथाचाधिकरणभेदेनाभावभेदाभावात् । अन्यथाप्रागभावध्वंसयोर्भेदोनस्यात् । तथाचगु

णकर्माद्यवच्छेदेनव्याप्यवृत्तिरेवसंयोगात्यंताभावोद्रव्येऽव्याप्यवृत्तिरपिभवतीत्यव्याप्यवृत्तित्वानाश्रयत्वाभावान्नार्थांतरतेतिभावः। ननुद्रव्येव्याप्यवृत्तित्वाल्लक्षणमसंभवीतिचेन्न। सर्वथालक्षणाभावएवासंभवोवाच्यः।नहिससंभवति। विशेषसामान्ययोरुभयोरपिसामान्याभावप्रतियोगित्वेनविरोधित्वाद्यथाकथंचिल्लक्षणसत्त्वेतत्सामान्याभावप्रतीतेरयोगात्। नन्वस्यलक्षणस्यारोपितेसंयोगेमिथ्यात्वेनलक्ष्येऽव्याप्तिः।अनारोपितसंयोगप्रतियोगिकात्यंताभाववदारोपितसंयोगप्रतियोगितात्यंताभावोप्यव्याप्यवृत्तिरेवेत्यव्याप्यवृत्तित्वानाश्रयत्वाभावादुभयोरप्यत्यंताभावयोरेकत्वात्प्रतियोगिभेदेनाभावभेदाभावादितिमंदाशंकानिरासायाह॥आरो

नाप्यव्याप्यवृत्तित्वानाश्रयस्वसमानाधिकरणात्यंताभावप्रतियोगित्वं । आरोपितस्यसंयोगस्याऽत्यंताभावस्तुअनारोपितस्यसंयोगस्यात्यंताभावादन्यएवव्याप्यवृत्तिरितिवाच्यं। शुक्तिरूप्यादौ तदभावादित्युक्तत्वात् । नाप्यविद्यातत्कार्ययोरन्यतरत्वं अनादौजीवब्रह्मविभागादावव्याप्तेः ।

पितस्येति॥अन्यत्वमेवाह॥व्याप्यवृत्तिरिति॥प्रतियोगिभेदेनाभावभेदादारोपितसंयोगस्यकुत्राप्यभावात्तदत्यंताभावोव्याप्यवृत्तिरेवेत्युक्तलक्षणसद्भावाल्लक्ष्येमिथ्याभूतेआरोपितेसंयोगेनाव्याप्तिरितिभावः॥तदभावादिति॥शुक्तिरूप्यस्यपुरतःप्रतीयमानत्वेनस्वसमानाधिकरणनिषेधायोगादापणस्थस्यरूप्यस्यैवतत्प्रतियोगित्वंआभासस्यप्रसक्त्यानाभासस्यनिषेधइतिपूर्वमुक्तत्वादव्याप्तिरितिभावः॥अनादाविति॥अविद्याकार्यत्वाभावोपपादनायेदंविशेषणं। "जीवईशोविशुद्धाचिद्भेदस्तस्यास्तयोर्द्वयोः। अ

विद्यातच्चितोर्योगःषडस्माकमनादय"इति(तद्ध)वचनादितिभावः ॥ परमतइति ॥ मिथ्यात्वंनिर्वक्तुंमायावादिनोपेक्षयायःपर स्तत्त्ववादीतन्मतइत्यर्थः ॥ सत्त्वेनेति ॥ एतावंतंकालंशुक्त्यज्ञानमासीद्रजतज्ञानमासीदित्यनुभवेनाज्ञानादेःसत्यत्वावगमात्त त्कार्यत्वेपिमिथ्यात्वालाभादितिभावः । नन्वनिर्वाच्याविद्याकार्यत्वंमिथ्यात्वंसाध्यतेतच्चनपरेषांसंमतमित्याशंक्यदृष्टांतेसाध्यवै कल्यमाह ॥ शुक्तिरूप्यादाविति ॥ ननुशुक्तिरूप्यस्यासत्त्वेननिरुक्तानिर्वाच्यत्वस्यतत्राभावाद्दृष्टांतेसाध्यवैकल्यमितिचेत्त

परमतेऽज्ञानस्यतत्कार्यभ्रांत्यादेश्चस(त्य)त्वेनार्थांतरत्वाच्च। शुक्तिरूप्यादावनिर्वाच्याविद्याकार्यत्व स्यप्रतिवाद्यसंमतेश्च । तथापिमिथ्याशब्दोऽनिर्वाच्यवचनइतिपंचपादिकारीत्यासदसत्त्वानधिकर णत्वरूपानिर्वाच्यत्वंमिथ्यात्वं । तत्प्रसिद्धिश्चख्यातिवादेवक्ष्यते ॥ १ ॥ यद्वाबाध्यत्वमनिर्वाच्य त्वं । तच्चशुक्तिरूप्यादिरेवपारमार्थिकत्वाकारेणत्रैकालिकनिषेधप्रतियोगीतिमतेप्रतिपन्नोपाधौत्रै कालिकनिषेधप्रतियोगित्वं । उक्तंहि(च)विवरणे । प्रतिपन्नोपाधावभावप्रतियोगित्वलक्षणस्य

त्राह ॥ तत्प्रसिद्धिश्चेति ॥ वक्ष्यतइति ॥ सत्त्वासत्त्वेएकधर्मिनिष्ठात्यंताभावप्रतियोगिनी धर्मत्वात् रूपरसवत् । सत्त्वंअ सत्त्वानधिकरणनिष्ठंअसत्त्वंवासत्त्वानधिकरणनिष्ठंधर्मत्वाद्रूपरसवदितिसामान्यप्रसिद्धिर्वक्ष्यतइत्यर्थः ॥ तच्चेति ॥ बाध्यत्वमि त्यर्थः । ननुशुक्तिरूप्यस्यकथंत्रैकालिकनिषेधप्रतियोगित्वं तस्यप्रातिभासिकत्वांगीकारेणनिषेधप्रसक्तेरेवाभावात् । आपणस्थ रूप्यस्यैवनिषेध्यत्वादतोसंभवइत्यतआह॥ पारमार्थिकत्वाकारेणेति ॥ असद्विलक्षणस्वरूपमंगीकृत्येत्यर्थः ॥ अभावेति ॥

त्रैकालिकनिषेधेत्यर्थः ॥ मिथ्यात्वस्येति ॥ शुक्तिरूप्येपिसत्त्वादितिशेषः ॥ तत्त्वमस्यादीति ॥ पूर्वार्धस्यप्रकृतासंगतत्वा तज्ज्ञाननिवर्त्यत्वरूपमिथ्यात्वपक्षएवायंश्लोकउदाहर्तव्योनात्रेतियद्यपि तथापिअविद्यातत्कार्ययोःकालत्रयवृत्त्यभावप्रतियोगित्व प्रतीत्यात्रैकालिकनिषेधप्रतियोगित्वरूपेमिथ्यात्वेसंमतिर्भवतीतियुक्तंतदुदाहरणमितिध्येयं । ननुप्रतिपन्नोपाधावित्यादेःकोर्थः । प्रतियोग्याधारत्वेनप्रमिताधिकरणनिष्ठात्यंताभावप्रतियोगित्वंवाउतप्रतियोग्यधिकरणत्वेनभ्रांतिप्रतीताधिकरणनिष्ठात्यंताभाव प्रतियोगित्वंवेतिविकल्प्याद्यंपराचष्टे ॥ प्रतिपन्नत्वंचेति ॥ विरोधइति ॥ प्रतियोग्याधारत्वेनप्रमितेधिकरणेप्रतियोगिनःत्रै

मिथ्यात्वस्येति । उक्तंचवार्तिके । तत्त्वमस्यादिवाक्यार्थसम्यग्धीजन्ममात्रतः ।
अविद्यासहकार्येणनासीदस्तिभविष्यतीति । प्रतिपन्नत्वंचनप्रमितत्वंयेनविरो
धः । नापिभ्रांतिप्रतिपन्नत्वं । येनसिद्धसाधनं । किंतुप्रतीतत्वमात्रं ।

कालिकनिषेधस्यविरुद्धत्वादितिभावः । द्वितीयमाशंक्यनिराकरोति ॥ नापीति ॥ सिद्धसाधनमिति ॥ प्रतियोग्याधारत्वे नभ्रांत्याप्रतीतेधिकरणेप्रतियोगिनस्त्रैकालिकनिषेधस्येष्टत्वेनसिद्धसाधनमित्यर्थः ॥ प्रतीतत्वमात्रमिति ॥ तथाचप्रतियो ग्याधारत्वेनप्रतीयमानाधिकरणनिष्ठात्यंताभावप्रतियोगित्वंविवक्षितमित्यर्थः । ननुतथापिसत्त्ववादिनांतार्किकादीनांमतेसिद्ध साधनता । अत्ररजतत्वमितिसंसर्गारोपेअत्ररजतत्वंनेतिप्रतिषिध्यते । तत्रसंसर्गमात्रमेवाऽसत् । रजतत्वंतुअन्यत्रसत्वात्सत्यमे

व। तथाचप्रतियोगिभूतरजतत्वाधिकरणतयाप्रतीतशुक्तिलक्षणाधिकरणनिष्ठात्यंताभावप्रतियोगित्वंसत्यभूतेरजतत्वेंगीकृतमेवे
तिसिद्धसाधनतेत्याशंक्यविवक्षांतरमाह ॥ सर्वस्मिंश्चेति ॥ भ्रांत्याप्रमयावाप्रतिपन्नेसर्वस्मिन्नित्यर्थः । अतएवचशब्दः । त
थाचप्रतियोग्याधारत्वेनभ्रांत्याप्रमयावाप्रतीताधिकरणनिष्ठात्यंताभावप्रतियोगित्वस्यविवक्षितत्वान्नसिद्धसाधनावकाशइत्याह ॥
सत्वपक्षइति ॥ आरोपितस्यान्यत्रसत्त्वपक्षे । तथाचापणस्थरजतस्यापिरजतत्वाधारतयाप्रमाप्रतिपन्नोपाधित्वेनतत्ररजत
त्वप्रतिषेधस्यभवतामसंमतत्वेनभ्रांत्याप्रमयावाप्रतिपन्नेसर्वस्मिन्नप्युपाधौनिषेधप्रतियोगित्वस्यास्मद्विवक्षितस्यरजतत्वेनंगीकारे

**सर्वस्मिंश्चप्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वंविवक्षितं। सत्त्वपक्षेरज**
**तत्वंप्रतिपन्नोपाधौशुक्तौनिषिध्यमानमपिरजतेननिषिध्यतइतिनसिद्धसाधनं ।**

णनसिद्धसाधनमित्यर्थः। प्रकृतेचभ्रांतिप्रतिपन्नोपाधौपारमार्थिकत्वाकारेणनिषेधप्रतियोगित्वं। प्रमाप्रतिपन्नेमृत्पिंडाद्युपाधाव
पिपारमार्थिकत्वाकारेणघटादिर्नास्त्येवेतिलक्ष्येलक्षणोपपादनंद्रष्टव्यं । विवादस्तुअनिर्वचनीयवादिनामस्माकंभूषणमेवेतिहृद
यं ॥ ननुप्रतिपन्नोपाधिस्थस्त्रैकालिकनिषेधस्तावन्नतात्विकः। अद्वैतहानेः। निरुपाधिकेनसोपाधिकस्यैक्यायोगेनब्रह्मात्मकत्वा
योगाच्च। नापिव्यावहारिकः। तत्प्रतियोगिनोप्रातिभासिकस्यप्रपंचस्यपारमार्थिकत्वापातात्। नापिप्रातिभासिकः। तादृशनिषे
धप्रतियोगित्वसाधनस्येष्टत्वेनसिद्धसाधनापत्तेः । किंचशुक्तिरूप्यमेवपारमार्थिकत्वाकारेणत्रैकालिकनिषेधप्रतियोगीत्येकंमतं।

शुक्तिरूप्यस्याविद्यकसत्त्वोपेतस्यननिषेधःकिंत्वापणस्थस्यैवाभासस्यप्रसक्त्यानाभासस्यप्रतिषेधइतिमतांतरं । तत्रोक्तलक्षणाभावादसंभवइत्यस्वरसादाह ॥ **मतांतरेत्विति** ॥ अत्यंताभावगर्भलक्षणबाध्यत्वस्यशुक्तिरूप्येअसंभवादितिभावः ॥ **अज्ञानस्येत्यादिना** ॥ अज्ञानस्यज्ञानेननिवृत्तिर्बाधइत्युक्तेऽज्ञानकार्यस्यवियदादेर्बाध्यत्वंनसिद्ध्यतिअतउक्तं ॥ **स्वकार्येणेत्यादि** ॥ तथाप्यतीतस्यबाधोनसिद्ध्येदित्यतउक्तं ॥ **प्रविलीनेनेति** ॥ ननुप्रविलीनस्यकथंज्ञानेननिवृत्तिरितिचेदुच्यते । कार्यात्मनाप्रविलीनत्वेपितस्यकारणात्मनासत्त्वात् । अतएवकार्याकारेणवर्तमानेनकार्याकारेणप्रविलीनेनकारणात्मनाविद्यमानेनेतिव्याख्ये

**मतांतरेतुबाध्यत्वंज्ञानत्वेनज्ञाननिवर्त्यत्वं । उक्तंहिविवरणे । अज्ञानस्यस्वकार्येणवर्तमानेनप्रविलीनेनवासहज्ञानेननिवृत्तिर्बाधइति ।**

यं । ज्ञानत्वेनेतिविशेषणस्यकृत्यंदर्शयति ॥ **अनुमितिमित्यादिना** ॥ यदिज्ञाननिवर्त्यत्वंबाध्यत्वमित्येवोच्येत तर्ह्युत्तरज्ञाननिवर्त्यपूर्वज्ञानादावतिव्याप्तिरतोज्ञानत्वावच्छिन्ननिवर्तकताकज्ञाननिवर्त्यत्वंविवक्षितमित्याशयेनज्ञानत्वेनेत्युक्तं । तथाचनिवर्तकतावच्छेदकंज्ञानत्वमभिप्रेतं । एवंचपूर्वज्ञाननिवर्तकतावच्छेदकंचोत्तरज्ञानेउत्तरात्मविशेषगुणत्वमेव नज्ञानत्वं । कुतइतिचेत् । जानातीच्छतिप्रवर्ततइतिक्रमसद्भावेनयदेच्छयापूर्वज्ञानंनिवर्तते तत्रपूर्वज्ञाननिवर्तकतावच्छेदकंनज्ञानत्वं । निवर्तकतान्यूनदेशवृत्तित्वात् । तथाउत्तरज्ञाननिवर्त्येपूर्वज्ञानेपिसत्त्वेनाधिकवृत्तित्वाच्च । किंतूत्तरात्मविशेषगुणत्वमेव । तच्चेच्छासाधारणमिती

दंप्रमेयंसूचयितुमिच्छादेरितीच्छाग्रहणंकृतमितिद्रष्टव्यं। इच्छादेरित्यादिपदेनभावनासंस्कारग्रहणं।पूर्वज्ञानेनात्मनिभावनासंस्कारोत्पत्त्यनंतरंतन्निवर्तनादितिद्रष्टव्यं।तथाचज्ञानत्वावच्छिन्ननिवर्तकताकज्ञाननिवर्त्यत्वमित्यर्थः। नन्वेकस्यैवज्ञानस्यज्ञानत्वेननपूर्वज्ञाननिवृत्तिहेतुत्वं।किंतूत्तरात्मविशेषगुणत्वेनेत्येतदयुक्तं। एकस्यैवकेनचिद्रूपेणहेतुतायाःकेनचिद्रूपेणाहेतुतायाश्चादर्शनादित्यत उक्तं।।अनुमितिंप्रतीति।।हेतुत्वेपीति।।तस्यसर्वोपलब्धिसाधनत्वादितिभावः।।इंद्रियत्वेनेति ॥मनसोयद्यनुमितिंप्रतींद्रियत्वेनहेतुत्वं तर्ह्यनुमितेःप्रत्यक्षत्वप्राप्त्यासाक्षात्कारत्वापत्तिः।यथाहुः।"साक्षात्कारिणीचप्रमासैवोच्यतेयेंद्रियजे"ति। "इंद्रियत्वेनेंद्रिय

अनुमितिंप्रतिमनसोमनस्त्वेनहेतुत्वेपींद्रियत्वेनाहेतुत्वतत्पूर्वज्ञानादिकंप्रतिउत्तरस्यज्ञानेच्छादेरुत्तरात्मविशेषगुणत्वेननिवर्तकत्वेपिज्ञानत्वेनानिवर्तकत्वात् ॥ २ ॥ अथवा चित्सुखरीत्यास्वसमानाधिकरणात्यंताभावप्रतियोगित्वंमिथ्यात्वं । संयोगतदत्यंताभावयोरवच्छेदकभेदेनभिन्नाश्रितत्वस्यैवानुभवेन

जन्यज्ञानंप्रत्यक्ष"मितिमणिकृताप्रत्यक्षलक्षणस्योक्तत्वादितिभावः।ननुज्ञाननिवर्त्यत्वंनामज्ञानजन्यध्वंसप्रतियोगित्वं । तथाचशुक्तिज्ञानानंतरंरूप्यंनास्तीत्येवप्रतीत्यारूप्यंनष्टमित्यप्रतीतेःशुक्तिरूप्यादौसाध्यवैकल्यमित्यस्वरसादाह ॥ अथवेति।। स्वशब्देनप्रतियोगी। तथाचस्वसमानाधिकरणेत्यस्यप्रतियोग्यधिकरणाधिकरणकेत्यर्थोवर्णनीयः। तथाचनसंयोगादिनासिद्धसाधनतेत्याह ॥ संयोगेति ॥ अवच्छेदकभेदेनेति ॥ अग्रेवृक्षःकपिसंयोगीमूलेनेतिप्रतीतेरितिभावः ॥ अयोगादिति ॥ तथाचयदधि

करणेसंयोगः तदधिकरणेनतदत्यंताभावइतितदधिकरणाधिकरणकत्वरूपसामानाधिकरण्यायोगादित्यर्थः॥अस्मत्पक्षेयदधिकरणे व्यावहारिकःसंयोगः तदधिकरणेपारमार्थिकस्तदत्यंताभावोप्यस्तीतिसत्त्वपक्षइत्युक्तांननुतथाप्यापणस्थरूप्यस्यैवतथाभूतात्यंताभावप्रतियोगित्वेनशुक्तिरूप्येतदभावात्साध्यवैकल्यमित्यतआह ॥ शुक्तिरूप्यादेरिति ॥ प्रातिभासिकत्वेनसदपिरूप्यंपारमार्थिकत्वरूपव्यधिकरणधर्मेणस्वाधिकरणाधिकरणकात्यंताभावप्रतियोगीतिनोक्तदोषइतिभावः ॥ तात्त्विकेति ॥ प्रतियोग्य



सत्त्वपक्षेसामानाधिकरण्या(योगात्)भावात् । शुक्तिरूप्यादेरपिपारमार्थिकत्वाकारेणस्वसमानाधिकरणात्यंताभावप्रतियोगित्वाच्च । नचाधिकरणशब्देनतात्त्विकाधिकरणोक्तौसमवायिनिसंयोगिनिवातत्त्वतस्तदधिकरणेतदत्यंताभावायोगेनासंभवः । अधिकरणत्वेनप्रतीतत्व(प्रतीतित्व)मात्रोक्तौ

धिकरणाधिकरणकात्यंताभावेत्यत्रतात्त्विकप्रतियोग्यधिकरणविवक्षायामित्यर्थः ॥ समवायिनीत्यादि ॥ घटादेःसमवायेन तत्वतोधिकरणंमृत्पिंडादि । संयोगेनाधिकरणंभूतलादि । समवायेनसंयोगेनवासंबंधेनतत्वतोघटादिरूपप्रतियोग्यधिकरणेमृदादौभूतलादौचतदत्यंताभावायोगेनघटादौलक्ष्येलक्षणाभावादसंभवइतिभावः ॥ अधिकरणत्वेनप्रतीतीति ॥ प्रतियोग्यधिकरणत्वेनयत्प्रतीतंतदधिकरणकात्यंताभावविवक्षायामित्यर्थः । तथाचप्रतियोग्यधिकरणत्वंतात्त्विकंनविवक्षितमित्याशयः । मा

यिमतेशुक्त्यादौप्रातिभासिकरजतस्यसत्त्वान्नतत्रतदत्यंताभावोवक्तुंयुक्तोतउक्तं ॥ अन्यथाख्यातिपक्षइति ॥ शुक्तिरेवात्यंतासद्रजतात्मनाप्रतीयतइत्यभिनवान्यथाख्यातिपक्षेन्यत्रविद्यमानमेवान्यत्रप्रतीयतइत्येवंरूपान्यथाख्यातिपक्षेचेत्यर्थः ॥ स्वेति ॥ प्रतियोगिभूतरजतत्वेत्यर्थः । संसर्गारोपाभिप्रायेणेदं ॥ स्वेति ॥ प्रतियोग्यधिकरणत्वेनप्रतीयमानाधिकरणकात्यंताभावेत्यस्यस्वात्यंताभावाधिकरणएवप्रतीयमानत्वमर्थतयाविवक्षितमित्यर्थः । एतादृशमिथ्यात्वसाधनेतत्त्ववादिनासिद्धसाधनता

चान्यथाख्यातिपक्षेरजतत्वादेःस्वाधिकरणत्वेनप्रतीतशुक्त्या(दौतदत्यं)दावत्यंताभावस्यसत्त्वात्सिद्धसाधनमितिवाच्यं । स्वात्यंताभावाधिकरणएवप्रतीयमानत्वस्यविवक्षितत्वात् । तत्पक्षेचरजतत्वादिकंस्वात्यंताभावानधिकरणेरजतेपिभाति ॥ ३ ॥ यद्वाऽऽनंदबोधोक्तरीत्यासद्विविक्तत्वंमिथ्यात्वं । तच्चसद्रूपत्वाभावः ।

नाभिधातुंशक्येत्याह ॥ तत्पक्षेचेति ॥ अन्यथाख्यातिवादिनांपक्षइत्यर्थः ॥ रजतेपीति ॥ आपणस्थरजतेपीत्यर्थः । तथाचैवंविवक्षाकरणेन " प्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वंमिथ्यात्व "मितिलक्षणेनपुनरुक्तिरपिपरिहृतेतिद्रष्टव्यं । नन्वेवमत्यंतासत्त्वापत्तिः । नचात्यंतासतःप्रतीयमानत्वमेवनेतिवाच्यं । शशविषाणमितिशब्दाभासादिनातस्यापिप्रतीयमानत्वादित्यस्वरसादाह ॥ यद्वेति ॥ सतोपिसदंतरविविक्तत्वात्सिद्धसाधनमितिचेत्तत्राह ॥ तच्चेति ॥ सद्विविक्तंचेत्यर्थः । ननुतर्हिब्रह्म

ण्यतिव्याप्तिः । तस्यसत्ताजातिशून्यत्वेनसद्रूपत्वाभावस्यैवसत्वादित्यतआह ॥ ब्रह्मचेति ॥ सद्रूपमित्यन्वयः । सत्ताजाति शून्यत्वंनसद्रूपत्वाभावसाधकं । सामान्येव्यभिचारात् । अतःसत्ताजातिशून्यमपिसामान्यंस्वरूपसत्वेनैवयथासदित्युच्यते । एवंब्रह्मसत्ताशून्यमपिस्वरूपसत्त्वेनैवसद्रूपमितिसद्रूपत्वाभावाभावान्नातिव्याप्तिरित्यर्थः । एवंसाध्यंनिरुच्यहेतुंनिर्वक्ति ॥ दृ श्यत्वंचेति ॥ न्यायदीपावलीमायावादिग्रंथविशेषः ॥ दृग्विषयत्वमिति ॥ ज्ञानविषयत्वमित्यर्थः । दृश्यत्वहेतोर्ब्रह्मणि व्यभिचारंवक्तुंब्रह्मणोदृश्यत्वमुपपादयितुमाह ॥ नन्विति ॥ दृश्यत्वहेतोरन्वयव्यतिरेकित्वादितिभावः । दृश्यत्वानुमानेव्य

ब्रह्मचसत्तारहितमपिसामान्यमिवसद्रूपं । दृश्यत्वंचन्यायदीपावलीरीत्यादृग्विषय त्वं । ननुयन्नमिथ्यानतदृश्यमितिव्यतिरेकस्याग्रहेसंदिग्धानैकांत्यं । तद्ग्रहश्चनतावद सति । तत्रसद्विविक्तत्वरूपमिथ्यात्वस्यव्यतिरेकाभावात् । मिथ्यात्वांतरव्यतिरे कसद्भावेपितत्र(मिथ्यात्व)साध्यव्यतिरेकग्रहार्थंतस्यापिज्ञातव्यत्वेनव्यभिचारात् ।

तिरेकव्याप्तिनिश्चयोस्ति नवा । नेतिपक्षेआह ॥ यन्नमिथ्येति ॥ इति व्याप्तौ व्यतिरेकस्यव्यतिरेकव्याप्तेरग्रहेनिश्चितसा ध्याभाववतिहेतुसंदेहरूपंसंदिग्धानैकांत्यमित्यर्थः । आद्येआह ॥ तद्ग्रहश्चेति ॥ हेतुसाध्यव्यतिरेकनिश्चयश्चेत्यर्थः । नन्वस त्येतादृशमिथ्यात्वसत्त्वेपिज्ञाननिवर्त्यत्वादिरूपमिथ्यात्वांतरव्यतिरेकोस्तीतितत्रव्यतिरेकव्याप्तिग्रहःसंभवतीतिचेत्तत्राह ॥ मि थ्यात्वांतरेति ॥ तस्यापि असतोपि ॥ ज्ञातव्यत्वेनेति ॥ अभावज्ञानेअधिकरणज्ञानस्यकारणत्वादित्यर्थः ॥ व्यभिचा

रादिति ॥ यत्रदृश्यत्वंतत्रमिथ्यात्वं । यत्रमिथ्यात्वाभावः तत्रदृश्यत्वाभावइत्यन्वयव्यतिरेकव्याप्त्योरसतिव्यभिचारइत्यर्थः ॥ ब्रह्मापीति ॥ अन्यथामिथ्यात्वव्यतिरेकग्रहासंभवादितिभावः । तथाचतत्रव्यभिचारइतिहृदयं ॥ घटावच्छिन्नस्येति ॥ घटावच्छेदेनेत्यर्थः ॥ व्यतिरेकावच्छिन्नस्येति ॥ मिथ्यात्वव्यतिरेकावच्छेदेनेत्यर्थः ॥ दृश्यत्वादिति ॥ शुद्धस्यचेतिशेषःअयमर्थः । मिथ्यात्वव्यतिरेकग्रहः। शुद्धएवब्रह्मण्यंगीक्रियते । तर्हितत्रदृश्यत्वहेतोर्व्यभिचारइतिनवाच्यं। शुद्धस्यब्रह्मणः स्वरूपेणादृश्यत्वांगीकारान्नव्यभिचारः। तस्यैवमिथ्यात्वव्यतिरेकावच्छेदेनदृश्यत्वोपपत्तेर्व्यतिरेकग्रहस्यापिसंभवात् । नचैवं दृश्यत्वादृश्यत्वेविरुद्धे अदृश्यत्वमेवस्वाभाविकंमिथ्यात्वव्यतिरेकावच्छेदप्रयुक्तंदृश्यत्वंत्वौपाधिकमस्वाभाविकमित्यंगीकारात् ।

ब्रह्मणिमिथ्यात्वव्यतिरेकग्रहे(च)पिब्रह्मापिदृश्यमितिचेन्न । आकाशस्यस्वरूपेणापरिच्छेदे
पिघटावच्छिन्नस्यपरिच्छेदवद्ब्रह्मणःस्वरूपेणादृश्यत्वेपिव्यतिरेकावच्छिन्नस्यदृश्यत्वात् ॥४॥

स्वाभाविकमेवचदृश्यत्वंहेतुतयाविवक्षितं । अतोनतत्र(हेतुरित्यंगीकारात्नतत्र)व्यभिचारप्रसक्तिः स्वाभाविकत्वास्वाभाविकत्वाभ्यामविरोधेदृष्टांतः ॥ आकाशस्येति ॥ यथैकस्यैवाकाशस्यस्वरूपेणापरिच्छेदेपिघटाद्यवच्छेदेनपरिच्छेदसत्यपिस्वाभाविकत्वास्वाभाविकत्वाभ्यांनविरोधस्तद्वदित्येवैतद्ग्रंथार्थःसंप्रदायागतः । व्यतिरेकावच्छिन्नस्येत्यस्यव्यतिरेकावच्छेदेनशुद्धस्यैव दृश्यत्वादित्यव्याख्यानेयथास्थितार्थांगीकारेव्यतिरेकावच्छिन्नेविशिष्टेमिथ्यात्वस्यापिसत्त्वेनव्यतिरेकव्याप्तिग्रहायोगः । शुद्धेच तद्धेतस्यदृश्यत्वावश्यंभावेनव्यभिचारइतिग्रंथोऽसंगतएवस्यादितिद्रष्टव्यं । एवमेव "व्यतिरेकावच्छिन्नस्यस्यादेवदृश्यतेतिचे

ण्यतिव्याप्तिः । तस्यसत्ताजातिशून्यत्वेनसद्रूपत्वाभावस्यैवसत्वादित्यतआह ॥ ब्रह्मचेति ॥ सद्रूपमित्यन्वयः । सत्ताजाति
॥ २० ॥ शून्यत्वंनसद्रूपत्वाभावसाधकं । सामान्येव्यभिचारात् । अतःसत्ताजातिशून्यमपिसामान्यंस्वरूपसत्वेनैवयथासदित्युच्यते ।
एवंब्रह्मसत्ताशून्यमपिस्वरूपसत्त्वेनैवसद्रूपमितिसद्रूपत्वाभावाभावान्नातिव्याप्तिरित्यर्थः । एवंसाध्यंनिरुच्यहेतुंनिर्वक्ति ॥ दृ
श्यत्वंचेति ॥ न्यायदीपावलीमायावादिग्रंथविशेषः ॥ दृग्विषयत्वमिति ॥ ज्ञानविषयत्वमित्यर्थः । दृश्यत्वहेतोर्ब्रह्मणि
व्यभिचारंवक्तुंब्रह्मणोदृश्यत्वमुपपादयितुमाह ॥ नन्विति ॥ दृश्यत्वहेतोरन्वयव्यतिरेकित्वादितिभावः । दृश्यत्वानुमानेव्य

ब्रह्मचसत्तारहितमपिसामान्यमिवसद्रूपं । दृश्यत्वंचन्यायदीपावलीरीत्यादृग्विषय
त्त्वं । ननुयन्नमिथ्यानतदृश्यमितिव्यतिरेकस्याग्रहेसंदिग्धानैकांत्यं । तद्ग्रहश्चनतावद
सति । तत्रसद्विविक्तत्वरूपमिथ्यात्वस्यव्यतिरेकाभावात् । मिथ्यात्वांतरव्यतिरे
कसद्भावेपितत्र(मिथ्यात्व)साध्यव्यतिरेकग्रहार्थंतस्यापिज्ञातव्यत्वेनव्यभिचारात् ।

तिरेकव्याप्तिनिश्चयोस्ति नवा । नेतिपक्षेआह ॥ यन्नमिथ्येति ॥ इति व्याप्तौ व्यतिरेकस्यव्यतिरेकव्याप्तेरग्रहेनिश्चितसा
ध्याभाववतिहेतुसंदेहरूपंसंदिग्धानैकांत्यमित्यर्थः । आद्येआह ॥ तद्ग्रहश्चेति ॥ हेतुसाध्यव्यतिरेकनिश्चयश्चेत्यर्थः । नन्वस
त्येतादृशमिथ्यात्वसत्त्वेपिज्ञाननिवर्त्यत्वादिरूपमिथ्यात्वांतरव्यतिरेकोस्तीतितत्रव्यतिरेकव्याप्तिग्रहःसंभवतीतिचेत्तत्राह ॥ मि ॥ २० ॥
थ्यात्वांतरेति ॥ तस्यापि असतोपि ॥ ज्ञातव्यत्वेनेति ॥ अभावज्ञानेअधिकरणज्ञानस्यकारणत्वादित्यर्थः ॥ व्यभिचा

स्यादित्याशंकापरिहारायययोग्यत्वमित्युक्तं । सहकारिविरहप्रयुक्तकार्याभावोयोग्यतावनस्थदंडादौयथादृष्टातद्वदिहापिज्ञानेनव्य वहारेजननीयेव्यासंगाभावःसहकारीति तदभावाद्व्यवहारोनभवति । तत्सद्भावेतुभवत्येवेत्येवंव्यासंगदशायामपिअपरोक्षव्यव हारविषयत्वयोग्यत्वरूपविशेष्यसद्भावेनविशेषणाभावेनैवविशिष्टाभावोवक्तव्योनतूभयाभावेनेतिसूचयितुंयोग्यत्वमित्युक्तमित्य वगंतव्यं ॥ चैतन्यमिति ॥ तथाचब्रह्मणःप्रकाशरूपत्वेनप्रकाशरूपेप्रकाशांतरानुदयाच्चैतन्यरूपफलाव्याप्यत्वमस्ति स्फुरण रूपत्वेनापरोक्षव्यवहारयोग्यत्वमप्यस्तीत्यवगंतव्यं । दृष्टांतेशुक्तिरूप्येचेदंदृश्यत्वमस्ति । प्रातिभासिकरूप्याकाराऽविद्यावृत्तिरे

चैतन्यं । स्वप्रकाशत्वाभावश्च(प)घटादौविशेषणाभावेनधर्मादौविशेष्याभावेने
तिविशिष्टाभावोनुगतः । अस्मिंश्चपक्षेजडत्वमसंविद्रूपत्वमित्यसंकरः ॥ ५ ॥

वनांतःकरणवृत्तिः । अतोंतःकरणवृत्तिप्रतिबिंबितचैतन्यरूपफलाव्याप्यत्वसत्त्वेपिअपरोक्षव्यवहारयोग्यत्वरूपविशेष्याभावा द्विशिष्टाभावोनुगतोद्रष्टव्यः । अपरोक्षव्यवहारायोग्येपितत्र तद्व्यवहारस्तुअधिष्ठानभूतसाक्षिचैतन्यगतंयदापरोक्ष्यंतदध्यासा द्युक्तः । इदमितिव्यवहारायोग्येपितस्मिन्नधिष्ठानगतेदंतारोपादिदमितिव्यवहारवदित्यग्रेस्पष्टं । ननुजडत्वमप्यस्वप्रकाशत्वमे व । तथाचदृश्यत्वजडत्वहेत्वोःसांकर्यमित्यतआह ॥ अस्मिंश्चपक्षइति ॥ अस्वप्रकाशत्वंदृश्यत्वमितिपक्षइत्यर्थः ॥ असंवि द्रूपत्वमिति ॥ अचिद्रूपत्वमित्यर्थः । इदंचपक्षैकदेशेवृत्तिज्ञानेप्यस्तीतिनभागासिद्धिरितिभावः । ज्ञानरूपत्वाभावइतिव्या

ख्यानंतुवृत्तिज्ञानेभागासिद्धिप्रसंगाच्चिंत्यं ॥ प्रत्यक्षेति ॥ जगत्सत्यताग्राहिसन्घटइत्यादिप्रत्यक्षेत्यर्थः ॥ अमुख्यार्थेति ॥ समाननिषेधादिपरेत्यर्थः । ननुप्रत्यक्षमपित्रिकालाबाध्यत्वरूपपारमार्थिकसत्त्वमेवगृह्णातीतिग्राह्याभावावगाहित्वेनसमानविषय कत्वाद्युक्तंबाधकत्वमित्यतआह ॥ नहीति ॥ वर्तमानमात्रग्राहि वर्तमानकालाबाध्यत्वग्राहि । नन्वेवंभिन्नविषयतयाऽनुमान स्यप्रत्यक्षविरोधाभावोपपादनेकालात्ययापदिष्टमात्रोच्छेदः । प्रत्यक्षेणव्यावहारिकौष्ण्यग्रहात्अनुमानेनपुनःपारमार्थिकौष्ण्य

श्रुतिश्चात्रप्रमाणं । "एकमेवाद्वितीय"मित्यादौअद्वितीयमित्यादिशब्दैर्द्वितीयमात्रनिषे
धात्। नचप्रत्यक्षबाधादनुमानममानंश्रुतिश्चामुख्यार्थेतियुक्तं प्रत्यक्षेणव्यावहारिकसत्वग्रहा
त्। अनुमानादिभिश्चपारमार्थिकसत्त्वनिषेधात्। नहिवर्तमानमात्रग्राहिप्रत्यक्षंत्रिकालाबा
ध्यत्वग्राहि । वह्निरनुष्णइत्यत्रतुउष्णत्वस्यप्रत्यक्षसिद्धव्यावहारिकसत्त्वप्रतिषेधाद्बाधः ।
दृश्यतेचनभोनैल्यचंद्रप्रादेशत्वग्राहिप्रत्यक्षयोरनुमानागमाभ्यांबाधइति । उच्यते ।

निषेधेनभिन्नविषयतायाःतत्रापिवक्तुंशक्यत्वादित्यतआह ॥ वह्निरिति ॥ उष्णत्वस्यप्रत्यक्षसिद्धंयद्व्यावहारिकंसत्त्वंतस्यैववह्नि रनुष्णइत्यनुमानेननिषेधात्साक्षाद्ग्राह्याभावावगाहित्वेनयुक्तस्तत्रबाध्यबाधकभावइतिनबाधोच्छेदइतिभावः । किंचापौरुषेयत्वे नानाशंकितदोषायाःएकमेवेत्यादिश्रुतेः तदनुगृहीतास्मदनुमानस्यचसंभावितदोषप्रत्यक्षापेक्षयाप्राबल्यात्प्रत्यक्षगृहीतमपिसत्य त्वमनुमानागमाभ्यामेवबाध्यतइत्याशयेनप्रत्यक्षस्याऽनुमानादिबाध्यत्वंदृष्टमित्याह ॥ दृश्यतेचेति ॥ नीलंनभइतिप्रत्यक्षं न

भोननीलंविभुत्वादित्यनुमानेनबाध्यंदृष्टं । तथा प्रादेशमात्रपरिमितश्चंद्रमाइतिप्रत्यक्षं "अष्टाशीतिसहस्राणी" त्याद्यागमबाध्यं दृष्टमितिप्रकृतेपितथास्त्वितिभावः ॥ ७ ॥ पक्षांतरानिषेधेनेति ॥ यद्यपीत्यादिग्रंथसंदर्भेणेत्यर्थः ॥ पंचधेति ॥ तथापीत्यादिग्रंथेन सदसत्त्वानधिकरणत्वं सर्वस्मिन्प्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वंवा ज्ञानत्वेनज्ञाननिवर्त्यत्वंवा स्वात्यंताभावाधिकरणएवप्रतीयमानत्वंवा सद्रूपत्वाभावोवेतिपंचप्रकारेणनिरुक्तमित्यर्थः । सदसत्त्वेत्यत्रसच्चतदसच्चेतिकर्मधारयाभिप्राये

मिथ्यात्त्वंहित्त्वयैवपक्षांतरनिषेधेनपंचधानिरुक्तं । तत्राद्येकिंसत्वेसत्यसत्त्वरूप
विशिष्टस्याभावोभिप्रेतः । किंवासत्त्वात्यंताभावासत्त्वात्यंताभावरूपधर्मद्वयं ।
यद्वासत्त्वात्यंताभाववत्त्वेसतिअसत्त्वात्यंताभाववत्त्वरूपंविशिष्टं । नाद्यः ।
मन्मतेसदेकस्वभावेजगतितस्यासिद्धत्त्वात् । नद्वितीयः । व्याहतेः ।

णाह ॥ सत्त्वेसतीति ॥ सच्चासच्चसदसतीतयोर्भावःसदसत्त्वं द्वंद्वांतेश्रूयमाणस्त्वप्रत्ययोनधिकरणपदंचप्रत्येकंसंबध्यते । तथाचसत्त्वानधिकरणत्वमसत्त्वानधिकरणत्वंचेतिधर्मद्वयंसाध्यमित्याशयेनाह ॥ किंवेति ॥ तस्येति ॥ सत्त्वेसत्यसत्त्वरूपविशिष्टाभावस्येत्यर्थः ॥ व्याहतेरिति ॥ परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनांतरीयकत्वात्सत्वात्यंताभावेसाध्येऽसत्त्वस्यैवप्राप्त्यापुनस्तदत्यंताभावेसाध्येव्याहतिः । एवमसत्त्वात्यंताभावेसाध्येसत्त्वस्यैवप्राप्त्यापुनस्तदत्यंताभावसाधनेव्याहति

रित्यर्थः । ननुकथंव्याहतिःसत्त्वासत्त्वयोःपरस्परप्रागभावादिरूपतयापरस्परविरहरूपत्वासंभवेनात्यंताभावरूपतयैवपरस्परविरहरूपतावाच्या । तथाचसत्त्वात्यंताभावःकथमसत्त्वं । सिद्धांतेअत्यंताभावस्याप्रामाणिकप्रतियोगिकत्वस्वीकारेणसत्त्वस्यप्रामाणिकत्वात् । तथाअसत्त्वस्यापितुच्छेप्रामाणिकत्वेनतदत्यंताभावासंभवेनासत्त्वात्यंताभावएवसत्त्वमित्यस्याप्ययोगात् । नचताकिंकादिमतेप्रामाणिकस्याप्यत्यंताभावप्रतियोगित्वस्वीकारात्तन्मतेनतयोःपरस्परविरहरूपत्वाभिधानमितिवाच्यं । सिद्धांतेप्यसत्त्वाभावएवसत्त्वंसत्त्वाभावएवासत्त्वमितिस्वीकारात् । यद्वक्ष्यति । " मयालाघवादावश्यकत्वादसत्त्वाभावएवसत्त्वंतदभावएवासत्त्वमितिस्वीकारा "दिति । तथाचप्रामाणिकस्यात्यंताभावासंभवेनअसतिकिंचिदारोपितंसत्त्वमस्तितदत्यंताभावएवासत्त्वं । सतिचारोपितंकिंचिदसत्त्वमस्तितदत्यंताभावएवसत्त्वमितिवाच्यं । आरोपितयोश्चासत्त्वेनात्यंताभावप्रतियोगित्वसंभवात् । एवंचारोपितसत्त्वाद्यभावस्यैवासत्त्वादित्वेआरोपितसत्त्वासत्त्वयोरेवव्याहतिप्राप्त्यावास्तवसत्त्वासत्त्वयोःकथंव्याघातः । तस्मादेतत्कथमितिचेदत्रवदंति । सत्त्वासत्त्वयोःपरस्परविरहरूपत्वोक्तेःपरस्परविरहव्यापकत्वेतात्पर्यं । तथाचयत्रारोपितसत्त्वात्यंताभावःतत्रासत्त्वं । यत्रारोपितासत्त्वात्यंताभावस्तत्रसत्त्वमितिव्याप्तेः । नचघटेवास्तवसत्त्वसद्भावेनारोपितसत्त्वात्यंताभावस्यसत्त्वेप्यसत्त्वाभावात् । एवंतुच्छेवास्तवासत्त्वसत्त्वेनारोपितासत्त्वात्यंताभावसद्भावेपिसत्त्वाभावाद्व्यभिचारः । तथाचकथंपरस्परविरहव्यापकत्वमपीतिवाच्यं । अत्यंताभावस्यप्रतियोग्यारोपपूर्वकत्वाद्यथाप्रतियोगिनासहविरोधः तथाप्रतियोग्यारोपेयत्प्रधानंतेनापिविरोधस्यांगीकार्यत्वात् । एवंचात्रात्यंताभावेप्रतियोगिभूतंयदारोपितंसत्त्वंतत्रयत्प्रधानंवास्तवंसत्त्वंतेनसममत्यं

ताभावस्यविरोधात् । घटेचप्रधानभूतवास्तवसत्त्वसद्भावेनतत्रारोपितसत्त्वात्यंताभावस्यवक्तुमशक्यत्वात् । एवंतुच्छेअसत्वारोप प्रधानभूतवास्तवासत्वसद्भावेनारोपितासत्त्वात्यंताभावस्यवक्तुमशक्यत्वात् । एवंचनव्यभिचारः । तथाचपरस्परविरहव्यापक त्वेनविरोधोयुक्तइति । नन्वथापिप्रधानभूतंवास्तवंसत्त्वंघटेस्ति तत्रारोपितसत्त्वात्यंताभावोप्यस्ति । तुच्छेप्रधानभूतवास्तवास त्त्वमस्ति आरोपितसत्त्वात्यंताभावोप्यस्तीतिकथंप्रतियोग्यारोपेप्रधानेनापिविरोधइतिचेदुच्यते । यत्रप्रधानंवास्तवंसत्त्वंतत्रारो पितसत्त्वात्यंताभावोनास्तीत्यस्यप्रतियोग्यधिकरणसंसर्गारोपपूर्वकप्रतीतिविषयाभावोनास्तीत्यर्थकरणात् । यत्रघटेप्रधानभूतं वास्तवंसत्त्वमस्तितत्रसत्त्वमारोप्यननिषिध्यते । एवंयत्रतुच्छेप्रधानभूतंवास्तवासत्त्वमस्ति तत्रासत्त्वमारोप्यननिषिध्यतइतिकृ त्वाअसत्त्वारोपपूर्वकप्रतीतिविषयाभावरूपारोपितासत्त्वात्यंताभावोनास्तीतियुक्तःपरस्परविरहव्यापकत्वेनविरोधइति । एवमे वदोषात्यंताभावरूपभगवल्लक्षणंनसंभवति । दोषाणांप्रामाणिकत्वेनतदत्यंताभावायोगादितिशंकितेआरोपितदोषात्यंताभावस्य लक्षणत्वंवाच्यं । ननुतर्हिजीवेतिव्याप्तिरितिचेन्न । तत्राप्यत्यंताभावस्यप्रतियोग्यारोपप्रधानेनविरोधात् । दोषाणामारोपेप्रधा नभूतानांवास्तवदोषाणांजीवेसत्त्वेनतत्रदोषानारोप्यनिषेधःकर्तुंनशक्यते । तथाचप्रतियोग्यधिकरणसंसर्गारोपपूर्वकप्रतीतिवि षयाभावाख्यारोपितदोषात्यंताभावोजीवेनास्ति । अस्तिचभगवति । भगवतिआरो(प्यदोषा)पितादोषानसंतीतिनिषेधःकर्तुंश क्यत्वात् । अत्यंताभावस्यप्रतियोग्यारोपप्रधानेनविरोधात् । दोषारोपप्रधानभूतवास्तवदोषाणांचभगवत्यभावेननिषेधसंभवे नदोषाभावादितिद्रष्टव्यं । सत्त्वात्यंताभावोपपादनायनिर्धर्मकेत्युक्तं । सत्त्वराहित्यस्यसद्रूपत्वानुपमर्दकत्वादितिभावः । किंच

सत्त्वात्यंताभावासत्त्वात्यंताभावरूपधर्मद्वयस्यैकस्मिन्नधिकरणेकुत्राप्यप्रसिद्ध्याप्रसिद्धविशेषणत्वं । ननुपृथिवीतरभिन्नेत्यत्र जलादित्रयोदशान्योन्याभावानामैकाधिकरण्येनाप्रसिद्धावपितेजःप्रभृतिषुप्रत्येकंप्रत्येकंप्रसिद्ध्याऽप्रसिद्धिपरिहारवदत्रापिसत्त्वात्यंताभावासत्त्वात्यंताभावयोरैकाधिकरण्येनाप्रसिद्धावपिसतिअसत्त्वात्यंताभावस्यासतिचसत्त्वात्यंताभावस्यचप्रत्येकंप्रसिद्ध्याऽप्रसिद्धविशेषणत्वाभावादितिचेत्सत्यं । अप्रसिद्धविशेषणत्वाभावेपिअसत्त्वात्यंताभावरूपांशस्यसिद्धत्वेनसिद्धसाधनतास्यादि

निर्धर्मकब्रह्मवत्सत्त्वराहित्येपिसद्रूपत्वेनाऽमिथ्यात्त्वोपपत्त्यार्थांतराच्चपृथिवीइतरभिन्नापृथिवीत्त्वादित्यत्रत्रयोदशान्योन्याभावानामिवात्रापिसत्वासत्त्वात्यंताभावयोःप्रत्येकंप्रसिद्धत्वेनकथंचिदप्रसिद्धविशेषणत्त्वाभावेपिअसत्त्वात्यंताभावांशेसिद्धसाधनाच्च । नहिसिद्धमसिद्धेनसहोच्चरित(च्यमान)मसिद्धंभवति ।

त्याह ॥ पृथिवीत्यादिना ॥ अभावमनंतर्भाव्यत्रयोदशत्वंबोध्यं ॥ प्रत्येकमिति ॥ सतिअसतिचेत्यर्थः । ऐकाधिकरण्यावच्छेदेनसाध्यसिद्धेरुद्देश्यत्वेनात्रऐकाधिकरण्यावच्छेदेनसाध्यप्रसिद्धेरभावादप्रसिद्धविशेषणतास्यादेवेत्याशयेनकथंचिदित्युक्तं । ननुकेवलस्यासत्त्वात्यंताभावस्यसिद्धत्वेपिअसिद्धेनसत्त्वात्यंताभावेनसहोच्यमानत्वादसिद्धत्वमेवेतिनांशेसिद्धसाधनतेत्यतआह ॥ नहीति ॥ तथात्वेपर्वतोवह्निमान्पाषाणवांश्चेत्यत्रापिसिद्धसाधनतानोद्भाव्येतेतिभावः । नन्वेवंपृथिवीतरभिन्नेत्यत्रापिजला

दित्रयोदशान्योन्याभावानांसाध्यत्वात् जलाद्येकैकान्योन्याभावानामपिघटोनजलादिरितिप्रतीत्याघटत्वावच्छेदेनसिद्धत्वादंशे
सिद्धसाधनतापत्तिरित्यनुमानंदुष्टंस्यादित्यतआह ॥ पृथिवीति ॥ जलाद्येकैकान्योन्याभावस्यघटेघटत्वावच्छेदेनसिद्धावपि
पक्षतावच्छेदकीभूतपृथिवीत्वावच्छेदेनघटेनसिद्धिरतोनांशेसिद्धसाधनतेत्यर्थः । पक्षतावच्छेदकसामानाधिकरण्येनैवसाध्यसि
द्धेरुद्देश्यत्वात्तस्याश्चाजातत्वादितिभावः । पृथिवीत्वोपहिते घटेइतिशेषः । प्रकृतेचपक्षतावच्छेदकसामानाधिकरण्येनैवासद्धै
लक्षण्यस्यसिद्धत्वात्सिद्धसाधनतेतिद्रष्टव्यं ॥ दृष्टांतस्येति ॥ धर्मद्वयस्यसाध्यत्वान्मन्मतेशुक्तिरूप्येसत्त्वात्यंताभावस्यसत्त्वे

पृथिवीतरभिन्नेत्यत्रतुजलाद्येकैकान्योन्याभावोपिनपृथिवीत्वोपहितेसिद्धः।दृष्टांतस्यसाध्यवैकल्या
च्चापृथिवीत्वहेतुस्तुकेवलव्यतिरेकी।त्रयोदशान्योन्याभावरूपसाध्यस्यव्यतिरेकानिरूपणंतुभिन्नाश्रि
तानामपित्रयोदशान्योन्याभावानांसमूहालंबनैकज्ञानोपारूढत्वमात्रेणयुक्तं । अतएवनतृतीयः ।

प्यसत्त्वस्यैवसत्त्वेनतदत्यंताभावस्यतत्राभावात्साध्यवैकल्यमित्यर्थः । नन्वेवंतर्हिंपृथिवीतरभिन्नेत्यत्रापित्रयोदशभेदानांसाध्य
त्वाज्जलादौतेजःप्रभृतिद्वादशभेदानांसत्त्वेपिजलभेदस्याभावात्साध्यवैकल्यं । एवंतेजःप्रभृतिष्वपिस्वस्वेतरप्रतियोगिकद्वादशभे
दसत्त्वेपिस्वस्वभेदाभावात्साध्यवैकल्यमेवस्यादित्यतआह ॥ पृथिवीत्वेति ॥ यत्रेतरत्वंतत्रपृथिवीत्वाभावइतिव्यतिरेकेजलादि
दृष्टांतइतिभावः । ननुपृथिवीत्वहेतौव्यतिरेकिणिदृष्टांताभावेत्रयोदशान्योन्याभावानांसाध्यभूतानांप्रसिद्ध्यभावेनसाध्यव्यतिरे
कनिरूपणंनस्यादित्यतआह ॥ त्रयोदशेति ॥ जलादित्रयोदशान्योन्याभावानांतेजःप्रभृतिषुप्रत्येकंप्रत्येकंज्ञानानंतरंएतेत्रयो

दशान्योन्याभावाइतिसमूहालंबनरूपैकज्ञानोपरूढानांप्रसिद्धिसंभवेनव्यतिरेकनिरूपणंसंभवतीतिभावः । पूर्वधर्मद्वयसाधन पक्षेव्याहत्यर्थांतरांशेसिद्धसाधनसाध्यवैकल्याख्यदोषचतुष्टयस्योक्तत्वेनात्रातएवेत्यतिदेशेदोषचतुष्टयस्याप्यतिदेशःप्रतीयतेततः अतएवेत्युक्तंविशदयति ॥ व्याहतेरित्यादिना ॥ धर्मद्वयसाधनइवविशिष्टसाधनेपिपरस्परविरुद्धयोर्विशेषणविशेष्यभावायोगाद्व्याहतिरेव । निर्धर्मकब्रह्मवत्सत्त्वात्यंताभाववत्त्वेसत्यपिसद्रूपत्वेनाप्युपपत्त्याऽर्थांतराच्छुक्तिरूप्येविशेष्यांशाभावेनविशिष्टाभावात्साध्यवैकल्यंचेत्यर्थः विशिष्टसाधनपक्षेंशेसिद्धसाधनातिदेशःकुतोनक्रियतइतिशंकायामस्मिन्पक्षेंशेसिद्धसाधनस्यानवका

व्याहतेरर्थांतरा(त्दृष्टांते)त्साध्यवैकल्याच्च । किंचयथाअनित्येवाङ्मनसेइत्यत्रपक्षतावच्छेदकनानात्वेनांशेसिद्धसाधनत्वेपिपृथिवीतरभिन्नेत्यत्रपक्षतावच्छेदकैक्यान्नां(शतः)शेसिद्धसाधनं तथेहापियद्यपिकथंचित्साध्यतावच्छेदकैक्यान्नांशेसिद्धसाधनत्वं । नापिव्यर्थविशेष्यत्वं ।

शंवदंस्तथाव्यर्थविशेष्य(त्वाख्यं)त्वरूपंदोषांतरंचनास्तीतिवदन्नप्रसिद्धविशेषण(त्वरूपं)त्वाख्यंदोषांतरमाह ॥ किंचेत्यादिना ॥ किंचाप्रसिद्धविशेषणत्वमित्यन्वयः ॥ पक्षतावच्छेदकनानात्वेनेति ॥ तथाचवाक्त्वावच्छेदेनानित्यत्वस्यसिद्धत्वादितिभावः ॥ पक्षतावच्छेदकैक्यादिति ॥ पक्षतावच्छेदकैक्येहिपक्षतावच्छेदकसामानाधिकरण्येनसाध्यस्यसिद्धत्वात्संपूर्णसिद्धसाधनमेव नांशतःसिद्धसाधनं । पृथिवीतरभिन्नेत्यत्रतुपृथिवीत्वरूपपक्षतावच्छेदकसामानाधिकरण्येनसाध्यसिद्धिरूपोद्देश्यप्रतीतेरसिद्धत्वेनांशेसिद्धसाधनानवकाशादित्यर्थः ॥ साध्यतावच्छेदकेति ॥ पक्षतावच्छेदकनानात्वएवांशेसिद्धसाधनवत्साध्य

तावच्छेदकनानात्वएवांशेसिद्धसाधनता । अतएवधर्मद्वयसाधनपक्षेंशेसिद्धसाधनतोक्ता । पक्षतावच्छेदकैक्येंशेसिद्धसाधनत्वाभाववत्साध्यतावच्छेदकैक्येपिनांशेसिद्धसाधनं । एवंचप्रकृतेविशिष्टस्यैकस्यसाध्यत्वेनसाध्यतावच्छेदकैक्येनतदवच्छिन्नसाध्यस्याऽसिद्धत्वान्नांशेसिद्धसाधनावकाशइत्यर्थः । विशिष्टंविशेषणाद्यात्मकमितिपक्षेसाध्यतावच्छेदकैक्यंनास्त्येवेत्याशयेनकथंचिदित्युक्तं । कुतोनव्यर्थविशेष्यत्वमित्यतोव्यापकगतविशेषणानामुद्देश्यप्रतीतिसिद्ध्यर्थत्वस्यदर्शनादित्याह ॥ विमतमित्यादिना ॥ चिकीर्षादेरिवेति ॥ चिकीर्षापरोक्षज्ञप्तिविशिष्टेश्वरसिद्धेरुद्देश्यत्वादित्यर्थः । समानाधिकृतत्वात् । शुक्लःपटइत्येक

**विमतंउपादानापरोक्षज्ञप्तिचिकीर्षाकृतिमज्जन्यमित्यत्रकृतिग्रहणेनैवेश्वरासिद्धावपिचिकीर्षादेरिव गुणादिकंगुण्यादिनाभिन्नाभिन्नं समानाधिकृतत्वादित्यत्रतार्किकांगीकृतभिन्नत्वस्यैवचव्यापकविशेषणानामुद्देश्यप्रतीत्यर्थत्वात् । इह(च)तुसद्विलक्षणत्वेसत्यसद्विलक्षणमितिप्रतीतेरुद्देश्यत्वात् ।**

विभक्त्यंतपदवाच्यत्वादितिव्याख्यानंचिंत्यं।घटःकलशइत्यादौव्यभिचारापत्तेर्यदिचेत्युत्तरग्रंथविरोधाच्च । किंतुविशेषणविशेष्यभावेनव्यवह्रियमाणत्वादित्येवार्थोद्रष्टव्यः।दंडीदेवदत्तइत्यादौदंडित्वस्यैवविशेषणत्वाद्विशिष्टस्यचविशेष्येणभिन्नाभिन्नत्वान्नदोषइतिद्रष्टव्यं । यथाहिभेदाभेदवादिनामीमांसकेनतार्किकंप्रतिप्रयुक्तेभिन्नाभिन्नमितिसाध्येभिन्नत्वविशेषणस्यतार्किकेणांगीकृतत्वेपिनवैयर्थ्यं । भिन्नाभिन्नत्वप्रकारकप्रतीतेरुद्देश्यत्वात् । एवमिहापिसद्विलक्षणत्वेसत्यसद्विलक्षणमितिविशिष्टप्रतीतेरुद्देश्यत्वा

न्व्यर्थविशेष्यत्वमित्यर्थः । विशेषणानां धर्माणां । ननुभेदाभेदानुमानदृष्टांतोनयुक्तः । तत्रगुणादिकंगुण्यादिनाऽभिन्नमित्ये वकृतेऽभेदरूपसाध्यवति घटकलशादौघटःकलशइतिप्रयोगादर्शनेनसमानाधिकृतत्वरूपहेत्वभावेनाभेदरूपसाध्यंप्रतिसमानाधि कृतत्वस्यप्रयोजकत्वाभावात् । हेतुरस्तुसाध्यंमास्त्वित्येवंरूपाप्रयोजकतात्रनाभिप्रेता । किंनाम । " तस्मिन्सत्यभवतःतेनविना पिभवतःतदप्रयोज्यत्वादि "तिवचनात्साध्येसत्यप्यभवतोहेतोःसाध्येप्रयोजकत्वाभावात् । अतोप्रयोजकतानिरासायभेदविशि ष्टाधीस्तत्रोद्देश्या । घटकलशादौचहेत्वभाववतिभेदाभेदरूपसाध्यस्याप्यभावान्नाप्रयोजकत्वमित्यप्रयोजकतापरिहारायैवभिन्न

यदिचाभेदेसत्यपिघटःकलशइतिसामानाधिकरण्यादर्शनादप्रयोजकत्वनिरासायविशिष्टधीस्तत्रोद्देश्या
तर्हितुच्छेसद्वैलक्षण्येसत्यपिदृश्यत्वादर्शनादिहापिसोद्देश्येतिसमं । तथाप्यऽप्रसिद्धविशेषणत्वं ।

त्वविशेषणंनोद्देश्यप्रतीत्यर्थमित्याशंक्यतर्हिप्रकृतेपिसत्त्वाभावमात्रस्यैवसाध्यत्वेसत्त्वाभाववतितुच्छेऽविद्यमानस्यदृश्यत्वस्याऽ ऽप्यप्रयोजकत्वंमाभूदितिअप्रयोजकतापरिहारायैवासद्विलक्षणत्वमपिसाध्यकोटौनिवेशितं । तन्निवेशेतुतुच्छेदृश्यत्वाभाववति विशिष्टंसाध्यमपिनास्तीत्यप्रयोजकतायाअभावादित्यप्रयोजकतापरिहारायैवविशिष्टधीस्तत्रोद्देश्या । अतोनोद्देश्यप्रतीत्यर्थंवि शिष्टोपादानं । अतोनन्व्यर्थविशेष्यत्वमित्याह ॥ यदिचेत्यादिना ॥ अप्रसिद्धेति ॥ विशिष्टसाध्यस्यकुत्राऽप्यप्रसिद्धत्वादि तिभावः । ननुयदिसत्त्वात्यंताभाववत्त्वेसत्यसत्त्वात्यंताभावरूपविशिष्टसाधनेअप्रसिद्धविशेषणत्वं तदापृथिवीइतरभिन्नेत्यत्रापि

जलादिद्वादशान्योन्याभाववत्त्वेसतिसमवायान्योन्याभावरूपविशिष्टस्यैवसाध्यत्वमंगीकृत्यतस्यकुत्राप्यप्रसिद्धत्वेनाप्रसिद्धविशेषणत्वंतत्रापिस्यात् । तथाचत्रयोदशान्योन्याभावानांप्रत्येकंप्रसिद्ध्यासाध्यप्रसिद्धिव्युत्पादनंव्याहतंस्यादित्यतआह ॥ पृथिवीति ॥ साधनपक्षएवेति ॥ नोक्तरीत्याविशिष्टसाधनपक्षइतिवाक्यशेषः । विशिष्टस्यसाध्यतापक्षेतुसमुदायालंबनरूपैकज्ञानोपारूढत्वमादायनसाध्यप्रसिद्धिसंपादनंसंभवतीतिद्रष्टव्यं । ननुविशिष्टस्यसाध्यत्वेपिनाप्रसिद्धविशेषणत्वं । सद्बैलक्षण्यादीनांविशकलितानांप्रसिद्धिसंभवादित्यतआह ॥ अन्यथेति ॥ भूःशशविषाणोल्लिखिताभूत्वादित्यत्राप्यप्रसिद्धविशेषणत्वंसर्वसं

पृथिवीइतरभिन्नेत्यत्रत्वनेकधर्मसाधनपक्षएवप्रत्येकप्रसिद्ध्यासाध्यप्रसिद्धिरुक्ता । अन्यथाशशादीनांप्रत्येकंप्रसिद्ध्याशशशृंगोल्लिखितत्वस्यापिसास्यात् । नद्वितीयः । त्रैकालिकनिषेधस्यतात्विकत्वेऽद्वैतहानेः । प्रातिभासिकत्वेसिद्धसाधनात् । व्यावहारिकत्वेपि तस्यबाध्यत्वेनतात्विकसत्त्वाविरोधित्वेनार्थांतरात् । अद्वैतश्रुतेरतत्वावेदकत्वापाताच्च ।

मतंनस्यात् । तत्रापिशशादीनांविशकलितानांप्रसिद्धिसंभवादितिभावः ॥ सिद्धसाधनादिति ॥ प्रातिभासिकत्रैकालिकनिषेधप्रतियोगित्वस्यसत्यत्वाविरोधित्वेनेष्टत्वादितिभावः ॥ बाध्यत्वेनेति ॥ ब्रह्मज्ञानबाध्यत्वेनेत्यर्थः । तात्विकसत्त्वं त्रैकालिकसत्त्वं । तात्विकसत्त्वाविरोधित्वोपपादनायतस्यचबाध्यत्वेनेत्युक्तं । त्रैकालिकसत्तानिषेधस्यबाध्यत्वेत्रैकालिकसत्त्वमेवसिद्ध्यतीतिभावः । अर्थांतरादित्युपलक्षणं । व्यावहारिकप्रतियोगिमतिव्यावहारिकनिषेधसाधनेबाधोपिद्रष्टव्यः ॥ अतत्वेति ॥

व्यावहारिकमिथ्याभूतनिषेधप्रतिपादकत्वान्नेहनानेत्याद्यद्वैतश्रुतेरतत्वावेदकत्वंस्यादित्यर्थः । तत्प्रतियोगिनः व्यावहारिकनिषेधप्रतियोगिनः ॥ पारमार्थिकत्वापत्तेरिति ॥ प्रतियोगितदभावयोर्भिन्नसत्ताकत्वांगीकारादितिभावः । नन्वथापिव्यावहारिकनिषेधप्रतियोगिनःप्रपंचस्यपारमार्थिकत्वं कुतः प्रातिभासिकत्वेनाप्युपपत्तेः । रूप्यात्यंताभावस्यव्यावहारिकत्वेपिरूप्यस्य प्रातिभासिकत्ववदित्यतउक्तमप्रातिभासिकस्येति । तच्चोभय(वादि)सिद्धमितिभावः । वियदादेरसद्विलक्षणस्वरूपोपपादनाय

तत्प्रतियोगिनोऽप्रातिभासिकस्यप्रपंचस्यपारमार्थिकत्वापत्तेश्च । किंचनिषेधप्रतियोगित्वं । किंस्वरूपेण । किंवाअसद्विलक्षणस्वरूपानुपमर्दनपारमार्थिकत्वाकारेण । नाद्यः । श्रुत्यादिसिद्धोत्पत्त्यादिकस्यार्थक्रियासमर्थस्याविद्योपादानकस्यतत्त्वज्ञाननाश्यस्यचवियदादेरूप्यादेश्चधीकालेविद्यमानेनासद्विलक्षणस्वरूपेणत्रैकालिकनिषेधायोगात् । त्रैकालिकनिषेधंप्रति स्वरूपेणापणस्थरूप्यंपारमार्थिकत्वाकारेणप्रातिभासिकरूप्यंवाप्रतियोगीतित्वन्मतहानेश्च ।

श्रुत्यादीतिविशेषणद्वयं । असद्विलक्षणस्वरूपाभावेऽउत्पत्तिरयुक्तास्यात् । नचेष्टापत्तिः । तस्याःश्रुत्यादिसिद्धत्वात् । अर्थक्रियापिनिःस्वरूपत्वेनस्यादितिभावः । वियदादेरूप्यादेश्चोभयोरप्यसद्विलक्षणस्वरूपोपपादनायाविद्येत्यादि । निस्स्वरूपत्वेसोपादानत्वादेरयोगादितिभावः ॥ धीकालइति ॥ सदितिप्रतीयमानस्यापिननिस्स्वरूपत्वंयुक्तमितिवक्तुमिदमुक्तमितिद्रष्टव्यं । तथाचैतादृशमिथ्यात्वसाधनेवियदादौबाधः । शुक्तिरूप्यादौत्वद्रीत्यासाध्यवैकल्यंचेत्युक्तंभवति ॥ आपणस्थेति ॥ आभास

स्यप्रसक्त्याअनाभासस्यनिषेधांगीकारादितिभावः । तथाचस्वरूपेणनिषेधप्रतियोगित्वंशुक्तिरूप्येनास्तीतिलक्षणस्यासंभवइति हृदयं ॥ अत्यंतासत्त्वेति ॥ वियदादेःस्वरूपेणनिषेधांगीकारइत्यर्थः । तदुपपादयति ॥ प्रतिपन्नेत्यादिना ॥ स्वरूपेणेति शेषः । प्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वमपिसर्वत्रत्रैकालिकनिषेधप्रतियोगित्वपर्यंतमितित्वन्मतमित्यन्वयः ॥ सर्वत्रेति ॥ स्वोपाधौपरोपाधौचेत्यर्थः । ननुपटादेःस्वोपाधावेवत्रैकालिकनिषेधप्रतियोगित्वंनपरोपाधावित्यतउक्तं ॥ अन्यत्रासत्त्वेनसंमतस्येति ॥ मृदादिरूपेपरोपाधावसत्त्वेनसंमतस्येत्यर्थः ॥ अन्यथेति ॥ पटादेरन्यत्रपरोपाधावसत्त्वस्यासंमतत्वे ।

अत्यंतासत्वापाताच्च । प्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वमपिह्यन्यत्रा
सत्वेनसंमतस्यपटादेःसर्वत्रत्रैकालिकनिषेधप्रतियोगित्वपर्यंतमितित्वन्मतं ।
अन्यथाअन्यत्रतत्सत्वापातात् । नहितेषामन्यत्रसत्तासंभाविनीतित्वदुक्तेश्च ।
तथाचकथंनात्यंतासत्वापत्तिः । नहिशशशृंगादीनामपीतोन्यदसत्त्वमस्ति ।

अन्यत्रसत्त्वांगीकारइतियावत् ॥ अन्यत्रतत्सत्त्वापातादिति ॥ सत्त्वपदंतत्प्रतीतिव्यवहारयोरुपलक्षणं । तथाचपटादेःमृदाद्युपाधौसत्त्वप्रतीतिव्यवहारयोरापातादित्यर्थः । तथाचायंपटएतत्तंतुनिष्ठात्यंताभावप्रतियोगीतिमिथ्यात्वानुमानेएतत्तंतुभिन्नेतंत्वंतरेमृदादौचसत्त्वापत्त्याअर्थांतरतास्यादितिभावः । पटादेरन्यत्रसत्त्वांगीकारेस्वोक्तिविरोधश्चस्यादित्याह ॥ नहितेषामिति ॥ तेषां पटादीनां । अन्यत्र परोपाधौ ॥ तथाचेति ॥ प्रतिपन्नोपाधौस्वरूपेणत्रैकालिकनिषेधप्रतियोगित्वस्यसर्वत्रत्रैका

लिकनिषेधप्रतियोगित्वपर्यंतत्वेसतीत्यर्थः । ननुसर्वत्रस्वरूपेणत्रैकालिकनिषेधप्रतियोगित्वंनात्यंतासत्त्वं । शशशृंगादौअसत्त्वस्यैतदन्यस्यैवसत्त्वादित्यतआह ॥ नहीति ॥ शशशृंगादीनामितोन्यदसत्त्वमस्तीत्याशंक्यनिषेधति ॥ नचेत्यादिना ॥ तेषां शशशृंगादीनां । निरुपाख्यत्वंनाम उपाख्यायतेअनेनेतिव्युत्पत्त्या(शब्द)पदशक्त्यविषयत्वंवाप्रतीत्यविषयत्वंवा । नाद्यइत्याह ॥ निरुपाख्यपदेनैवेति ॥ तथाचनिरुपाख्यपदशक्तिविषयतयातत्पदेनैवव्यवह्रियमाणत्वादित्यर्थः । तथाचासत्त्वेनसंप्रतिप

**नचनिरुपाख्यत्वमेवतेषामसत्वं । निरुपाख्यपदेनैवख्यायमानत्वात् । असतोऽप्रतीतावसद्वैलक्ष्यण्यज्ञानस्यासत्प्रतीतिनिरासस्यअसत्पदप्रयोगस्यचायोगाच्च । नाप्यपरोक्षतोप्रतीयमानत्वमसत्त्वं । नित्यातींद्रियेपिसत्वात् । नापिक्वचिदप्युपाधौसत्वेनाप्रतीयमानत्वमसत्वं जगतिशुक्तिरूप्यादौचैवंविधासद्वैलक्षण्यस्यशून्यवादेपिसत्वात् ।**

न्नस्याप्यसत्त्वंनस्यादितिभावः । द्वितीयेदोषमाह ॥ असतइति ॥ असद्वैलक्षण्येति ॥ अभावज्ञानेप्रतियोगिज्ञानस्यकारणत्वादितिभावः ॥ असत्प्रतीति ॥ तस्यासत्प्रतीतिप्रसक्त्यपेक्षत्वादितिभावः ॥ असत्पदेति ॥ प्रेक्षावत्कृतशब्दप्रयोगस्य शब्दार्थज्ञानपूर्वकत्वादसत्पदप्रयोगार्थमसज्ज्ञानस्यावश्यकत्वादित्यर्थः ॥ क्वचिदपीति ॥ स्वोपाधौपरोपाधौचेत्यर्थः ॥ जगतीति ॥ शून्यवादिनाजगतोसत्त्वमंगीकृतमितितद्वैलक्षण्यंत्वयासाधनीयं । तेनचनिस्स्वरूपत्वमेवासत्त्वमंगीकृतमितितद्वैल

क्षण्यमेवत्वयासाधनीयं । नतुक्वचिदप्युपाधौसत्त्वेनाप्रतीयमानत्वमसत्त्वमित्यंगीकृत्यतद्वैलक्षण्यं । तथात्वेसिद्धसाधनतास्यात् । तेनापिसांवृतसत्त्वांगीकारेणैतादृशासद्वैलक्षण्यस्यांगीकारादितिभावः ॥ नप्रतीयेतेति ॥ सत्त्वेननप्रतीयेतेत्यर्थः । उक्ताप्रतीतिंप्रति आपाद्यभूतसत्त्वेनाप्रतीतिंप्रति । क्वचिदप्युपाधौसत्त्वेनाप्रतीयमानत्वंशशशृंगादीनांकुतइत्युक्तेअसत्त्वादित्येवंसत्त्वेनाप्रतीतिप्रयोजकीभूतमसत्त्वंसत्त्वेनाप्रतीयमानत्वादन्यदेववाच्यं । अन्यथेदमेवचेदसत्त्वंस्यात्तर्ह्यसच्चेन्नप्रतीयेतेत्यापादनायोगः । असच्चेदित्यस्यसत्त्वेननप्रतीयतेचेदित्यर्थः । तथाचसत्त्वेननप्रतीयतेचेत्सत्त्वेननप्रतीयेतेत्यापाद्यापादकयोरभेदःस्यादि

त्वयाऽप्यसच्चेन्नप्रतीयेतेतिवदतोक्ताप्रतीतिंप्रतिप्रयोजकस्यान्यस्यैवासत्त्वस्यवक्तव्यत्वाच्च । ब्रह्मण्यंगीकृतंयत्प्रपन्नोपाधौत्रैकालिकनिषेधाप्रतियोगित्वात्मकाबाध्यत्वरूपंसत्त्वंतद्विरुद्धस्यैवासत्वरूपत्वाच्च । अन्यथाप्रतीत्यनुपाधिकासत्त्वाभावेब्रह्मण्यपिसत्त्वेनप्रतीतिरेवसत्त्वंस्यात् ।

त्यर्थः ॥ तद्विरुद्धस्यैवेति ॥ सत्त्वासत्त्वयोःपरस्परविरहरूपत्वस्यैवानुभवेनप्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वात्मकबाध्यत्वमेवासत्त्वंवक्तव्यंनोक्तरूपंसत्त्वेनाप्रतीयमानत्वमित्यर्थः । तथाचेतोन्यदसत्त्वंनास्तीतिभावः । अन्यथेत्यस्यविवरणमप्रतीति । सत्त्वासत्त्वयोःपरस्परविरहरूपत्वस्यस्थितत्वाज्जगतिअप्रतीत्यनुपाधिकासत्त्वाभावेऽप्रतीत्यघटितासत्त्वानंगीकारेसत्त्वेनाप्रतीयमानत्वमित्यप्रतीतिघटितासत्त्वांगीकारेइतियावत् । ब्रह्मण्यपि असत्त्वविरहरूपंसत्त्वंनामसत्त्वेनप्रतीतिरेवस्यान्नवस्तुतस्तत्रसत्त्वमस्तीतिप्राप्तेरित्यर्थः । सत्त्वेनाप्रतीयमानत्वरूपासत्त्वलक्षणस्यशशशृंगेऽव्याप्तिरित्याह ॥ येनेति ॥ ज्ञानोत्पत्तेः सत्त्व

प्रकारकज्ञानोत्पत्तेः । तथाचसत्त्वेनाप्रतीयमानत्वंनास्तीतिभावः । ननुशशशृंगमस्तीतिवाक्यान्नशशशृंगास्तित्वप्रकारकंज्ञानमु
त्पद्यते । शशशृंगंनास्तीत्ययोग्यतानिश्चयस्यतत्रप्रतिबंधकत्वादित्यतउक्तं ॥ येनपुंसेति ॥ अयोग्यतानिश्चयाभावदशायांयो
ग्यताभ्रमेणेत्यर्थः । नन्वव्याप्तिःकुत्रदीयते । नतावच्छशशृंगे तस्यास्तित्वप्रकारकारोपंप्रत्यधिष्ठानत्वेनसत्यत्वस्यावश्यकत्वेना
सत्त्वाभावेनालक्ष्यत्वात् । नहिशून्यवादिमतइवाधिष्ठानमपित्वन्मतेऽसत् । नाप्यस्तित्वे । तस्यारोप्यत्वेनासद्विलक्षणत्वरूपानि
र्वाच्यत्वेनालक्ष्यत्वादतःकथमेतदित्यतआह ॥ त्वन्मतेपिहीति ॥ अधिष्ठानं शशशृंगं । नचाधिष्ठानस्यासत्त्वेशून्यवादाप

येनपुंसाशशशृंगाभावोननिश्चितः । तस्यगोशृंगमस्तीतिवाक्यादिवश
शशृंगमस्तीतिवाक्यादपिज्ञानोत्पत्तेश्च । त्वन्मतेपिहितत्राध्यस्तस्या
स्तित्वस्यानिर्वाच्यत्वेप्यधिष्ठानमसदेव वक्ष्यतेचैतदनिर्वाच्यत्वभंगे ।

त्तिः । नहित्वयाभ्रममात्राधिष्ठानमसदित्युच्यते । किंनामतुच्छाधिकरणकभ्रमोयत्रतत्रैवतदधिष्ठानमसदित्यतोनिर्वचनीयास्ति
त्वप्रकारकभ्रमाधिष्ठानमपिशशशृंगमसदेवेतितत्राव्याप्तिरेवेतिसांप्रदायिकोर्थः । ननुशशशृंगादिशब्दान्नासतःप्रतीतिर्जायते
किंनामविकल्पमात्रमेव । यथोक्तं । "शब्दज्ञानानुपातीवस्तुशून्योविकल्प"इति । अतःसत्त्वेनाप्रतीयमानत्वमस्त्येवेतिना
व्याप्तिरित्यतआह ॥ वक्ष्यतेचेति ॥ विकल्पस्येच्छादिवज्ज्ञानान्यवृत्त्यंतरत्वंनास्तीतिवक्ष्यतइत्यर्थः । तथाचाव्याप्तिःस्यादेवे

तिभावः ॥ तद्धैकइति ॥ असदासीदित्याहुरित्यनुवादमुखेनोक्तत्वेनासतःसत्त्वप्रतीत्यासत्त्वेनाप्रतीयमानत्वरूपासत्त्वलक्षण स्यासंभवइतिभावः ॥ अन्योन्याश्रयादिति ॥ अनिर्वाच्यत्वस्यासद्विलक्षणत्वरूपत्वेनासत्त्वज्ञानेतद्घटितानिर्वाच्यत्वज्ञानंत ज्ज्ञानेचतदन्यत्वरूपासत्त्वज्ञानमित्यन्योन्याश्रयादित्यर्थः ॥ लाघवेनेति ॥ सार्वत्रिकत्रैकालिकनिषेधाप्रतियोगिरूपंयत्सत्तद न्यत्वमेवासत्त्वमस्तु लाघवात् । नतुतत्रानिर्वाच्यभिन्नत्वमपिप्रवेश्यं गौरवादित्यर्थः । अस्तुवानिर्वाच्यभिन्नत्वस्यलक्षणेप्रवेशः

"तद्धैकआहुरसदेवेदमग्रआसी"दितिश्रुत्याप्यसतस्सत्वेनप्रतीतेश्च । नापिसदनिर्वाच्याभ्या मन्यत्वमसत्त्वं अनिर्वाच्यत्वस्यासत्त्वनिरूप्यत्वेनान्योन्याश्रयात् । लाघवेनसार्वत्रिकत्रैका लिकनिषेधाप्रतियोगिरूपसदन्यत्वस्यैवतत्वाच्च । अनिर्वाच्यस्यापिस्वरूपेणत्रैकालिकनिषेधे ऽसतोनिर्वाच्यादन्यत्वासिद्धेश्च । अर्थक्रियासामर्थ्याभावादिकमसत्त्वमित्यशक्यशंकं । शु क्तिरूप्यादौशुद्धब्रह्मणिचसत्त्वात् । नचनिःस्वरूपत्वमसत्त्वंमिथ्याभूतंतुसस्वरूपमितिवाच्यं ।

तथाप्यसंभवइत्याह ॥ अनिर्वाच्यस्यापीति ॥ वियदादेरूप्यादेश्चेत्यर्थः । निषेधे निषेधांगीकारपक्षे । अनिर्वाच्यस्याप्यस त्त्वप्राप्त्यासतोनिर्वाच्यादन्यत्वाभावादसंभवइत्यर्थः । कुतोशक्यशंकमित्यतस्त्वन्मतेशुक्तिरूप्येब्रह्मणिचातिव्याप्तेरित्याह ॥ शुक्तीति ॥ मिथ्याभूतं वियदादिंकंरूप्यादिकंच ॥ सस्वरूपमिति ॥ असद्विलक्षणस्यव्यावहारिकस्यप्रातिभासिकस्यवास्व

रूपस्यांगीकारादितिभावः ॥ मिथ्याभूतस्यापीति ॥ रूप्यादेरित्यर्थः । तथाचातिव्याप्तिरितिभावः । ननुरूप्यादौवियदादौ चनिस्स्वरूपत्वंनास्ति किंतुस्वरूपमस्त्येव । नचमिथ्याभूतस्यापिस्वरूपेणैवत्रैकालिकनिषेधइतिपक्षेनिस्स्वरूपत्वंदुर्वारमित्युक्तमितिवाच्यं । मिथ्याभूतंस्वरूपमंगीकृत्यैवत्रैकालिकनिषेधांगीकारेणमिथ्याभूतस्वरूपस्यस्वरूपेणत्रैकालिकनिषेधेनसामानाधिकरण्यांगीकारात् । नचविरोधः । मिथ्यात्वादेवाविरोधादित्याशंक्यनिषेधति ॥ नचेति ॥ स्वदेशकालयोरिति ॥ वियदादिरूपप्रतियोग्याधारभूतदेशकालयोरित्यर्थः ॥ तत्स्वरूपेति ॥ प्रतियोगिस्वरूपसहिष्णोस्तदनुपमर्दकस्येत्यर्थः ॥ तत्स्वरू

मिथ्याभूतस्यापिस्वरूपेणैवत्रैकालिकनिषेधइतिपक्षेनिःस्वरूपत्वस्यदुर्वारत्वात् । नचमिथ्याभूतं स्वरूपंमिथ्यात्वादेवस्वरूपेणत्रैकालिकनिषेधसामानाधिकरण्याविरोधीतिवाच्यं । स्वदेशकालयोस्तत्स्वरूपसहिष्णोस्तत्स्वरूपप्रतिषेधत्वस्यपारिभाषिकत्वापातात् । अन्यथातंतुष्विवातंतुष्वपि

पेति ॥ वियदादिस्वरूपप्रतिषेधत्वस्येत्यर्थः । अयंभावः । लोकेअत्यंताभावतत्प्रतियोगिनोर्विरोधेनाभावस्यप्रतियोगिस्वरूपासहिष्णुत्वदर्शनात्तत्स्वरूपस्यकथंतत्प्रतिषेधेनसामानाधिकरण्यंवक्तुंशक्यं । तथात्वेप्रतियोगिस्वरूपसमानाधिकरणस्यतदत्यंताभावत्वंपारिभाषिकंस्यात् । तथाचपारिभाषिकात्यंताभावप्रतियोगित्वेपिस्वरूपेणवास्तवात्यंताभावप्रतियोगित्वंनसिद्ध्येदित्यतस्तत्सिद्ध्यर्थंतत्ररजतस्वरूपंनास्तीत्यंगीकार्यं । एवंचासत्त्वापत्तिर्दुर्वारेतिभावः ॥ अन्यथेति ॥ मिथ्यात्वादेवविरोधाभावमं

गीकृत्यनिषेधाधिकरणेपिप्रतियोगिनःसत्त्वांगीकारइत्यर्थः । ननुमृदादावपिप्रातिभासिकंपटस्वरूपमस्त्येवेत्यतउक्तं ॥ व्याव हारिकेति ॥ नचविरोधः । पटस्यमिथ्यात्वादेवाविरोधोपपत्तेरितिभावः । निषेधाधिकरणेपिप्रतियोगिनःसत्त्वमंगीकृत्यतयोः सर्वजनसिद्धदैशिकविरोधानंगीकारेप्रतियोगिनःप्रागभावेनापिसमानकालीनत्वापत्त्याकालिकोविरोधोपिनस्यात् । मिथ्यात्वादे वाविरोधस्यतत्रापिवक्तुंशक्यत्वादित्याह ॥ प्रागभावादीति ॥ किंचयदिप्रपंचेरूप्यादौचस्वरूपेणत्रैकालिकनिषेधसामाना धिकरण्याविरोधिस्वरूपंकिंचिदंगीक्रियते तर्हितुच्छेपिएतादृशस्वरूपंस्वात्यंताभावसामानाधिकरण्याविरोधिरूपंकिंचिदंगीक्रि

व्यावहारिकपटस्वरूपापातात् । प्रागभावादिसमानकालीनत्वेनाप्यविरोधापाताच्च ।
तुच्छेपिपरोक्षप्रतीत्याद्यन्यथानुपपत्त्याएतादृशस्वरूपस्यापिसुवचत्वाच्च । तस्मात्सर्व
त्रत्रैकालिकनिषेधप्रतियोगित्वमेवात्यंतासत्वं । तत्रतदानीमसदित्यनेनतत्रतदानिषे
धप्रतियोगित्वस्यैवात्यंतासदित्यनेनापिसर्वत्रसदानिषेधप्रतियोगित्वस्यैवप्रतीतेः ।

यतां तथाचनिस्स्वरूपत्वोक्त्ययोगः । विरोधश्चमिथ्यात्वादेवसमाधातुंशक्यः । यदिप्रपंचेअपरोक्षतःप्रतीत्यन्यथानुपपत्त्याकिं चित्स्वरूपमंगीकार्यमित्युच्यते तर्हितुच्छेपिपरोक्षतःशब्दादिनाप्रतीतिसंभवात्तदन्यथानुपपत्त्याकिंचित्स्वरूपमंगीक्रियतां । तथाचासंभवइत्याह ॥ तुच्छेपीति ॥ तथाचासंभवइतिभावः ॥ तस्मादिति ॥ प्रकारांतरस्यासंभवादितिभावः । सर्वत्रत्रै कालिकनिषेधप्रतियोगित्वमत्यंतासत्त्वमित्यनयोरेकार्थत्वादिदमेवासत्त्वलक्षणंवाच्यमित्याशयेनोपपादयति ॥ तत्रतदानीमि

त्यादिना ॥ तत्रतदाअसदितियथादेशविशेषेकालविशेषेचनिषेधप्रतियोगित्वंप्रतीयते एवमत्यंतासदित्यनेनापिअत्यंतंसर्वस्मि न्देशेसर्वस्मिन्कालेचासन्निषेधप्रतियोगीतिप्रतीतेरित्यर्थः । तथाचसर्वत्रत्रैकालिकनिषेधप्रतियोगित्वस्यैवात्यंतासत्त्वात्प्रपंचस्य स्वरूपेणत्रैकालिकनिषेधेतुच्छवदत्यंतासत्त्वंदुर्वारमितितात्पर्यं । ननुप्रपंचस्य नतुच्छसाम्यं प्रपंचनिषेधस्यमिथ्याभूतप्रपंचप्र तियोगिकत्वात् तुच्छसंबंधित्रैकालिकनिषेधस्यनिष्प्रतियोगिकत्वादितितन्निषेधयोर्वैलक्षण्यादित्याशंक्यनिषेधति ॥ नचेति ॥ तदभावः प्रपंचनिषेधः । इतिवावैषम्यंवक्तुंनचशक्यमित्यन्वयः । कुतइत्यतउक्तं ॥ मिथ्याभूतस्येत्यादि ॥ मिथ्या

नचमिथ्याभूतस्यापिस्वरूपेणैवनिषेधइतिपक्षेतदभावःसप्रतियोगिकः ।
तुच्छाभावस्तुनिष्प्रतियोगिकइतिवा । मिथ्याभूतस्यसदासर्वत्रस
द्वैलक्षण्यमात्रंतुच्छस्यतुस्वरूपेणैवप्रतिषेधइतिवावैषम्यंवक्तुंशक्यं ।

भूतस्यापिस्वरूपेणनिषेधइतिपक्षेतदभावोपितुच्छभाववन्निष्प्रतियोगिकएव नसप्रतियोगिकः । प्रतियोगिस्वरूपस्यैवाभावादिति भावः । ननुतथापिप्रपंचतुच्छयोःप्रकारांतरेणवैषम्यमस्ति । मिथ्याभूतस्यप्रपंचस्यसदासर्वत्रसद्वैलक्षण्यमात्रमस्ति नस्वरूपेणप्र तिषेधः । असद्विलक्षणस्वरूपांगीकारात् । तुच्छस्यतुस्वरूपेणैवप्रतिषेधइतिवैषम्यादित्याशंक्यनिषेधति ॥ मिथ्याभूतस्ये ति ॥ सदासर्वत्रेति ॥ सद्वैलक्षण्यमात्रमिति नस्वरूपेणैवप्रतिषेधइत्येवमात्रशब्दार्थोनत्वसद्वैलक्षण्यंनास्तीति तस्यांगी

कारणमात्रशब्दव्यवच्छेद्यत्वाभावादितिद्रष्टव्यं । इतिवावैषम्यंवक्तुंनचयुक्तं । कुतइत्याशंकायांमिथ्याभूतस्यापिस्वरूपेणैवनिषेधइतिपक्षइत्येतदत्रापियोज्यं । तथाचमिथ्याभूतस्यापिस्वरूपेणैवनिषेधइतिपक्षेप्रपंचस्यनसदासर्वत्रसद्वैलक्षण्यमात्रंस्वरूपेणैवप्रतिषेधादित्यर्थः । तथाचतुच्छसाम्यंदुर्वारमितिभावः । इदानींसर्वत्रत्रैकालिकनिषेधप्रतियोगित्वमेवासत्त्वमित्युक्तासत्त्वलक्षणस्यासंभवमाशंकते ॥ अथमतमिति ॥ असत्त्वादेव स्वस्यैवाभावेनसकलधर्मशून्यत्वादेव ॥ आत्यंतिकेति ॥ सर्वत्रत्रैकालिकेत्यर्थः । तथाचासदात्यंतिकनिषेधप्रतियोगित्वरूपधर्मशून्यंअसत्त्वादित्यनुमानमुक्तं । तथाचोक्तासत्त्वलक्षणस्यासंभवइतिभा

**अथमतं । असतोसत्वादेवात्यंतिकनिषेधप्रतियोगि(त्वम)तापिनेति । तन्न । असत्वस्योक्तनिषेधप्रतियोगित्वरूपत्वेनहेतोर्विरुद्धत्वात् । असतोसत्ववत्सद्वैलक्षण्यवत्त्वयोच्यमानप्रतियोगित्वाभावव**

वः ॥ असत्त्वस्येति ॥ हेतूकृतस्येत्यर्थः ॥ विरुद्धत्वादिति ॥ असत्आत्यंतिकनिषेधप्रतियोगित्वरहितंअसत्त्वात् । आत्यंतिकनिषेधप्रतियोगित्वादितिसाधनेहेतोर्विरुद्धत्वादित्यर्थः । साध्याभावव्याप्तत्वरूपंलक्षणंचाभेदेपिव्याप्यव्यापकभावांगीकारेणोपपादनीयं । (अन्यथाशब्दोनित्यःकृतकत्वादित्यत्रकृतकत्वमुपाधिःस्यात्) । एवंविरुद्धत्वमुक्त्वाऽप्रयोजकतांचाह ॥ असत इत्यादिना ॥ नन्वसतोनिर्धर्मकत्वान्नात्यंतिकनिषेधप्रतियोगित्वरूपधर्मांगीकार्यइत्यतआह ॥ असत्त्ववदिति ॥ त्वयोच्यमानेति ॥ असतोऽसत्त्वादेवात्यंतिकनिषेधप्रतियोगितापिनेतित्वयोच्यमानेत्यर्थः । नन्वसत्यसद्वैलक्षण्यादिधर्माणामभावरू

पाणांसत्त्वेपिभावरूपआत्यंतिकनिषेधप्रतियोगित्वरूपोधर्मोनांगीक्रियतइतिचेत्तत्राह ॥ परोक्षेति ॥ नन्वसत्त्वादीनांधर्माणा धर्मिसत्तानिरपेक्षत्वादसतिधर्मिणंविनाप्यवस्थानमस्तु आत्यंतिकनिषेधप्रतियोगित्वस्यतु धर्मिसत्तासापेक्षत्वात्कथमसत्युपपत्ति रित्यतआह ॥ प्रतियोगित्वस्येति ॥ अत्यंताभावप्रतियोगित्वस्येत्यर्थः । रूपादिवदितिव्यतिरेकदृष्टांतः ॥ निरपेक्षत्वादि ति ॥ प्रत्युतधर्मिणःसत्त्वेतत्रात्यंताभावप्रतियोगित्वस्यैवासंभवादितिभावः । प्रतियोगित्वस्यधर्मिसत्तानिरपेक्षत्वेदृष्टांतः ॥ प्रागभावादीति ॥ असतः अविद्यमानस्य ॥ तत्प्रतियोगित्वेति ॥ विद्यमानप्रागभावप्रतियोगित्वेत्यर्थः । नन्वविद्यमान

त्परोक्षज्ञानव्यवहारौप्रतिविषयत्ववदसद्वैलक्षण्यंप्रतिप्रतियोगित्ववच्चनिषेधप्रतियोगित्वस्याप्यु
पपत्तेश्च । प्रागभावादिदशायामसतएवघटादेस्तत्प्रतियोगित्वदर्शनेनप्रतियोगित्वस्यरूपादिवद्ध
र्मिसत्ता(निर)(त्तासापेक्षाभावाच्च)नपेक्षत्वाच्च । कालांतरेसत्व(स्यचे)स्येदानीमनुपयोगात् ।

स्यापिघटादेःप्रागभावप्रतियोगित्वंयुक्तं । उत्तरकालेघटादेःसत्त्वात् । अत्यंताभावप्रतियोगिनस्तुकदाप्यभावेनवैषम्यादित्यत आह ॥ कालांतरइति ॥ इदानीमिति ॥ घटोत्पत्तेःप्राक्प्रागभावप्रतियोगीघटइति(व्यवहारस)निरूपणसमयइत्यर्थः । ननु पूर्वोक्तादृष्टांतानयुक्ताः । तथाहि । प्रागभावादिदशायामित्येतदयुक्तं । प्रागभावएवघटप्रतियोगिकत्वमंगीक्रियते नतुघटे अ विद्यमानतादशायांतत्प्रतियोगित्वं । तथासद्वैलक्षण्यवदित्यप्ययुक्तं । सत्येवासद्वैलक्षण्यांगीकारेणासतिसद्वैलक्षण्यानंगीकारा

त् । तथाप्रतियोगित्वाभावोपिनासति । किंतुप्रतियोगित्वाभावेअसदाश्रयकत्वमेवांगीकृतं । तथाअसज्ज्ञानव्यवहारयोरेवासद्विषयकत्वं । नत्वसतितद्विषयत्वंस्वीकृतं । तथाअसद्वैलक्षण्यएवासत्प्रतियोगिकत्वं । नत्वसद्वैलक्षण्यंप्रत्यसतःप्रतियोगित्वंस्वीकृतमित्यतआह ॥ **शिष्टमिति** ॥ प्रागभावादेर्घटादिप्रतियोगिकत्वेघटादेरविद्यमानतादशायांतत्प्रतियोगित्वमवर्जनीयमेव । तयोःसमानसंवित्संवेद्यत्वादित्यादिकंवक्ष्यतइत्यर्थः । पुनरप्युक्तासत्त्वलक्षणस्यासंभवमाशंक्यनिराकरोति ॥ एतेनेति ॥ मकरंदोनाममायावादग्रंथविशेषः । प्रतियोग्यधिकरणसंसर्गज्ञानंप्रसक्तिः । तथाचासत्त्रैकालिकनिषेधप्रतियोगिअप्रसक्तत्वादि

**शिष्टमनिर्वाच्यत्वभंगेवक्ष्यते । एतेनयदुक्तंमकरंदे । असतोप्रसक्तेर्निषेधाप्रतियोगित्वमिति तच्चनिरस्तं । असतोप्रसक्त्याब्रह्मजगतोरसद्वैलक्षण्यस्यनासदासीदितिश्रौतनिषेधस्यासतिचसद्वैलक्षण्यस्यप्रतियोगित्वाभावस्यचासिद्ध्यापातात् । तस्यापिप्रतियोगिप्रतीत्यधीनसिद्धिकत्वात् ।**

त्यनुमानंद्रष्टव्यं । असतःप्रसक्त्यनंगीकारेबाधकतर्कसद्भावात्प्रसक्तिरंगीकार्या ततश्चस्वरूपासिद्धिरित्याह ॥ असतोऽप्रसक्त्येति ॥ तथाचप्रतियोगित्वेनासत्प्रसक्तिरंगीकार्येत्याशयः ॥ असतिचेति ॥ असतिसत्वंनास्तीतिसद्वैलक्षण्यसिद्धेरधिकरणत्वेनाऽसत्प्रसक्तिरपेक्षितेत्यर्थः । एतदेवोपपादयति ॥ तस्येति ॥ प्रतीतिः प्रसक्तिः । असद्वैलक्षण्यसिद्धेःप्रतियोगित्वेनासत्प्रसक्तिसापेक्षत्वादसतिसत्त्वंनास्तीतिसद्वैलक्षण्यसिद्धेरधिकरणत्वेनासत्प्रतीतिसापेक्षत्वादित्यर्थः । असतःप्रसक्त्यभावेजगदादाव

सद्वैलक्षण्यादिकंनसिद्ध्येदितिबाधकतर्के आपादकासिद्धिमाशंकते ॥ ननुतत्रेति ॥ असद्वैलक्षण्यादिस्थलइत्यर्थः । शशविषाणमस्तीतिशब्दाभासेनबुद्धिपूर्वकारोपेणवेत्यर्थः । [ पाठान्तरंबाधकतर्केऽप्रयोजकतांचाह ॥ परार्थेनेत्यादि ॥ अनिषेधेपि । प्रत्यक्षेणेत्याद्यन्वयः । नासदासीदितिश्रौतनिषेधसंग्रहायोक्तं ॥ शब्देनेति ॥ अप्रसक्तस्यापिशब्देननिषेधःकुतोनयुक्तइत्यत उक्तं ॥ परार्थेनेति ॥ शब्दस्यपरार्थत्वात्परस्यचप्रतियोगिप्रसक्त्यभावेशब्दादिनातन्निषेधकरणेशब्दस्यतंप्रत्यबोधकत्वप्राप्त्यापरस्यप्रवृत्तिनिवृत्त्योरयोगादितिभावः। यथोक्तं । संदिग्धविपर्यस्तान्यतरंप्रत्येवशब्दस्याऽर्थवत्त्वादिति ॥ अप्रसक्तस्यैवेति ॥

**ननुतत्रशब्दाभासादिनाबुद्धिपूर्वारोपेणवाप्रसक्तिर्वा । परार्थेनशब्देनाप्रसक्तस्यानिषेधेपिशब्दाभासादिमूलकेप्रतियोगिस्मृत्यादिकेसतिप्रत्यक्षेणाप्रसक्तस्यैववानिषेधोयुक्तः ।**

शब्दाभासादिनाबुद्धिपूर्वकारोपेणवेतिवर्तते । प्रत्यक्षेणनिषेधेएतावतीसामग्रीअपेक्षितेत्याह ॥ शब्देत्यादि ॥ ब्रह्मजगद्वाऽसदित्येवंशब्दाभासजन्यानुभवमूलकेप्रतियोगिस्मृत्यादिकेसतिचक्षुराद्युन्मीलनानंतरंझडितिअप्रसक्तस्यैवनिषेधानुभवादित्यर्थः । प्रतियोगिस्मृतिमात्रस्यप्रतियोग्यधिकरणसंसर्गज्ञानरूपत्वाभावान्नस्मृत्याप्रसक्तिर्वक्तुंशक्येतिहृदयं । प्रत्यक्षेणेत्युक्त्यानासदासीदितिश्रौतोनिषेधोव्यावर्तितः । स्वप्रकाशेब्रह्मणिअसद्वैलक्षण्यंप्रत्यक्षेणैवास्ति । स्फुरणमित्यादिनाप्रतीतेः । जगतितुस्पष्टमेवाऽसद्वैलक्षण्यंप्रत्यक्षसिद्धं । अप्रत्यक्षेप्यऽसतिसद्वैलक्षण्यप्रतियोगित्वाभावस्यचवायौरूपाभाववत्प्रत्यक्षत्वसंभवादितिभावः ॥

अन्यथेति ॥ शब्दाभासादिनाप्रसक्तिर्वाअप्रसक्तस्यैववाप्रत्यक्षेणनिषेधइत्यनंगीकारेइत्यर्थः ॥ नसिध्येदिति ॥ तथाचतत्रां
गुल्यग्रेकरिशतमितिशब्दाभासेनप्रतियोग्यधिकरणसंसर्गज्ञानरूपाप्रसक्तिर्वाशब्दाभासादिजन्यानुभवजन्यसंस्कारत्वरूपोहेतुः
सिद्धइतिभावः ॥ प्रकृतेपीति ॥ अप्रसक्तेर्निषेधाप्रतियोगित्वमूलकस्मृत्यादिकेसतिप्रत्यक्षेणैवाप्रसक्तस्यैवानिषेधइत्यंगीकार्य
मितिहेतुबाधकतर्कस्यायुक्तत्वमितिप्रकृतेपीत्यर्थः । तदुपपादयति ॥ शशशृंगमिति ॥ यथाअनुभवसिद्धायाःअंगुल्यग्रेकरि
शतंनास्तीतिप्रतीतेःदुरपह्नवत्वात्तदुपपादकंशब्दाभासादिनाप्रतियोग्यधिकरणसंसर्गज्ञानरूपप्रसक्तिरंगीकार्येतिभावः । तथा
चाऽसतोऽप्रसक्तेःनिषेधाप्रतियोगित्वमित्यनुमानेस्वरूपासिद्धिरनेनैवोक्तेतिज्ञातव्यं । प्रत्यक्षेणैववाऽप्रसक्तस्यैववाप्रतिषेधइति

अन्यथाअंगुल्यग्रेहस्तिशताभावोनसिध्येदितिचेत्समंप्रकृतेपि । शशशृंगंनास्तीत्यबाधितप्रतीतेः ।

पक्षेअनुमानेऽप्रयोजकतेतिज्ञातव्यं ॥ अबाधितेति ॥ निर्बाधसाक्षिसिद्धेत्यर्थः । असतोपिशब्दाभासादिनाप्रसक्तिसद्भावात्
निषेधाप्रतियोगित्वमित्युक्तंतदयुक्तं । शशशृंगंनास्तीत्यत्रयद्वास्तवमसत्शृंगंतन्ननिषिध्यते । यन्निषिध्यते । तन्नासत् । किंत्व
निर्वाच्यमेव । तथाचनासतोनिषेधप्रतियोगित्वमित्यसत्वलक्षणस्यासंभवइत्याशंक्यनिराकरोति ॥ नचेति ॥ शृंगस्य । शश
शृंगस्य । इतिपाठांतरंक्वचित्दृश्यते । ] बाधकतर्केआपादकासिद्धिमुक्त्वाअसतःप्रसक्त्यभावेपिजगदादावसद्वैलक्षण्यासिद्धिः
प्रत्यक्षेणैवभविष्यतीत्यप्रयोजकतांचाह ॥ परार्थेनेत्यादिना ॥ नासदासीदित्यनेनअसत्तदानींप्रलयेनासीदित्येवंशब्देनयत्रा
सतःसत्त्वंनिषिध्यते । तत्रासतःप्रसक्तिरपेक्षिता । कुतइतिचेत् । शब्दस्यपरबोधनार्थंप्रयुज्यमानत्वात् । परस्यप्रतियोगिप्रस

त्त्यभावेपिशब्देनतन्निषेधेशब्दस्यतत्प्रत्यबोधकत्वापातेनपरस्यप्रवृत्तिनिवृत्त्योरयोगात् । यथोक्तं । "संदिग्धविपर्यस्तान्यतरं प्रत्येवशब्दस्यार्थवत्त्वा"दिति । तथाचयत्रशब्देननिषेधस्तत्राप्रसक्तस्यनिषेधायोगेनशब्दाभासेनाहार्यारोपेणवासत्प्रतीतिसापेक्षत्वेपियत्रशब्दाभासादिमूलकानुभवजन्यसंस्कारमूलकप्रतियोगिस्मरणेजातेचक्षुराद्युन्मीलनानंतरमसत्प्रसक्त्यभावेपिझडिति जगदादावसद्वैलक्षण्यसिद्धिःतत्रप्रत्यक्षेणैवभविष्यति । भूतलेघटाभावज्ञानवत् । नचप्रतियोगिस्मरणमेवतत्रप्रसक्तिरितिवाच्यं । स्मरणस्यप्रतियोगिज्ञानरूपत्वेपिप्रतियोग्यधिकरणसंसर्गज्ञानरूपप्रसक्तित्वाभावादितिभावः । प्रत्यक्षेणाप्रसक्तस्यैवनिषेधानंगीकारेबाधकमाह ॥ अन्यथेति ॥ नह्यंगुल्यग्रेहस्तिशतंप्रसक्तमितिभावः । यदितत्रांगुल्यग्रेहस्तिशतमितिशब्दाभासजन्यानुभवजनितसंस्कारमूलकेप्रतियोगिस्मरणेसतिअप्रसक्तस्यैवनिषेधइतिब्रूषेतर्हिजगदादावप्येवमेवप्रतियोगिस्मरणेसतिअसत्प्रसक्त्यभावेपितन्निषेधरूपासद्वैलक्षण्यस्यप्रत्यक्षेणैवसिद्धिसंभवादसतःप्रसक्त्यभावेजगदादावसद्वैलक्षण्यंनसिद्ध्येदितितर्कैअप्रयोजकतेतिभावः ॥ प्रकृतेपीति ॥ असतोऽप्रसक्तेर्निषेधाप्रतियोगित्वमितिप्रकृतेमकरंदोक्तानुमानेप्यप्रयोजकत्वंसमानमित्यर्थः । अत्रापिअसतोप्रसक्तत्वेपिशब्दाभासजन्यानुभवजनितसंस्कारमूलकाऽसद्रूपप्रतियोगिस्मरणानंतरंप्रत्यक्षेणैवनिषेधप्रतियोगित्वसिद्धिसंभवेनाप्रयोजकत्वसाम्यादित्यर्थः । ननुअसत्प्रतियोगिकोनिषेधोनप्रत्यक्षसिद्धइतिचेत्तत्राह ॥ शशशृंगंनास्तीत्यबाधितप्रतीतेरिति ॥ अबाधितप्रत्यक्षप्रतीतेरनुभवसिद्धत्वादित्यर्थः । यदुक्तंअसतोपिनिषेधप्रतियोगित्वंशशशृंगंनास्तीत्यबा

धितप्रत्यक्षप्रतीतिसिद्धमितितन्न । मन्मतेऽसद्विविधमस्ति वास्तवासदेकं अनिर्वाच्यभूतमाभासासदपरं । तत्रशशशृंगंनास्ती तिनिषिध्यमानंयच्छृंगंतन्नवास्तवासत् । किंत्वनिर्वाच्यभूताभासासदेव । तथाचत्रैकालिकनिषेधप्रतियोगित्वरूपासत्त्वलक्षण स्यवास्तवेऽनाभासरूपेअसत्यसंभवइत्याशयेनाशंक्यनिराकरोति ॥ नचेत्यादिना ॥ अनिर्वाच्यस्यैवेति ॥ आभासासद्रूप स्यशशशृंगस्येत्यर्थः । नवास्तवासद्भूतशृंगस्येत्येवकारार्थः । तथाचाऽसत्वलक्षणस्यासंभवइतिभावः । कुतोनेतिचेत् । अत्र प्रष्टव्यं । अनिर्वाच्यस्यैवशशशृंगस्यनिषेधइत्येवंतार्किकरीत्योच्यतेत्वद्रीत्यावा । नाद्यइत्याह ॥ अनाभासस्यैवेति ॥ अन्य

नचतत्रापिबुद्धिपूर्वकमारोपितस्यानिर्वाच्यस्यैवशृंगस्यनिषेधः । अनाभासस्यै
वारोप्यनिषेधइतितार्किकमतेआभासस्यानिर्वाच्यस्यप्रसक्त्यानाभासस्यनिषे
धइतित्वन्मतेचानिर्वाच्यान्यस्यैवशृंगस्यनिषेद्धव्यत्वात् । जगदादावनिर्वा
च्यभूताभासासद्वैलक्षण्यमेव नत्वनाभासासद्वैलक्षण्यमित्यापाताच्च ।

त्रविद्यमानस्यवास्तवस्यप्रधानभूतस्यैवेत्यर्थः । तार्किकमतेअनिर्वाच्यान्यस्यैवेत्यन्वयः । तथाचानिर्वाच्यान्यददनाभासभूतं वास्तवासद्भूतंशशशृंगंतस्यैवनिषेद्धव्यत्वादित्यर्थः । नापिद्वितीयइत्याह ॥ आभासस्येति ॥ अनिर्वाच्यान्यस्य आभासभू तानिर्वाच्यान्यस्यानाभासस्यवास्तवासद्भूतशृंगस्यैवेत्यर्थः । तथाचासतएवनिषेधप्रतियोगित्वान्नलक्षणस्यासंभवइतिभावः । यत्आभासासत्अनिर्वाच्यंतदेवनिषेध्यंयदनाभासासद्वास्तवंतन्ननिषेध्यमितिद्विविधासत्कल्पनेदूषणमाह ॥ जगदादाविति ॥

अनिर्वाच्यभूतंयदाऽभासासत्तद्वैलक्षण्यमित्यर्थः । तथाचशून्यवादिनोनानिष्टमितिभावः । असतआभासत्वंचानिर्वाच्यत्वेनारोपितत्वादितिज्ञातव्यं । अनाभासासत् वास्तवासत् । तथाचैवंद्विविधासत्कल्पनेअतिप्रसंगाद्वास्तवासतएवनिषेद्धव्यत्वेऽसत्त्वलक्षणस्यासंभवोनास्तीतिसिद्धमितिद्रष्टव्यं । इदानीमसत्त्वलक्षणस्यातिव्याप्तिमाशंकते ॥ नन्विति ॥ सदासर्वत्राविद्यमानत्वमिति ॥ सर्वत्रत्रैकालिकनिषेधप्रतियोगित्वमित्यर्थः ॥ अनाश्रितेति ॥ समवायेनकुत्राप्यनाश्रितत्वात्सदासर्वत्रतदत्यंताभावएवास्तीतिभावः । नन्वात्मानमिथ्यातदत्यंताभावस्यकेवलान्वयित्वेनात्मादौत्रैकालिकनिषेधप्रतियोगित्वेपिप्रति

ननुसदासर्वत्राविद्यमानत्वमसत्वंचेदनाश्रितात्मादिविभुद्रव्यात्यंताभावेपिकेवलान्वयीत्यात्मादिरप्यसन्स्यादितिचेत् तर्हित्वन्मतेपिआत्मामिथ्यास्यात् । "तस्यापिसएवाधस्तादि"त्यादिश्रुतिप्रतिपन्नोपाधौकालत्रयेप्यभावात् ।

पन्नोपाधेरभावेनोक्तमिथ्यात्वलक्षणाभावान्नातिव्याप्तिरित्यतआह ॥ तस्यापीति ॥ भूमरूपात्मनःप्रतिपन्नेउपाधौअधरादिप्रदेशरूपे । ननुनात्मनोमिथ्यात्वंप्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वरूपलक्षणाभावात् । नचोक्तरीत्याश्रुतिप्रतिपन्नोपाधौकालत्रयेप्यभावादित्युक्तमितिवाच्यं । सदासर्वत्रात्मेत्यबाधितप्रतीत्यास्वोचितेसर्वस्मिन्देशेस्वोचितेसर्वस्मिन्कालेचसत्त्वेनसार्वदैशिकसार्वकालिकनिषेधप्रतियोगित्वरूपलक्षणाभावात् । किंचप्रतिपन्नोपाधिरपितस्यनास्ति । नचश्रुतिप्रतिपन्नोपाधिरस्तीति

वाच्यं । कुंडबदरादाविवोर्ध्वाधरीभावेनप्रतिपन्नोपाधेर्विवक्षितत्वात् । आत्मनश्चविभुत्वेनश्रुतिप्रतिपन्नोपाधौऊर्ध्वाधरीभावेनाभावात् । प्रत्युताधरादेर्ब्रह्मण्यारोपितत्वएवश्रुतेस्तात्पर्याच्च । ननूर्ध्वाधरीभावहीनश्चेदात्मास्वोचितेदेशेकथमस्तीतिचेत्सामान्यादिवदितिब्रूमः । नहिघटेघटत्वमूर्ध्वाधरीभावेनास्ति । अयुतसिद्धिस्थलेऊर्ध्वाधरीभावाभावात् । तथाचोर्ध्वाधरीभावहीनमपिसामान्यंयथास्वदेशादावस्ति । एवमात्माप्यूर्ध्वाधरीभावहीनोपिस्वदेशकालयोरस्तीतिमिथ्यात्वलक्षणाभावान्नातिव्याप्तिरितियद्युच्यते । तर्हिततएवसदासर्वत्रात्मेतिसार्वदेशिकसार्वकालिकसत्त्वावगाह्यबाधितप्रतीतिबलादेवस्वोचितदेशकालयोःस

अथविभुत्वेनोर्ध्वाधरीभावहीनोप्यात्मासामान्यादिवत्स्वदेशकालयोरप्यस्तिसदास
र्वत्रात्मेत्यबाधितप्रतीतेरितिनतस्यमिथ्यात्वं । तर्हिततएवनासत्वं । देशकालावपिस
दासर्वत्रदेशकालावित्यबाधितप्रतीत्याप्रमेयत्वाभिधेयत्ववत्तार्किकाभिमत(देशका)

त्त्वावगमात्सार्वदेशिकसार्वकालिकनिषेधप्रतियोगित्वरूपासत्त्वमप्यंगीकर्तुमशक्यमितिनास्मदुक्तासत्त्वलक्षणस्यात्मन्यतिव्याप्तिरित्याह ॥ अथेत्यादिना ॥ नन्वथाप्यसत्त्वलक्षणस्यदेशकालयोरतिव्याप्तिः । आत्माश्रयप्रसंगेनदेशकालयोर्देशकालयोरभावेनसार्वदैशिकसार्वकालिकनिषेधप्रतियोगित्वसद्भावादित्यतआह ॥ देशकालावपीति ॥ देशःसर्वदासर्वत्रास्तिकालःसदासर्वत्रास्तीत्यबाधितप्रतीत्यादेशकालयोरपिदेशकालयोःसद्भावावगमादित्यर्थः । तथाचसार्वदैशिकसार्वकालिकनिषेधप्रतियोगित्वाभावान्नातिव्याप्तिरितिभावः । नन्वेवंतर्ह्यात्माश्रयइत्यतआह ॥ प्रमेयत्वेति ॥ प्रमेयत्वंप्रमेयत्वेस्तिअभिधेयत्वेचास्ति एवम

भिधेयत्वमभिधेयत्वेस्तिप्रमेयत्वेचास्तीत्येवंस्ववृत्तित्वमन्योन्यवृत्तित्वंचास्तीत्यर्थः ॥ दिक्कालेति ॥ तदत्यंताभावस्यसर्वत्रसत्वात्दिगत्यंताभावोदिगत्यंताभावेकालात्यंताभावेचास्ति । एवंकालात्यंताभावोपिकालात्यंताभावेदिगत्यंताभावेचास्तीत्यर्थः । तथाचात्माश्रयःप्रामाणिकइतिभावः ॥ अन्यथेति ॥ स्ववृत्तित्वान्योन्यवृत्तित्वयोरभावइत्यर्थः ॥ प्रातिभासिकत्वमिति ॥ तथाहि । देशकालयोःपारमार्थिकत्वायोगा(गात्व्यावहारिकप्रति)लौकिकप्रतिपन्नोपाधेरभावेनतत्रनिषेधप्रतियोगित्वासंभवात् । तथाब्रह्मणोप्यहमितिस्वप्रकाशतयासिद्धस्यशुक्तिवदध्यस्तभूतदेशकालसंभिन्नतयाप्रतीयमानत्वाभावेनप्रतिपन्नोपाधित्वासंभवे

दिक्कालात्यंताभाववच्चस्ववृत्तीअन्योन्यवृत्तीच । अन्यथा
त्वन्मतेपितयोःप्रातिभासिकसत्वंस्यादितिनकश्चिद्दोषः ।

नतत्रापिनिषेधप्रतियोगित्वासंभवेनव्यावहारिकत्वायोगात् । प्रतीयमानत्वेनचासत्त्वायोगात् । देशःसदासर्वत्रास्तिकालःसदासर्वत्रास्तीत्यबाधितप्रतीतेरपलपितुमशक्यतयातयोःस्ववृत्तित्वाद्यनंगीकारेदेशकालयोर्देशकालौप्रतिभ्रांतिप्रतिपन्नोपाधित्वप्रास्यातत्रनिषेधप्रतियोगिनोर्देशकालयोरूप्यवत्प्रातिभासिकत्वमेवपरिशेषात्स्यादित्यर्थः । तथाचदेशकालयोःस्ववृत्तित्वादिकेंगीकार्येसार्वदेशिकसार्वकालिकनिषेधप्रतियोगित्वाभावान्नासत्त्वलक्षणस्यदेशकालयोरतिव्याप्तिरितिभावः । तथाचासत्त्वलक्षणस्यदेशकालयोरपिनकश्चिदतिव्याप्तिरूपदोषइतिसिद्धमितिज्ञातव्यं । निषेधप्रतियोगित्वंस्वरूपेणेतिपक्षेआपादितमत्यंतासत्त्वमुपसं

हरति ॥ तस्मादिति ॥ स्वोक्तमुपपादनंवियत्पादीयानुव्याख्यानसंमत्याद्रढयति ॥ तदुक्तमिति ॥ अनेन" क्वाप्युक्तस्योपपादना "दित्युक्तंप्रदर्शितंभवति ॥ अन्योन्याश्रयादिति ॥ अबाध्यत्वरूपपारमार्थिकत्वज्ञानेसतितद्घटितबाध्यत्वरूपमिथ्यात्वज्ञानं बाध्यत्वरूपमिथ्यात्वज्ञानेचसतितन्निरूप्याबाध्यत्वरूपपारमार्थिकत्वज्ञानमित्यन्योन्याश्रयइत्यर्थः॥स्वरूपेणैवेति॥

तस्मात्स्वरूपेणत्रैकालिकनिषेधप्रतियोगित्वेअत्यंतासत्वंदुर्वारं । तदुक्तं । "नासीदस्तिभविष्यच्चतदितिज्ञानमेयता । यदिबाधस्तदाऽसत्वंतेनैवांगीकृतंपुन" रिति । नापिपारमार्थिकत्वाकारेणत्रैकालिकनिषेधप्रतियोगित्वमित्यंत्यः । अबाध्यत्वरूपपारमार्थिकत्वस्यबाध्यत्वरूपमिथ्यात्वनिरूप्यत्वेनान्योन्याश्रयात् । रूप्यंनास्तिनासीन्नभविष्यतीतिनेहनानास्तिकिंचनेतिचस्वरूपेणैवनिषेधाच्च । अन्यथानृश्रृंगादेरपिनस्वरूपेणनिषेधःकिंतुसत्वेनेतिस्यात् । रूप्यवत्तत्पारिमार्थिकत्वस्याप्यपरोक्षप्रतीत्यन्यथानुपपत्त्याधीकालेवर्तमानतयानिषेधायोगाच्च ।

तथाचपारमार्थिकत्वाकारेणनिषेधाभावात् पारमार्थिकत्वाकारेणनिषेधप्रतियोगित्वरूपमिथ्यात्वलक्षणस्यासंभवइ(त्यर्थः)त्याशयः ॥ सत्त्वेनेति ॥ पारमार्थिकत्वाकारेणेत्यर्थः । प्रकारांतरेणाप्यसंभवमाह ॥ रूप्यवदिति ॥ अयमर्थः । रूप्यंपारमार्थिकत्वाकारेणकुतोनिषिध्यतेस्वरूपेणैवकुतोननिषिध्यतइतिपृष्टेस्वरूपेणनिषेधेऽसत्त्वापत्त्याअपरोक्षप्रवृत्तेरनुपपत्त्याऽसद्विलक्षणस्वरूपस्यधी

कालेवर्तमानतयातत्स्वरूपमंगीकृत्यतत्रपारमार्थिकत्वमेवनिषिध्यतेसविशेषणेहीतिन्यायादितियदिब्रूषे तर्हिपारमार्थिकत्वमपिरूप्येनिषेद्धुंनयुक्तं । तस्यापिरूप्येअपरोक्षतःप्रतीयमानत्वेनधीकालेसत्त्वात् । अन्यथाप्रवृत्त्ययोगात् । तथाचासंभवइति । ननुरूप्यगतपारमार्थिकत्वस्याप्यपरोक्षतःप्रतीत्यन्यथानुपपत्त्यास्वरूपेणनिषेधायोगात्तदपिपारमार्थिकत्वाकारेणैवनिषिध्यतइतिचेत्तत्राह ॥ पारमार्थिकत्वस्येति ॥ रूप्यगतपारमार्थिकत्वस्यापिपारमार्थिकत्वेननिषेधेतस्याप्यपरोक्षतःप्रतीयमानत्वेनस्वरूपेणनिषेधायोगात्तस्यापिपुनःपारमार्थिकत्वाकारेणनिषेधेऽनवस्थेतिभावः । ब्रह्मण्यतिव्याप्तिंचाह ॥ सुखादीत्यादिना ॥ ननुब्र

पारमार्थिकत्वस्यपारमार्थिकत्वेननिषेधेत्वनवस्था । सुखाद्यनुभवरूपस्य
ब्रह्मणोपिमयिसुखाद्यनुभवइत्यादिप्रत्यक्षेणसएवाधस्तादित्यादिश्रुत्याचप्र
तिपन्नोपाधौनिर्धर्मकत्वेनपारमार्थिकत्वाकारेणनिषेधेनातिव्याप्त्यापत्तेश्च ।

ह्मणःपारमार्थिकत्वात्कथंपारमार्थिकत्वाकारेणनिषेधइत्यतउक्तं ॥ निर्धर्मकत्वेनेति ॥ ननुप्रतिपन्नोपाधावितिलक्षणेविशेषणदानात्तस्यचब्रह्मण्यभावान्नातिव्याप्तिरितिचेन्न । उपाधेःप्रतिपन्नत्वंप्रत्यक्षेणश्रुत्यावावाच्यं । तादृशोपाधिद्वयमपिअहमर्थाधारादिरूपंब्रह्मण्यस्तीत्युक्तं ॥ मयीत्यादि ॥ मयीत्यनेनाहमर्थस्याधिष्ठानत्वंप्रत्यक्षेणप्रतीयतइत्यर्थः । ननुमदंशस्यसुखानुभवंप्रत्येवाधिष्ठानत्वंनब्रह्मप्रतीत्यतआह ॥ सुखादीति ॥ ननुनब्रह्मण्यतिव्याप्तिःप्रतिपन्नोपाधिशब्देनाध्यस्तंप्रतियदधिष्ठानंतेद

वविवक्षितं । नचब्रह्माधिष्ठानभूतोमदंशोधरादिश्चाध्यस्ताधिष्ठानं । ब्रह्मणोऽनध्यस्तत्वात् । एवंचाध्यस्ताधिष्ठानतयाप्रतिपन्नोपाधेरभावेनतद्घटितलक्षणस्यनातिव्याप्तिरित्यतआह ॥ प्रतिपन्नेति ॥ आत्माश्रयादिति ॥ अध्यस्ताधिष्ठानत्वेनप्रतिपन्नोपाधौनिषेधप्रतियोगित्वरूपमिथ्यात्वलक्षणस्याध्यस्तत्वरूपमिथ्यात्वघटितत्वेनात्माश्रय(यादित्य)इत्यर्थः । लक्षणमादौज्ञात्वातेनलक्ष्यंपश्चात्प्रतिपत्तव्यं । लक्षणमपिचेल्लक्ष्यघटितंस्यात्तदास्वापेक्षयास्वस्यपूर्वंज्ञातव्यत्वप्राप्त्याज्ञप्तावात्माश्रयइतिभावः । एवमेवैवंजातीयकेसर्वत्रद्रष्टव्यं । ननुअसच्चिद्भिन्नत्वमेवाध्यस्तत्वंविवक्षितं । नमिथ्यात्वं । येनपर्यायत्वप्राप्त्याआत्माश्रयःस्यादि

प्रतिपन्नोपाधिशब्देनाध्यस्ताधिष्ठानविवक्षायांचाध्यस्तत्वस्यनिरु
च्यमानमिथ्यात्वानतिरेकेणात्माश्रयात् । शेषवैयर्थ्याच्च ।

तिचेत्तर्हिलाघवान्निरुक्ताध्यस्तत्वमेवमिथ्यात्वमस्तु । अमितिचेत्तर्हिप्रतिपन्नोपाधावित्यादिशेषवैयर्थ्यंस्यादित्याह ॥ शेषेति ॥ नचासच्चिद्भिन्नत्वरूपाध्यस्तत्वमेवमिथ्यात्वमस्तुशिष्टंत्यज्यतइतिवाच्यं । तादृशमिथ्यात्वस्यजगत्यस्माभि(रप्यंगी)रंगीकारेण सिद्धसाधनापत्तेरित्याशयः । ननुप्रतिपन्नोपाधौपारमार्थिकत्वाकारेणत्रैकालिकनिषेधप्रतियोगित्वलक्षणस्यनब्रह्मण्यतिव्याप्तिस्तस्यप्रतिपन्नोपाधेरेवाभावात् । नचमदंशोधरादिश्चतथाभूतोस्तीतिवाच्यं । सएवाधस्तादित्यादिश्रुत्यामदंशाधरादेःसमस्तस्यापिब्रह्मण्यारोपितत्वावगमेनतस्यैवसर्वारोपाधिष्ठानतयामदंशादेःब्रह्मप्रत्यधिष्ठानत्वायोगादित्यस्वरसादेतादृशमिथ्यात्वस्यज

गतः सद्रूपत्वाविरोधित्वात्तत्साधने अर्थांतरतास्यादित्याह ॥ ब्रह्मणइत्यादिना ॥ यथानिर्धर्मकत्वेनब्रह्मणिपारमार्थिकत्वरूपधर्माभावेपिसद्रूपत्वमस्ति । एवंघटादावपिपारमार्थिकत्वरूपधर्माभावेपिसद्रूपत्वमेवास्तु नमिथ्यात्वं । नचब्रह्मणःप्रतिपन्नोपाधिर्नास्तिघटादेःसोस्तीतिवैलक्षण्यमितिवाच्यं । किंतावता ब्रह्मणःप्रतिपन्नोपाध्यभावेतत्प्रयुक्तपरिच्छिन्नत्वंनास्तीतिप्राप्तं । तथाचापरिच्छिन्नसद्रूपंजातं घटादेस्तुप्रतिपन्नोपाधिसद्भावेनतत्रसतोघटादेःतत्प्रयुक्तंपरिच्छिन्नत्वमस्तीतिप्राप्तं । तथाचघटादिकंपरिच्छिन्नसद्रूपंजातं । एवंचब्रह्मजगतोःपरिच्छिन्नत्वापरिच्छिन्नत्वाभ्यामेवविशेषेपिसद्रूपत्वेविशेषाभावाद्ब्रह्मवज्जगदपिपरमार्थसद्रू

**ब्रह्मणःप्रतिपन्नोपाध्यभावेपिपारमार्थिकत्वरूपधर्माभावस्यब्रह्मण्यपरिच्छिन्नसद्रूपत्वाविरोधित्ववद्घटादेःप्रतिपन्नोपाधिसद्भावेपिपारमार्थिकत्वाभावस्यघटादौपरिच्छिन्नसद्रूपत्वाविरोधित्वोपपत्तेश्च । नहिब्रह्मण्यपिस्वरूपातिरिक्तंपारमार्थिकत्वंतत्वतोस्ति । अद्वैतहानेः ।**

पंस्यादित्यर्थांतरतेतिभावः । ननुयथाद्रव्यत्वहीनंगुणादिकमद्रव्यमेव । एवंपारमार्थिकत्वहीनंजगदपरमार्थमेवभवति न(पारमार्थिकमिति)परमार्थसदितिचेत्तर्हिब्रह्माप्येवमपरमार्थसत्स्यात्कुतइत्यतआह ॥ नहीति ॥ कुतःपारमार्थिकत्वंतत्त्वतोनास्तीत्यतःपारमार्थिकत्वस्यतात्विकत्वेअद्वैतहानिःस्यादित्याह ॥ अद्वैतेति ॥ इदमुपलक्षणं । निर्धर्मकत्वादित्यपिद्रष्टव्यं । तथाच ब्रह्माप्यपरमार्थसत्स्यादितिभावः । ननुपारमार्थिकत्वस्यतत्त्वतःसत्त्वेपिनाद्वैतहानिः तस्यब्रह्मस्वरूपत्वेनब्रह्माद्वैताविरोधित्वा

दित्यतआह ॥ नचेति ॥ नन्वेवंब्रह्मजगतोरुभयोरपिपारमार्थिकत्वसत्त्वेतयोःसाम्यमेवस्यात् । नचतद्युक्तं । ब्रह्मणोऽसदृश त्वावगमादतःसत्यत्वमिथ्यात्वाभ्यामेववैषम्यंवाच्यमित्याशंकायामाह ॥ एवंचेति ॥ कालत्रयेपीति ॥ तथाचनित्यमिति भावः ॥ कदाचिदेवेति ॥ तथाचानित्यमितिभावः । मिथ्यात्वस्ययद्द्वितीयलक्षणंतन्निराकरणंकारिकयासंगृह्णाति ॥ तथाचे ति ॥ रूप्यादेरिति ॥ स्वरूपेणनिषेधेऽसत्त्वाप(त्तिरि)त्तेरितिभावः । तात्विकत्वेन पारमार्थिकत्वेन । आत्मनोपिच समान

नचसोपाधिकबाधाभावगर्भितंपारमार्थिकत्वंनिरुपाधिकब्रह्ममात्रं । एवंचब्रह्मकालत्रयेपिसत्वि यदादिरूप्यादिचकदाचिदेवेतिनित्यत्वानित्यत्वाभ्यामेववैषम्यं । नतुसत्यत्वमिथ्यात्वाभ्यां । तथाच । "स्वरूपेणात्रिकालस्थनिषेधोनास्तितेमते । रूप्यादेस्तात्विकत्वेननिषेधस्त्वात्मनोपिच" । नापिज्ञानत्वे नज्ञाननिवर्त्यत्वमितितृतीयः । अतीतघटादावव्याप्तेः । शुक्तिज्ञानेनरूप्यंनष्टमितिकदा(चिदनुभवा भावेन)प्यननुभवेनतत्राप्यव्याप्तेश्च । एतावंतंकालंशुक्त्यज्ञानमासीद्भ्रमआसीदित्यनुभवेनशुक्तिव त्सत्येअज्ञानभ्रमादौशुक्तिज्ञानेनतदज्ञानंनष्टमित्यनुभवेनज्ञानत्वेनज्ञाननिवर्त्यत्वस्यसत्वेनातिव्याप्तेश्च।

मितिशेषः । निर्धर्मकत्वादितिभावः ॥ अतीतेति ॥ ज्ञानेनविनास्वतएवनिवृत्तत्वादितिभावः ॥ अव्याप्तेश्चेति ॥ तथाचा नुमानेसाध्यवैकल्यमितिभावः । लक्षणोपपादनायशुक्तिज्ञानेनतदज्ञानमित्यादि । इदमुपलक्षणं । भ्रमश्चनष्टइत्यनुभवेनेत्यपि द्रष्टव्यं । नन्वज्ञानभ्रमयोर्मिथ्यात्वेनलक्ष्यत्वान्नातिव्याप्तिरित्यतउक्तं ॥ एतावंतमिति ॥ भ्रमरूपज्ञानस्वरूपस्यसत्यत्वेपिवि

षयस्यबाध्यत्वंतुपरमतेब्रह्मस्वरूपत्वेनसत्यभूतसाक्षिविषयस्यदुःखादेरिवोपपन्नमितिभावः । लक्षणस्यासंभवंचाह ॥ अपरोक्षेति ॥ अपरोक्षाध्यास(स्य)निवर्तकतावच्छेदकंज्ञानेनज्ञानत्वं शंखःश्वेतःशंखत्वादित्यानुमानिकविशेषदर्शनरूपज्ञानेसत्यपिपीतःशंखइत्यपरोक्षभ्रमानिवृत्तेरतिप्रसक्तत्वात् । अतोपरोक्षज्ञानत्वमेववाच्यं । तथाचमिथ्याभूतेअपरोक्षजगदध्यासेकेवलज्ञानत्वावच्छिन्ननिवर्तकताकज्ञाननिवर्त्यत्वाभावादसंभवइतिभावः ॥ ज्ञानत्वव्याप्यधर्मेणेति ॥ तथाचापरोक्षज्ञानत्वस्यापिज्ञानत्वव्याप्यधर्मत्वेनब्रह्मापरोक्षज्ञाननिवर्त्येजगदपरोक्षाध्यासेनासंभवइतिभावः ॥ स्मृतित्वेनेति ॥ स्मृतित्वस्यज्ञानत्वव्याप्यधर्म

अपरोक्षाध्यासंप्रतिज्ञानस्यापरोक्षतयानिवर्तकत्वेनज्ञानत्वेनानिवर्तकत्वाच्च । ज्ञानत्वव्या
प्यधर्मेणज्ञाननिवर्त्यत्वस्यचेच्छाद्यनिवर्त्यैस्मृतित्वेनस्मृतिनिवर्त्यैसंस्कारादावतिव्याप्तेः ।

त्वादितिभावः । ननुस्मृतौसंस्कारनिवर्तकतावच्छेदकंनस्मृतित्वं । येनज्ञानत्वव्याप्यधर्मेणज्ञाननिवर्त्यत्वसत्त्वादतिव्याप्तिःस्यात् । किंतूत्तरात्मविशेषगुणत्वमेव । नचेदंज्ञानत्वव्याप्यधर्मः । अतोलक्षणाभावान्नातिव्याप्तिरितिचेन्न । संस्कारनिवर्तकतावच्छेदकंस्मृतित्वमेववाच्यं । नोत्तरात्मविशेषगुणत्वं । यद्युत्तरात्मविशेषगुणत्वंसंस्कारनिवर्तकतावच्छेदकंस्यात्तर्हिघटानुभवेनसंस्कारोत्पत्त्यनंतरंघटोमेभूयादितीच्छापिकदाचिद्भवति । तयापिसंस्कारनिवृत्तिःस्यान्निवर्तकतावच्छेदकस्योत्तरात्मविशेषगुणत्वस्यतत्रापिसत्त्वात् । नचेष्टापत्तिरितिवाच्यं । कुतइत्यतउक्तं ॥ इच्छाद्यनिवर्त्यइति ॥ नचलक्ष्यत्वान्नातिव्याप्तिरिति

वाच्यं । तत्प्रयुक्तोमिथ्यात्वव्यवहारःस्यादित्यत्रतात्पर्यात् ॥ अनुभवत्वव्याप्यधर्मेणेति ॥ स्मृतित्वस्यानुभवत्वव्याप्यधर्मत्वाभावान्नसंस्कारेऽतिव्याप्तिरितिभावः ॥ यथार्थस्मृतिनिवर्त्येति ॥ यथार्थस्मृतित्वेनयथार्थस्मृतिनिवर्त्येत्यर्थः ॥ अव्याप्तेरिति ॥ अयथार्थस्मृतिविषयनिवर्तिकायांयथार्थस्मृतौअनुभवत्वव्याप्यधर्माभावादितिभावः ॥ भ्रमोत्तरप्रमेति ॥ अत्रप्रमाशब्दोनयथार्थानुभवपरः । तथात्वेअयथार्थस्मृतिविषयेव्याप्त्यनिवारणात् । अतोयथार्थज्ञानमात्रपरः । अत्रयथार्थपदाभावेधारावाहिकभ्रमस्थलेपूर्वभ्रमविषयेभ्रमोत्तरभ्रमरूपज्ञाननिवर्त्यत्वाभावादव्याप्तिःस्यात् । अतोयथार्थपदं । भ्रमोत्तरपदाभा

अनुभवत्वव्याप्यधर्मेणतन्निवर्त्यत्वस्यचयथार्थस्मृतिनिवर्त्यायथार्थस्मृतिविषयेऽव्याप्तेः । भ्रमोत्तरप्रमानिवर्त्यत्वस्यचतत्वज्ञानसंस्कारानिवर्त्याज्ञानसंस्कारेअव्याप्तेः ।

वेइयंशुक्तिरितियथार्थज्ञानानंतरंतत्रैवपुनर्दोषवशादिदंरजतमितिभ्रमरूपंज्ञानंजा(तं)यते । तथाचतद्विषयेरजतेपूर्वतनयथार्थज्ञाननिवर्त्यत्वाभावादव्याप्तिःस्यात् । अतोभ्रमोत्तरपदमितिद्रष्टव्यं । तथाचायथार्थस्मृत्यनंतरभाविन्याःयथार्थस्मृतेरपिभ्रमोत्तरयथार्थज्ञान(त्वेनत)त्वात्तन्निवर्त्यत्वमयथार्थस्मृतिविषयेऽस्तीतिनाव्याप्तिरितिभावः ॥ अज्ञानसंस्कारइति ॥ तत्त्वज्ञानेनाज्ञाननिवृत्त्यनंतरमपिजीवन्मुक्त्यवस्थायामज्ञानसंस्कारोस्तीत्यंगीकार्यं । अन्यथाभिक्षाटनादौप्रवृत्तिर्नस्यात् । सचाज्ञानसंस्कारःतत्वज्ञानसंस्कारेणनिवर्ततइत्यंगीकृतं । तथाचतस्यभ्रमोत्तरभावितत्त्वज्ञानसंस्कारनिवर्त्यत्वेनप्रमानिवर्त्यत्वाभावादव्या

प्तिरित्यर्थः ॥ स्वेति ॥ स्वशब्देनाज्ञानकार्यप्रपंचोग्राह्यः । तदुपादानभूतंयदज्ञानंतन्निवर्तकंयज्ज्ञानंतन्निवर्त्यत्वमित्यर्थः । " यतोज्ञानमज्ञानस्यतत्कार्यस्यवानिवर्तक "मित्यंगीकारात् । अस्यापिलक्षणस्यस्वशब्देनाज्ञानसंस्कारःतदुपादानभूतंयदज्ञानंतस्यजगदुपादानत्वात् । तन्निवर्तकंयत्तत्त्वज्ञानंतन्निवर्त्यत्वंनास्ति । तत्संस्कारनिवर्त्यत्वात् । अतोऽज्ञानसंस्कारेव्याप्तिःस्पष्टेतितामनुक्त्वादूषणांतरमाह ॥ अनादीति ॥ जीवईशोविशुद्धाचि(द्भेदःतस्यास्तयोर्द्वयोरित्या)दित्यादिवचनेनाऽनादिषुअध्यस्तेष्वविद्यादिषुलक्षणाभावादव्याप्तिः । स्वशब्देना(ज्ञाना)विद्यादयोग्राह्याः । तेषांचानादित्वेनोपादानाभावेनतद्घटितलक्षणस्याप्य

> स्वोपादानाज्ञाननिवर्तकज्ञाननिवर्त्यत्वस्यचानाद्यध्यासेऽभावात् । लाघवेनाज्ञानोपादानकत्व
> स्यैवलक्षणत्वापाताच्च । तथाच" विज्ञाननाश्यतामिथ्यारूप्यादौनानुभूयते । किंत्वधिष्ठानवत्स
> त्येतदज्ञानेऽनुभूयते " । एतेनस्वात्यंताभावाधिकरणएवप्रतीयमानत्वंमिथ्यात्वमितिचतुर्थो
> पिनिरस्तः । अत्यंताभावस्यतात्त्विकत्वेप्रातिभासिकत्वेव्यावहारिकत्वेचदोषस्योक्तत्वात् ।

भावादितिभावः ॥ लाघवेनेति ॥ स्वोपादानेत्यादिलक्षणापेक्षयास्यलघुत्वादनादिपदार्थाव्याप्तेरुभयत्रापितुल्यत्वादितिभावः । अस्त्वितिचेन्न । अज्ञाननिराकरणेनदूष्यत्वात् । सिद्धांतेअज्ञानशब्दवाच्यप्रकृ(त्याद्युपा)त्युपादानकत्वांगीकारे(ण)नैतादृशमिथ्यात्वसाधनेसिद्धसाधनतेतिबोध्यं । तृतीयलक्षणनिराकरणमुपसंहरति ॥ तथाचेति ॥ नानुभूयते । तथाचाव्याप्तिरितिभावः । अनुभूयते । तथाचातिव्याप्तिरितिभावः । एतेनेत्युक्तंविशदयति ॥ अत्यंताभावस्येति ॥ तात्त्विकत्वेऽद्वैतहानिः ।

प्रातिभासिकत्वेसिद्धसाधनं । व्यावहारिकत्वेतादृशात्यंताभावप्रतियोगिनोप्रातिभासिकस्यप्रपंचस्यपारमार्थिकत्वापत्तिरित्यादि दोषस्योक्तत्वादितिभावः ॥ इतिचपक्षेदोषस्येति ॥ रूप्यादावव्याप्तिरात्मन्यतिव्याप्तिरितिदोषस्येत्यर्थः । पंचमे सद्विविक्तत्वपक्षे ॥ सत्त्वादिति ॥ तथाचान्योन्याभावस्यप्रतियोगितावच्छेदकविरुद्धत्वा(त्सत्ववति)त्सत्ताजातिमद्विविक्तत्वाभावादसंभवइतिभावः ॥ सिद्धसाधनादिति ॥ ब्रह्मवैलक्षण्यांगीकारादितिभावः । सद्विविक्तत्वंनामसद्रूपत्वाभावइत्यर्थस्योक्तत्वात्प

अत्यंताभावप्रतियोगित्वंस्वरूपेणेतिपक्षेपारमार्थिक(त्वेनेतिचपक्षे)त्वाकारेणेतिचपक्षेदोषस्योक्तत्वाच्च। पंचमेपि(किंसत्)सत्किंसत्ताजातिमद्विवक्षितं अबाध्यंवा ब्रह्मवा। नाद्यः। त्वन्मते घटादौजातेस्सत्वात्। द्वितीयेबाध्यत्वंमिथ्यात्वमितिस्यात्। तच्चनिरस्तं। नतृतीयः। सिद्धसाधनात्। नृशृंगादावपिसद्रूपत्वाभावादन्यस्यासत्वस्याभावेनात्यंतासत्वापाताच्च। मन्मतेअबाध्यत्वादिरूपस्यसत्वस्याऽभिधेयत्वादिवत्स्वाश्रितत्वेनब्रह्मणिसत्वाभावेसद्रूपत्वासिद्धेश्च।

क्षेत्यंतासत्त्वापत्तिरित्याह ॥ नृशृंगादावपीति ॥ अनेनमिथ्यात्वलक्षणस्यनृशृंगादावतिव्याप्तिश्चस्यादितिसूचितंभवतीतिज्ञातव्यं। ब्रह्मण्यपिसद्रूपत्वाभावस्यसत्त्वादतिव्याप्तिश्चस्यादित्याह ॥ मन्मतइति ॥ सत्त्वरूपधर्मस्यनिर्धर्मकब्रह्मण्यभावेनसद्रूपत्वमपितत्रनास्ति। ननुब्रह्मसत्त्वरहितत्वात्सद्रूपंनभवतीत्युक्तौसत्त्वएवव्यभिचारस्स्यात् । आत्माश्रयप्रसंगेनसत्त्वेसत्त्वाभावा

त् । सत्त्वंसदितिप्रतीत्यासद्रूपत्वंचास्तीतिचेन्न । अबाध्यत्वादिरूपसत्त्वस्याभिधेयत्वादिवत्स्वाश्रितत्वांगीकारेणहेतोरेवाभावा न्नव्यभिचारः । तथाचात्माश्रयस्यप्रामाणिकत्वेनसह्यत्वात् । ब्रह्मणिसद्रूपत्वाभावावश्यंभावादतिव्याप्तिःस्यादेवेतिभावः । मिथ्यात्वलक्षणपंचकदूषणमपिसंगृह्णाति ॥ तस्मादिति ॥ अनिर्वाच्येसदसद्विलक्षणत्वपक्षे प्रतीते प्रतिपन्नोपाधौ प्रतिषेध्य ता । त्रैकालिकनिषेधप्रतियोगित्वं । धीनाश्यत्वे ज्ञाननिवर्त्यत्वपक्षे । ननुभवन्मतेपिशुक्तिरजतादेर्मिथ्यात्वात्त्वयापितन्निर्वक्त

तस्मात् । "अनिर्वाच्येऽप्रसिद्ध्यादिःप्रतीतेप्रतिषेध्यता । स्वाश्रयेऽत्यंतविरहःसद्विलक्षणतात
था । इतिपक्षत्रयेऽत्यंतासत्वंस्यादनिवारितं । धीनाश्यत्वेत्वनित्यत्वमेवस्यान्नमृषात्मता" ।
ममत्वत्यंतासत्वमेवमिथ्यात्वमितिनासत्प्रतिबंदी ॥ ७ ॥ इतिमिथ्यात्वनिरुक्तिभंगः ॥ १ ॥
अस्तुवामिथ्यात्वंयत्किंचित् । तथापिमिथ्यात्वमबाध्यंबाध्यंवा । आद्येअद्वैतहानिः । न
हिप्रपंचोपाधिकंभ्रमकालानिश्चितंतन्मिथ्यात्वंनिरुपाधिकभ्रमकालनिश्चिताधिष्ठानब्रह्ममात्रं ।

व्यमेवेतिनममैवपर्यनुयोगइत्यतआह ॥ ममत्विति ॥ मदभिमतंमिथ्यात्वंतुनत्वयाप्रपंचस्यांगीकर्तुंशक्यं । सदसद्वैलक्षण्यां गीकारेणापसिद्धांतापातादितिभावः ॥ ७ ॥ इतिमिथ्यात्वनिरुक्तिभंगविवरणं ॥ १ ॥ ननुमिथ्यात्वस्याबाध्यत्वेपिब्रह्म स्वरूपत्वांगीकारान्नाद्वैतहानिरित्यतआह ॥ नहीति ॥ प्रपंचेति ॥ कालादिप्रपंचघटितत्वादितिभावः ॥ भ्रमकालेति ॥

रूप्यमिथ्यात्वस्यभ्रमकालेनिश्चयेरूप्यभ्रमाद्रूप्यार्थिनःप्रवृत्तिर्नस्यादितिभावः । ब्रह्मणोभ्रमकालेनिश्चितत्वोपपादनायाधिष्ठाने त्युक्तं ॥ तस्यमांप्रत्यपिसिद्धत्वादिति ॥ मिथ्यात्वस्यब्रह्मस्वरूपत्वेप्रपंचोमिथ्येत्यस्यप्रपंचोब्रह्मस्वरूपवानित्यर्थःस्यात् । इदंचमांप्रत्यपिसिद्धं । ब्रह्मणोव्याप्तत्वेनप्रपंचेपिसत्त्वेनसिद्धसाधनतेतिभावः ॥ व्यभिचारश्चेति ॥ दृश्यत्वसत्त्वेपिमिथ्यात्वाभावादितिभावः । हेतोरेवाऽभावान्नव्यभिचारइत्याशंक्यनिराकरोति ॥ मिथ्यात्वस्येति ॥ कुतोनुमानवैयर्थ्यमित्यतआह ॥

तस्यमांप्रत्यपिसिद्धत्वात् । दृश्यत्वादेर्मिथ्यात्वएवव्यभिचारश्च । मिथ्यात्वस्यचादृश्यत्वेनुमानवैयर्थ्यं । तस्यसाध्यज्ञप्त्यर्थत्वात् । अंत्येसिद्धसाधनं अद्वैतश्रुतेरतत्वावेदकत्वंचस्यात् । जगच्च सत्यंस्यात् । आत्मवत् । नचात्मत्वमुपाधिः । सत्यत्वंविनातद्विरुद्धस्यमिथ्यात्वस्यमिथ्यात्वेव्याघातवदज्ञातृत्वादिरूपानात्मत्वस्यासत्यत्वंविनाव्याघाताभावेनोपाधेरप्रयोजकत्वात् ।

तस्येति ॥ सिद्धसाधनमिति ॥ जगन्निष्ठमिथ्यात्वस्यबाध्यतायाअस्माभिरंगीकारादितिभावः ॥ अतत्वेति ॥ बाध्यभूतमिथ्यात्वावेदकत्वादितिभावः ॥ जगच्चेति ॥ जगत्सत्यंमिथ्याभूतमिथ्यात्वकत्वादात्मवदित्यनुमानमुक्तंभवति ॥ उपाधिरिति ॥ आत्मनिसाध्यव्यापकत्वात्पक्षेजगत्यभावेनसाधनाव्यापकत्वाच्चेतिभावः ॥ सत्यत्वंविनेत्यादि ॥ अयमभिप्रायः । आत्मत्वमुपाधिमुक्त्वातद्व्यतिरेकेण जगत्सत्यंन । अनात्मत्वाद्व्यतिरेकेणाऽऽत्मवदितिसत्प्रतिपक्षोन्नयनंकार्यं । तन्नसंभवति ।

अनात्मत्वमस्तुसत्यत्वमेवास्त्वित्यप्रयोजकत्वेनसत्यत्वेआत्मत्वोपाधेरप्रयोजकत्वात् । नचैवंभवदीयेस्थापनानुमानेपिअस्तुमिथ्याभूतमिथ्यात्वकत्वंसत्यत्वंमास्त्वित्यप्रयोजकत्वमेवेतिसाम्यमितिवाच्यं । मिथ्याभूतमिथ्यात्वकत्वेसत्यत्वस्यैवप्राप्त्यापुनःसत्यत्वंमास्त्वित्युक्तेःस्वक्रियाविरुद्धत्वेनव्याघाताख्यानुकूलतर्कस्यहेतुसाध्यव्याप्तिग्राहकस्यसत्त्वान्नाप्रयोजकताशंक्या । शंकायाः व्याघाताबधित्वात् । " व्याघातावधिराशंके "त्युदयनोक्तेः । ननु(तर्हि)मदीयेसत्प्रतिपक्षानुमानेपिव्याघातरूपानुकूलतर्क(स्य हेतुसाध्यव्याप्तिग्राहकस्य)सत्त्वान्नाप्रयोजकतेतिचेन्न । अनात्मत्वमस्तुसत्यत्वमेवास्त्वित्यत्रानात्मत्वसत्यत्वयोर्व्याघाताभावात् । नन्वस्तिव्याघातः । असत्यत्वमनात्मत्वंसत्यत्वमेवचात्मत्वमितिचेन्न । अनात्मत्वस्याज्ञातृत्वादिरूपत्वात्सत्यत्वस्यचाबाध्यत्वादिरूपत्वेनविरोधाभावादिति । यद्वाइत्थंव्याख्येयं । आत्मत्वंनोपाधिः कुतइत्यतउक्तंअप्रयोजकत्वादिति । साध्याभावाविनाभाव्यभावत्वाभावेनसत्यत्वेआत्मत्वस्याप्रयोजकत्वादित्यर्थः । " साध्याभावाविनाभावीसउपाधिर्यदत्यय "इतिवचनात् । तथाचोपाधेःसाध्याभावाविनाभाव्यभावत्वेनयत्रात्मत्वाभावस्तत्रसत्यत्वाभावइतिव्याप्तिस्तावदवश्यंग्राह्या । सानयुक्ता । अनात्मत्वेपिसत्यत्वोपपत्तेरित्यप्रयोजकत्वात् । ननुतर्हिभवदनुमानेपिमिथ्याभूतमिथ्यात्वकत्वेपिसत्यत्वंमास्त्वित्यप्रयोजकतास्यादितिचेन्न । सत्यत्वंविनामिथ्याभूतमिथ्यात्वकत्वेंगीक्रियमाणेव्याघातेनाप्रयोजकतायाःशंकानर्हत्वात् । ननुतर्हियत्रात्मत्वाभावः तत्रसत्यत्वाभावइत्युपाध्यभावसाध्याभावयोर्व्याप्तावपिनाप्रयोजकता । असत्यत्वरूपानात्मत्वमंगीकृत्यसत्यत्वाभावानंगीकारेव्याघातसाम्यादितिचेन्न । अज्ञातृ(त्वादिरू)त्वरूपानात्मत्वस्यअसत्यत्वंसत्यत्वाभावंविनावस्थित्यंगीकारेव्याघाताभावादिति

योजनाद्वयेपिप्रमेयंत्वेकमेव । इयांस्तुविशेषः । उपाधिमुक्त्वाक्रियमाणेसत्प्रतिपक्षोन्नयनेअप्रयोजकतापरत्वेनप्राचीनव्याख्यानं उपाधेरप्रयोजकत्वादितिमूलग्रंथस्वारस्यानुसारेणसाध्याभावाविनाभाव्यभावत्वस्योपाधिलक्षणत्वेनोपाध्यभावसाध्याभावयोरव श्यंव्याप्तिर्ग्राह्या । तत्राप्रयोजकतापरत्वेनद्वितीयव्याख्यानमिति । ननुमिथ्यात्वमबाध्यमित्यंगीक्रियते । नचाद्वैतहानिः । ब्रह्म स्वरूपत्वांगीकारात् । नचसोपाधिकनिरुपाधिकयोरैक्यायोगः । निरुपाधिकब्रह्ममात्रत्वाभावेपिद्वितीयाभावोपलक्षितब्रह्मस्व रूपत्वांगीकारात् । द्वितीयाभावोपलक्षितंचब्रह्मस्वरूपंननिरुपाधिकंनवाभ्रमकालेनिश्चितं । द्वितीयरूपप्रपंचभ्रमकालेतदभावो

नचमिथ्यात्वंनब्रह्ममात्रंकिंतुद्वितीयाभावोपलक्षितंब्रह्मेतिवा
च्यं । उपलक्षणेद्वितीयाभावएवबाध्याऽबाध्यविकल्पात् ।

पलक्षितब्रह्मस्वरूपस्यानिश्चितत्वात् । अतोनोक्तदोषइत्याशंक्यनिषेधति ॥ नचेति ॥ उपलक्षणइति ॥ उपलक्षणेद्वितीया भावरूपमिथ्यात्वएवबाध्याबाध्यविकल्पस्येदानीमस्माभिःक्रियमाणत्वेनामिथ्यात्वंमिथ्यात्वोपलक्षितब्रह्मस्वरूपमित्युक्तंस्यात् । तथाचात्माश्रयइतिसांप्रदायिकोर्थः । केचित्तुउपलक्षणस्यद्वितीयाभावस्यबाध्यत्वेद्वितीयस्यप्रपंचस्याबाध्यत्वेनसत्यत्वंस्यात् । अबाध्यत्वेअद्वैतहानेरित्येवंमिथ्यात्वंयदुपलक्षितब्रह्मस्वरूपमित्युच्यतेतस्मिन्नुपलक्षणेद्वितीयाभावएवबाध्याबाध्यविकल्पप्रसरा दित्यर्थइत्याहुः । द्वितीयाभावस्योपलक्षणत्वमेवायुक्तं । उपलक्ष्यस्याभावादित्याह ॥ द्वितीयेत्यादि ॥ अप्रसिद्धस्योपलक्ष्य

स्यप्रसिद्धमुपलक्षणंभवति । ब्रह्मतुद्वितीयाभावरूपोपलक्षणज्ञाना(त्पूर्वमेव)त्प्रागेवज्ञातंमितिनतस्योपलक्ष्यत्वंयुक्तं । कथंतत्पूर्वं ज्ञातमस्तीत्यतउक्तं ॥ द्वितीयाभावेति ॥ अभावज्ञानेअधिकरणज्ञानस्यकारणत्वाद्द्वितीयाभावरूपोपलक्षणस्यज्ञानार्थंतदधिकरणभूतशुद्धब्रह्मज्ञानमावश्यकमित्यर्थः । तथाचोपलक्षणज्ञाना(त्पूर्वमेव)त्प्रागेवज्ञातंशुद्धंब्रह्मप्रतिनद्वितीयाभावस्योपलक्षणत्वंयुक्तमितिभावः । किंचाहमज्ञइतिप्रतीयमानत्वेनांगीकृतायाअविद्यायाःप्रतीतिस्तदधिष्ठानभूतशुद्धब्रह्मस्फुरणंविनानसंभवतीत्यविद्यारोपार्थमधिष्ठानभूतशुद्धब्रह्मज्ञानमावश्यकमित्यभिप्रायेणोक्तंअविद्याधिष्ठानतयेति । प्रकारांतरेणापिभासमानत्वमु

**द्वितीयाभावाधिकरणतयाऽविद्याधिष्ठानतया(अविद्यासाक्षि)तत्साक्षितयाचभासमानचिदन्यस्योपलक्ष्यस्याभावेनद्वितीयाभावस्योपलक्षणत्वयोगाच्च । ननुरूप्यधर्मोमिथ्यात्वमपिमिथ्यैव ।**

पपादयति ॥ तत्साक्षितयेति ॥ (अविद्यासाक्षितयेति ॥) अविद्याविषयकसाक्षिरूपज्ञानतयेत्यर्थः । तच्चब्रह्मस्वरूपंस्वप्रकाशमितिसदाभासतइत्यर्थः। ननुकाकेनगृहगतोच्चत्वादिसंस्थानविशेषइवप्रकाशमानब्रह्मगतंधर्मांतरमेवद्वितीयाभावेनोपलक्ष्यतामित्यतउक्तं ॥ अन्यस्येति ॥ निर्धर्मकत्वादितिभावः । जगत्सत्यंमिथ्याभूतमिथ्यात्वकत्वादात्मवदित्युक्तानुमानेरूप्येव्यभिचारइत्याशयेनतत्रहेतुसत्त्वंसाधयति ॥ नन्वित्यादिना ॥ रूप्यधर्मइतिहेतुगर्भविशेषणं । धर्मिणएवाभावादितिभावः । तथाचरूप्यगतंमिथ्यात्वंमिथ्याअविद्यमानधर्मिकत्वादित्यनुमानमुक्तंभवति । एवंचरूप्येमिथ्याभूतमिथ्यात्वकत्वेसत्यपिसत्य

त्वाभावाद्व्यभिचारइतिहृदयं । सिद्धांतीउक्तानुमानस्यप्रतितर्कपराहतिमाशंकते ॥ नचेति ॥ तथात्वइति ॥ रूप्यगतमिथ्यात्वंयदिमिथ्यास्यात्तदापरस्परविरुद्धयोरेकस्याभावेन्यतरस्यसत्त्वनियमात् तत्सत्यत्वंसत्यंस्यादितिप्रतितर्कपराहतत्वादुक्तानुमानमसत् । तथाचरूप्येहेतोरेवाभावान्नव्यभिचारइतिहृदयं । ननुयदिधर्मिणएवमिथ्यात्वेनतत्रत्ययोर्विरुद्धयोस्सत्यत्वमिथ्यात्वरूपधर्मयोर्द्वयोरपिमिथ्यात्वमुच्यते तर्हिपरस्परविरुद्धयोरित्युक्तनियमभंगइत्यतआह ॥ परस्परेति ॥ ननुयत्रधर्मीअसन्तत्राप्ययंनियमःकिंनस्यादित्यतआह ॥ नहीति ॥ तयोरपिसहानवस्थानरूपविरोधसद्भावादितिभावः । ननुवंध्यासुतेश्यामत्वा

नचतथात्वेरूप्यस्यसत्यत्वंसत्यंस्यादितिवाच्यं । धर्मिणोमिथ्यात्वेविरुद्धयोरपिधर्मयोर्मिथ्यात्वात् ।
परस्परविरुद्धयोरेकस्याभावेऽन्यस्यसत्वनियमस्तुयत्रधर्मीस(न्त)त्यस्तत्रैव । नहिवंध्यासुतस्य
श्यामत्वाद्यभावेगौरत्वंसत्यं । नवास्वप्नेज्ञातस्यगजस्यमिथ्यात्वेतत्रैवज्ञातस्तदभावस्सत्यइतिचेन्न ।

भावेगौरत्वंनसत्यं तयोःपरस्परविरहव्याप्यत्वेनपरस्परविरहरूपत्वाभावात् । तथाचपरस्परविरहरूपविरोधवतोरेकस्याभावेन्यस्यसत्त्वमितिविवक्षितनियमस्यव्यभिचाराभावात् । प्रकृतेचरूप्यगतमिथ्यात्वसत्यत्वयोःपरस्परविरहरूपत्वसद्भावेनतन्मध्येमिथ्यात्वस्यमिथ्यात्वे(सत्यत्वस्यसत्यत्वंस्यादेवे)सत्यत्वंसत्यंस्यादेवेत्यतोस्यापिनियमस्यव्यभिचारमाह ॥ नवेति ॥ तत्रैवेति॥ स्वप्नएवेत्यर्थः । तदभावो गजाभावः । तथाचस्वाप्नगजतदभावयोःपरस्परविरहरूपविरोधवतोरेकस्याभावेऽपरस्यसत्त्वाभावा

द्व्यभिचारइतिभावः । तथाचरूप्यगतेमिथ्यात्वसत्यत्वेमिथ्याअविद्यमानधर्मिकत्वात्स्वाप्नगजतदभाववदित्यनुमानेनोभयोरपिमि थ्यात्वावगमेनमिथ्याभूतमिथ्यात्वकत्वस्यजगत्सत्यत्वसाधकस्यरूप्येव्यभिचारःसुस्थइतिहृदयं । किंचरूप्यधर्मोमिथ्या(त्वमपि) त्वंमिथ्याअविद्यमानधर्मिकत्वादित्यत्राविद्यमानधर्मिकत्वेपिमिथ्यात्वंसत्यमेवास्त्वित्यप्रयोजकता । ननुधर्मिणएवाभावेतद्गतम त्यंताभावप्रतियोगित्वरूपमिथ्यात्वंकथंसत्यंभविष्यतीत्यतआह ॥ प्रतिपन्नेति ॥ ततःकिमित्यतआह ॥ नचप्रतियोगित्व मिति ॥ धर्मांतरवद्रूपादिवदितिव्यतिरेकदृष्टांतः । ननुतर्हिधर्म्यसत्त्वेधर्मासत्त्वनियमभंगइत्यतआह ॥ धर्म्यसत्त्वइति ॥

प्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वंहिमिथ्यात्वं । नचप्रतियोगित्वंधर्मांतर
वद्धर्मिसत्वा(त्तासा)पेक्षमित्यनिर्वाच्यत्वभंगेवक्ष्यते । धर्म्यसत्वेधर्मासत्वंतुध
र्मिसत्तासापेक्षधर्मविषयं मिथ्यात्वंतुतत्प्रतिकूलं । अन्यथासिद्धसाधनात् ।

ननुतर्ह्यत्यंताभावप्रतियोगित्वाख्यमिथ्यात्वरूपधर्मस्यापिरूपादिवद्धर्मिसत्त्वसापेक्षत्वेननाप्रयोजकताशंकावकाशइत्यतआह ॥ मिथ्यात्वंत्विति ॥ मिथ्यात्वंतुधर्मिभूतप्रपंचसत्यत्वस्यविरहरूपं अतोधर्मिसत्त्वंनापेक्षते प्रत्युतधर्मिभूतप्रपंचसत्त्वंप्रतिक्षिप तीत्यर्थः ॥ अन्यथेति ॥ प्रपंचेअत्यंताभावप्रतियोगित्वरूपधर्मस्यसत्त्वाविरोधित्वइत्यर्थः ॥ सिद्धेति ॥ लोकेत्यंताभावप्र तियोगित्वरूपधर्मस्यधर्मिसत्त्वप्रतिकूलत्वस्यैवदर्शनात् अत्रतदनंगीकारेप्रपंचेत्यंताभावप्रतियोगित्वंधर्मिसत्त्वसहिष्णुभूतंपारि

भाषिकंस्यात् । तथाचपारिभाषिकात्यंताभावप्रतियोगित्वसाधनेतस्यप्रपंचसत्त्वाविरोधित्वेनदृश्यत्वानुमानेसिद्धसाधनतास्यादितिभावः । [ इतिसांप्रदायिकोऽऋजुःपंथाः । तरंगिणीकारास्तु । परोक्तरूप्यमिथ्यात्वमिथ्यात्वसाधकेमिथ्यात्वोपेतधर्मिकत्वेहेतावप्रयोजकतामुक्त्वाधर्म्यसत्वप्रयुक्तसत्वाभावत्वमुपाधिरित्याह ॥ धर्मीति ॥ वंध्यासुतश्यामत्वगौरत्वयोःसाध्यव्यापकत्वात् साधनाव्यापकतामाह ॥ मिथ्यात्वमिति ॥ रूप्यगतमिथ्यात्वमित्यर्थः । तथाचतस्यधर्मिसत्यत्वविरहरूपत्वेनतत्प्रतिक्षेपकतयाधर्म्यसत्वप्रयुक्तंसत्वमेवास्तीतिसाधनाव्यापकत्वमितिभावः । धर्मिसत्वप्रयुक्तसत्ववत्वमित्येवोक्तौवंध्यासुतगतश्यामत्वगौरत्वयोःसाध्याव्यापकत्वापत्तेर्नञ्द्वयगर्भत्वमितिमंतव्यं । ननुयदिअत्यंताभावप्रतियोगित्वरूपंमिथ्यात्वंविवक्षितंस्यात् । तदात

किंचप्रतिपन्नोपाधावनिषिद्धंप्रत्युतबाधकज्ञानेनविहितमपिरूप्यमिथ्यात्वंयदिप्राति
भासिकरूप्यसंबंधमात्रेणप्रातिभासिकं तर्हिसतिब्रह्मणिनिषिद्धाअपिधर्मास्संतःस्युः।

त्धर्मिसत्वप्रतिकूलंस्यात् । नचैवं । किंतुब्रह्माभिन्नत्वादिरूपमन्यदेव । तच्चधर्मिसत्त्वानुकूलं । तथाचधर्म्यसत्वप्रयुक्तसत्वाभावस्यैवसत्वात्साधनव्यापकत्वमुपाधेरित्यतआह ॥ अन्यथेति ॥ तथाचरूप्यमिथ्यात्वंमिथ्यानामब्रह्माभिन्नमितिचसाधितंस्यात् । तथाचसिद्धसाधनतेत्यर्थइतिधर्म्यसत्वइत्यादिग्रंथंव्याकुर्वते । ] किंचरूप्यमिथ्यात्वंमिथ्याअविद्यमानधर्मिकत्वादित्यस्यह्ययमर्थः । प्रातिभासिकरूप्यसंबंधित्वमात्रेणैवमिथ्यात्वंप्रातिभासिकंयद्यत्संबंधितत्तत्समानमितिनियमादिति । तत्रचातिप्रसंगाःस्युरित्याह ॥ किंचेत्यादिना ॥ अनिषिद्धमित्यादिविशेषणद्वयंमिथ्यात्वस्याप्रातिभासिकत्वोपपादनायेतिज्ञातव्यं । रूप्यव

त्अनिषिद्धंमिथ्यैवरजतंप्रत्यभादितिबाधकज्ञानेनास्तीतिविहितमित्यर्थः । रूप्यसंबंधो रूप्यधर्मिकत्वरूपः । निषिद्धाःधर्माः दो
षादयः । संतःस्युरितिभावः । निषेध्यतयासद्ब्रह्मसंबंधादित्यर्थः । तथाचाद्वैतहानिरितिभावः ॥ रूप्येति ॥ प्रातिभासिकरू
प्यसंबंधादित्यर्थः ॥ रूप्येप्रपंचेचेति ॥ वस्तुगत्यारूप्येप्रपंचेचप्रातिभासिकव्यावहारिकसत्त्वेनवस्तुगत्यासद्वैलक्षण्याभावादि
त्यर्थः ॥ सत्स्यादिति ॥ सत्संबंधादित्यर्थः ॥ असद्वैलक्षण्यंचेति ॥ रूप्येप्रपंचेचेतिवर्तते । ब्रह्मणीत्यपिद्रष्टव्यं ॥ अस
त्स्यादिति ॥ असत्संबंधादित्यर्थः ॥ असतिचेति ॥ अधिकरणत्वेनासतासंबंधादित्यर्थः । रूप्यमिथ्यात्वमिथ्यात्वसाधना

**रूप्याधिष्ठानशुक्तिरपिप्रातिभासिकीस्यात् । रूप्येप्रपंचेचसद्वैलक्षण्यं**
**चसत्स्यात् । असद्वैलक्षण्यंचासत्स्यात् । असतिचसद्वैलक्षण्यमस**
**त्स्यात् । रूप्यतन्मिथ्यात्वयोर्मिथ्यात्वेभ्रांतिबाधव्यवस्थाचनस्यात् ।**

नुमानस्यतर्कपराहतिमाह॥भ्रांतिबाधेति॥ मिथ्याभूतार्थविषयकतयाभ्रांतित्वंदृष्टं । इदंरूप्यमित्यत्रमिथ्याभूतरूप्यविषयकत
याज्ञानस्यभ्रांतित्वदर्शनात् । सत्यार्थविषयकतयाचबाधत्वंदृष्टं । नेदंरूप्यंइदंरूप्यंमिथ्येत्येवंसत्यभूतरूप्यमिथ्यात्वविषयकत्वे ॥ ४५ ॥
नबाधत्वदर्शनात् । एवंचत्वयारूप्यतन्मिथ्यात्वयोरुभयोरपिमिथ्यात्वंयद्यंगीक्रियतेतदोभयोरपिमिथ्याभूतार्थविषयकत्वाविशेषा
(द्बाधस्यापिभ्रांतित्वापत्त्याभ्रांति)भ्रांतिबाधव्यवस्थानस्यादित्यर्थः । किंचमिथ्याभूतरूप्यधर्मिकत्वेनहेतुनायथारूप्यमिथ्यात्व

स्यमिथ्यात्वंत्वयासाध्यते एवमेवास्माभिरपिसाध्यभूतंयद्रूप्यमिथ्यात्वमिथ्यात्वं तस्यापिमिथ्यात्वंत्वदुक्तेनैवहेतुनासाधयितुंशक्यते । तथाहि । रूप्यमिथ्यात्वमिथ्यात्वंमिथ्या प्रातिभासिकमितियावत् । मिथ्याभूतरूप्यमिथ्यात्वधर्मिकत्वादितिप्रयोगसंभवात् । तथाचप्रातिभासिकंयद्रूप्यनिष्ठमिथ्यात्वमिथ्यात्वंतत्साधकत्वेमिथ्याभूतरूप्यधर्मिकत्वरूपहेतोरनुष्णत्वसाधककृतकत्ववद्बाधितार्थकत्वेनाप्रामाण्यंस्यादित्याह ॥ त्वदुक्तेनेति ॥ मिथ्यात्वेत्यतःपूर्वंरूप्यनिष्ठेतिशेषः । ननुसर्वस्यापिब्रह्मज्ञानबाध्यत्वेनतदंतःपातिनोस्यानुमानस्यबाधितत्वमिष्टमेवेतिशंकापरिहारायात्यंतेत्युक्तं । व्यवहारदशायामपिप्रातिभासिकार्थसाधकत्वे

त्वदुक्तेनधर्मिणोमिथ्यात्वेनहेतुनासाध्यस्यमिथ्यात्वमिथ्यात्वस्यापिप्रातिभा
सिकत्वापत्त्याहेतोरत्यंताप्रामाण्यंचस्यात् । हेतुकृतस्यधर्मिमिथ्यात्वस्य
मिथ्यात्वेघटरूपादौव्यभिचारापत्त्यासत्यत्वावश्यंभावाद्विरोधश्चस्यात् ।

नाप्रामाण्यंस्यादित्यर्थः ॥ हेतूकृतस्येति ॥ रूप्यमिथ्यात्वेमिथ्यात्वसाधनायेत्यर्थः । धर्मिमिथ्यात्वस्य मिथ्यात्वोपेतधर्मिकत्वस्य मिथ्यात्वे मिथ्याभूतेतिविशेषणयुक्तत्वेइतिव्याख्येयं । यथाश्रुतेत्वसिद्धिरेवस्यान्नव्यभिचारइतिध्येयं । ( सत्यत्वावश्यंभावात् । सत्यत्वाख्यविशेषणयुक्तत्वावश्यंभावादित्यर्थः । यथाश्रुतेत्वसिद्धिपरिहारएवस्यात् । नविरोधइतिध्येयं ।) अयंभावः । रूप्यमिथ्यात्वंमिथ्यामिथ्यात्वोपेतधर्मिकत्वादित्यत्रमिथ्याभूतमिथ्यात्वोपेतधर्मिकत्वादितिहेतुर्विवक्षितश्चेद्घटरूपादौव्यभिचा

मतस्यनहानिः । ब्रह्मसमसत्ताकत्वांऽगीकारएवसास्यादित्यर्थः ॥ त्वन्मतइति ॥ तत्ववादिमतइत्यर्थः ॥ स्वसमेति ॥ प्रपंचसमसत्ताकेत्यर्थः । भवद्भिःप्रपंचेपारमार्थिकसत्त्वांगीकारात्तत्समसत्ताकमिथ्यात्वस्यभवतामसंमतत्वात्प्रपंचसमसत्ताकमिथ्यात्वस्यैवाऽस्माभिःसाध्यमानत्वान्नसिद्धसाधनतेतिभावः । ननुमिथ्यात्वस्यव्यावहारिकत्वेमिथ्यात्वविरोधिनोविश्वसत्यत्वस्यपारमार्थिकत्वंकुतः प्रातिभासिकत्वंकिंनस्यादित्यतउक्तं ॥ अप्रातिभासिकस्येति ॥ नकेवलंपरिशेषात्पारमार्थिकत्वसिद्धिः । प्रत्यक्षसिद्धत्वाच्चेत्युक्तं ॥ प्रत्यक्षादीति ॥ सन्घटइत्यादिप्रत्यक्षसिद्धस्येत्यर्थः । तदप्रमाणंकिंनस्यादित्यतउक्तं ॥ स्वतःप्रामा

नापिसिद्धसाधनं । त्वन्मतेप्रपंचेस्वसमसत्ताकमिथ्यात्वासिद्धेरितिवा
च्यं । मिथ्यात्वस्यव्यावहारिकत्वेतद्विरोधिनोप्रातिभासिकस्याऽनपोदि
तस्वतःप्रामाण्यप्रत्यक्षादिसिद्धस्यचविश्वसत्यत्वस्यपारमार्थिकत्वापातात्।

ण्येनेति ॥ स्वतःप्रामाण्योपेतेत्यर्थः । बलवद्बाधकात्प्रामाण्यस्यापवादःकिंनस्यादित्यतउक्तं ॥ अनपोदितेति ॥ एतच्चोत्तरत्रसाधयिष्यामइतिभावः ॥ पारमार्थिकत्वेति ॥ नहिविरुद्धयोरुभयोर्मिथ्यात्वसत्यत्वयोःसमसत्ताकत्वमुक्तमितिभावः । एवंचप्रपंचसमसत्ताकंमिथ्यात्वंसाधयताव्यावहारिकंमिथ्यात्वंसाधितंस्यात् । तस्यजगतिपारमार्थिकसत्यत्वाविरोधि(त्वादर्थांतरतेति)त्वात्सिद्धसाधनतेतिभावः । प्रपंचमिथ्यात्वस्यप्रपंचसमसत्ताकत्वेव्यावहारिकत्वप्राप्त्यानेहनानेतिश्रुतेर्जगन्मिथ्यात्वरू

पाद्वैतपरायास्तत्वावेदकत्वंयदंगीकृतंतदपिभग्नंस्यादित्याह ॥ द्वैतेति ॥ प्रातिभासिके रूप्यादौ व्यावहारिके घटादौ ॥ प्रातिभासिकतयेति ॥ अद्वैतहानिप्रसंगेनपारमार्थिकत्वस्यवक्तुमशक्यत्वादितिभावः । तयोः प्रपंचतन्मिथ्यात्वयोः ॥ अयोगादिति ॥ तथाचमिथ्यात्वंप्रपंचसमसत्ताकंसाध्यतइत्युक्तमसदितिभावः ॥ अन्यथेति ॥ विरुद्धयोरेकत्रसमसत्ताकत्वेप्रपंचे तात्विकेसत्यत्वमिथ्यात्वेवातात्विकौतदभावौवास्यातामित्यतिप्रसंगादित्यर्थः ॥ जातिरिति ॥ धर्मस्यतदतद्रूपविकल्पेनप्रवृ

द्वैताद्वैतप्रमाणयोर्व्यावहारिकपारमार्थिकविषयत्वेनव्यवस्थोक्त्ययोगाच्च । मिथ्यात्वस्यप्रातिभासिकेव्यावहारिकतयाव्यावहारिकेचप्रातिभासिकतयाचदृष्टत्वेनतयोस्तुल्यसत्ताकत्वायोगाच्च । अन्यथाप्रपंचेसत्यत्वमिथ्यात्वयोर्विधिसमुच्चयोवानिषेधसमुच्चयोवास्यात् । तथा च "मिथ्यात्वंयद्यबाध्यंस्यात्सदद्वैतमतक्षतिः । मिथ्यात्वंयदिबाध्यंस्याज्जगत्सत्यत्वमापतेत् ।" नचमिथ्यात्वस्यसत्यत्वमिथ्यात्वाभ्यांदूषणंनित्यसमाजातिः स्वव्याघातादेरभावात् ।

त्त्वात्त्वदीयंदूषणजात्युत्तरमितिभावः । जातिसामान्यलक्षणाभावान्नेदंजात्युत्तरं । "स्वव्याघातकमुत्तरंजाति"रितिवचनात् । प्रकृतेचस्वव्याघातादेरभावादित्याह ॥ स्वव्याघातादेरिति ॥ आदिपदेनयुक्तांगहान्ययुक्तांगाधिक(त्वादिग्र)त्वसंग्रहः । ननुकथंस्वव्याघाताभावः । अनयैवरीत्यासत्यत्वंसत्यंमिथ्यावेतिविकल्प्यदूषणसंभवादितिचेन्न । मिथ्यात्वस्यमिथ्यात्वेमिथ्यात्वं

उक्तंहि" मिथ्यात्वस्यहिमिथ्यात्वेमिथ्यात्वंबाधितंभवेत् । सत्यत्वस्यचसत्यत्वेसत्यत्वंस्थापितंभवे"दिति । किंच" धर्मस्यतदतद्रूपविकल्पानुपपत्तितः । धर्मिणस्तद्विशिष्टत्वभंगोनित्यसमोभवे" दितितल्लक्षणं । नचात्रमिथ्यात्वस्यसत्यत्वेधर्मिणोमिथ्यात्ववैशिष्ट्यभंगउक्तः । किंतुअद्वैतहानिः ।

यथाबाधितंभवति एवंसत्यत्वस्यसत्यत्वेसत्यत्वंनबाधितंभवति । प्रत्युतस्थापितमेवभवतीतिनस्वव्याघातइत्याशयेनतत्रविद्वत्सं मतिमाह ॥ उक्तंहीति ॥ वादरत्नावल्यांविष्णुदासाचार्यैरित्यर्थः । नकेवलंसामान्यलक्षणाभावान्नेदंजात्युत्तरं । किंनाम नित्यसमजातिलक्षणाभावादपीत्याह ॥ किंचेति ॥ उदाहरणंतुअनित्यःशब्दइतिप्रतिज्ञायांवदति । अनित्यत्वंअनित्यंनित्यंवेति । अनित्यत्वेकदाचित्तदभावाच्छब्दोनित्यःस्यात् । तथाचशब्दअनित्यइतिशब्दरूपधर्मिणः अनित्यत्ववैशिष्ट्यभंगः । नित्यंचेद नित्यत्वधर्मस्यनित्यत्वान्नित्यधर्माधिकरणत्वेनधर्मिणोपिशब्दस्यनित्यतास्यात् । अनाश्रयधर्मावस्थानायोगात् । तथाचशब्दो ऽनित्यइतिशब्दस्यानित्यत्ववैशिष्ट्यभंगइतितद्विशिष्टत्वभंगः तद्रूपत्वातद्रूपत्वोभयपक्षेपीत्यर्थः। लक्षणं नित्यसमजातेरितिशेषः॥ नचात्रेति ॥ यद्यपिमिथ्यात्वस्यमिथ्यात्वपक्षेसत्यत्वप्राप्त्याप्रपंचोमिथ्येतिप्रपंचस्य धर्मिणोमिथ्यात्ववैशिष्ट्यभंगउक्तः । तथापिमिथ्यात्वस्यसत्यत्वपक्षेसनोक्तोस्माभिः किंत्वद्वैतहानिरेव । अमिथ्यात्वरूपसाध्यस्यमिथ्यात्वरूपत्वातद्रूपत्वोभयपक्षेपिधर्मिणस्तद्विशिष्टत्वभंगस्यानुच्यमानत्वान्नतल्लक्षणस्यात्रावकाशइतिभावः । प्रत्युततवैवजातिवादित्वं त्वयाक्रियमाणस्यास्मदीयदू

षणस्यस्वव्याघातकत्वादित्याशयेनाह ॥ प्रत्युतेति ॥ भिन्नइत्यादि ॥ यदिभिन्नेभेदनिवेशः तर्हिभेदपरंपरयाअनवस्था । यद्यऽभिन्नेभेदनिवेशः तर्हिविरोधइत्यादित्वदुक्तिरित्यर्थः । कथंमदुक्तेःस्वव्याघातकत्वमित्यतउक्तं ॥ अभिन्नादीति ॥ अभिन्नंब्रह्मेत्यत्रापिकिमभेदःभिन्नेनिवेशितउताभिन्ने । आद्येविरोधात् । द्वितीयेऽभेदपरंपरयाऽनवस्थेत्यर्थः । यथोक्तंभगवत्पादैः । " अतोविशिष्टादिनिराकरणयुक्तीनामपिविशिष्टाद्यपेक्षत्वाज्जात्युत्तरमितिनयुक्तिबाधापी "ति । नकेवलंवेदांतिनांजातिवा

प्रत्युतभेदःकिंभिन्नेउताभिन्नेस्यादितित्वदुक्तिरेवाभिन्नादिरूपविशिष्टमात्रानिरासकत्वे नस्वव्याघातापाताज्जातिः । उक्तंहि । "एतामेवजातिमवष्टभ्यशुष्कतर्कवादिनांबौद्धचार्वाकवेदांतिनांबालव्यामोहहेतवःकंठकोलाहला "इति ॥ ७ ॥ इतिसामान्यतोमिथ्यात्वभंगः ॥ २ ॥ दृश्यत्वहेतूक्तिरपि "स्तंभादिप्रत्ययोमिथ्याप्रत्ययत्वात्तथाहियः ।

दित्वमस्माभिरेवोच्यते । किंतूदयनाचार्यैरप्याघोषितमित्याह ॥ उक्तंहीति ॥ एतामेव नित्यसमामेव । अवष्टभ्य परनिराकरणसाधनत्वेनाश्रित्य । कंठकोलाहलाः किंभिन्नेभेदनिवेशउताभिन्नइत्याद्याः । ऊहापोहरहिताबालास्तेषामेवबुद्धिव्यामोहहेतवोनपंडितानां स्वव्याहतेःस्पष्टत्वादित्यर्थः ॥ ७ ॥ इतिसामान्यतोमिथ्यात्वभंगविवरणं ॥ २ ॥ इदानींहेतुंपराचष्टे ॥ दृश्यत्वेति ॥ दृश्यत्वहेतुंतुपश्चान्निराकुर्मः । आदौदृश्यत्वहेतूक्तेरेवबौद्धोक्तयुक्त्युद्गिरणमात्रत्वेनतवबौद्धसाम्यात्त्वंततसभायामेवनिवेशनीयोनास्माभिर्दूषणायकक्षीकरणीयइत्याशयेनदृश्यत्वहेतूक्तिरपिबौद्धोक्तयुक्तिच्छर्दिमात्रमित्युक्तं । मिथ्यामि

थ्यार्थविषयः । तेनप्रत्ययपक्षकमनुमानंकृतं । त्वयातुविमतंमिथ्येतिविषयपक्षकं प्रमेयत्वेकमेव । ज्ञानस्यमिथ्यात्वेविषयस्यापि मिथ्यात्वादितिद्रष्टव्यं । मीमांसकरीत्यात्र्यवयवप्रयोगः । (व्यवहारेभट्टनयइत्यंगीकारात् ।) छर्दिरुद्गिरणं । विशेषोबौद्धमायि नोः ॥ तद्युक्तमिति ॥ यःप्रत्ययःसमृषादृष्टइतिज्ञानमात्रस्याऽप्रामाण्यकथनंयुक्तं । ज्ञानंजायमानंअप्रमाणंसदेवजायतइति अप्रामाण्यस्यस्वतस्त्वांगीकारात् । त्वन्मतेज्ञानंजायमानंप्रमाणंसदेवजायतइतिप्रामाण्यस्यस्वतस्त्वांगीकाराद्यत्रदृश्यत्वंतत्रसर्व त्रमिथ्यात्वमितिवचनमयुक्तं । तथाचसत्यत्वग्राहिप्रत्यक्षादिविरोधस्तवेत्याशयः । संभावितान् दृश्यत्वनिर्वचनप्रकारान्दूषयि

प्रत्ययस्समृषादृष्टःस्वप्नादिप्रत्ययोयथे"तिबौद्धोक्तयुक्तिच्छर्दिमात्रं । इयांस्तुविशेषः ।

बौद्धमतेह्यप्रामाण्यस्यस्वतस्त्वाद्युक्तं । त्वन्मतेतुप्रामाण्यस्यस्वतस्त्वात्तदयुक्तमिति ।

किंचेदंदृश्यत्वं वृत्तिव्याप्यत्वं फलव्याप्यत्वंवा साधारणंवाकदाचित्कथंचिद्विषय

त्वंवा स्वव्यवहारेस्वातिरेकिसंविदपेक्षानियतिर्वा अस्वप्रकाशत्वंवा । नाद्यः ।

तुंपृच्छति ॥ किंचेदमिति ॥ असंगतिपरिहारायेदमित्युक्तं । यद्धेतूकृतंतदिदमित्यर्थः ॥ वृत्तीति ॥ इंद्रियार्थसन्निकर्षात् बाह्येंद्रियद्वारानिस्सृतांतःकरणपरिणामोवृत्तिः । तद्व्याप्यत्वंनामतयाप्राप्यत्वं । विषयत्वमित्यनुक्त्वाव्याप्यत्वमितिवचनंयथा तटाकोदकंकुल्यात्मनाबहिर्निर्गत्यकेदारान्प्रविश्यतद्वदेवचतुष्कोणाद्याकारेणभवति तथासावयवंतैजसमंतःकरणंचक्षुरादिद्वारा बहिर्निर्गत्यविषयंव्याप्यतदाकारंभवतिसेयंवृत्तिरितिपरेणोच्यमानत्वाद्विषयंव्याप्येतितदीयवचनानुसारेणेतिज्ञातव्यं ॥ फले

ति ॥ उक्तरूपायांवृत्तौप्रतिबिंबितं तदुपारूढंज्ञातृचैतन्यमस्ति । तथाचघटादिविषयाधिष्ठानचैतन्यंचास्ति । घटाद्यावरकाज्ञा
नंचतत्रैवास्ति । अस्मन्मतेतुपुंगतंतमः । तन्मतेविषयगतमज्ञानं । तथाचचैतन्या(धिष्ठितया)धिष्ठान(चैतन्य)वृत्त्याअज्ञाननाशे
ऽनंतरंविषयाधिष्ठानंचैतन्यंव्यज्यते । अनंतरंवृत्तिप्रतिबिंबितंज्ञातृचैतन्यंविषयाधिष्ठानचैतन्यंचैकीभवति । अ(त)तएवमयाज्ञा
तोघटइत्यादिव्यवहारः । यद्यपिकेवलायावृत्तेर्नाज्ञाननाशकत्वं । चैतन्यस्यचाऽज्ञानस्फोरकत्वान्नाज्ञाननाशकत्वंयुक्तं । तथा
पिवृत्त्युपारूढस्यतद्युक्तं । यथोक्तं "तृणादेर्भासिकाप्येषासूर्यदीप्तिस्तृणंदहेत् । सूर्यकांतमुपारुह्यतन्न्यायंचितियोजये"दिति ।
तथाचज्ञप्तिर्ज्ञानमितिभावव्युत्पत्त्याऽधिष्ठानचैतन्यंज्ञानमित्युच्यते वृत्तिस्तुज्ञायतेऽनयाचैतन्यमितिकरणव्युत्पत्त्याज्ञानमित्यु
च्यतइतितत्प्रक्रिया । यथोक्तं"स्वच्छेंतःकरणेऽशनिप्रसृमरेनेत्रादिमार्गोद्गतेतत्तद्बाह्यचयात्मनापरिणतेबिंबीभवंतीचितिः । ए
काप्यर्थमनोविशेषकवशाद्द्वैतंप्रपन्नाहरत्यज्ञानंप्रकटीकरोतिविषयान्ज्ञातंमयेदंत्विती"ति । प्रसृमरे समाने । बाह्यचयात्मना
घटादिबाह्यपदार्थसमूहात्मना । चितिः ज्ञातृचैतन्यं । अर्थमनोलक्षणविशेषकवशात् व्यावर्तकवशात् ज्ञातृचैतन्यंविषयाधि
ष्ठानचैतन्यमितिद्वैविध्यंप्राप्ता विषयान् विषयाधिष्ठानचैतन्यानीतियावत् । अतउक्तरूपायांवृत्तौप्रतिबिंबितंचैतन्यंतदभिव्य
क्तमधिष्ठानचैतन्यंवाफलं तद्व्याप्यत्वंतत्संबंधइत्यर्थः । साधारण मुभयानुगतंदृश्यत्वमात्रमित्यर्थः । अतीतादौभागासिद्धिवार
णायकदाचिदिति । साक्षिरूपचिद्विषयत्वस्यसुखादावेवसत्त्वेनबाह्यघटादौनित्यातींद्रियेच धर्मादावभावाद्भागासिद्धिरित्यतःक
थंचिदित्युक्तं । तथाचसाक्षाच्चिद्विषयत्वाभावेपिकथंचिद्घटादिकं(जानामीति)ज्ञातमितिज्ञानविषयकज्ञानस्यसाक्षिरूपत्वात्तत्रसा

क्षिणि ज्ञानावच्छेदकतयाघटादेःधर्मादिकंनजानामीतिअज्ञानविषयकज्ञानस्यसाक्षिरूपत्वात्तत्रसाक्षिणि अज्ञानावच्छेदकतयाध र्मादेर्भासमानत्वाददोषइतिभावः । आत्मनिस्वव्यवहारेस्वाख्यसंविदपेक्षासद्भावेनातिव्याप्तिवारणायस्वातिरेकीति । तस्यैवा द्वितीयत्वादिव्यवहारेएकमेवेत्यादिविशेषणोपनायकमानापेक्षासद्भावेनातिव्याप्तिवारणायनियतिग्रहणं । तथाचस्वरूपमात्रस्य स्वप्रकाशत्वेनतद्व्यवहारेस्वातिरेकिसंविदपेक्षायाअभावान्नस्वातिरेकिसंविदपेक्षानियतिरितिभावः ॥ आत्मनोपीति ॥ वेदांत

आत्मनोपिवेदांतज(न्य)नितवृत्तिव्याप्यत्वात् । अन्यथाब्रह्मपराणांवेदांतानांब्रह्म
ज्ञानार्थंश्रवणादिविधेश्चवैयर्थ्यं । ब्रह्मविचारयतोर्गुरुशिष्ययोर्मौनंमौढ्यंचस्यात् ।
किंचब्रह्मजिज्ञासाब्रह्मज्ञानमित्यादौकर्मणिषष्ठी तमेवधीरोविज्ञायेत्यादौद्वितीया दृ
श्यतेत्वग्र्ययाबुध्येत्यादौतिङ् आत्मावाअरेद्रष्टव्यइत्यादौतव्यादि(प्रत्यय)श्चनस्यात् ।

जन्ययाउक्तरूपमनःपरिणामरूपचरमवृत्त्याआत्मनोपिव्याप्यमानत्वात्तत्रव्यभिचारइत्यर्थः ॥ अन्यथेति ॥ आत्मनोपिवृत्ति व्याप्यत्वानंगीकारइत्यर्थः । ननुनवेदांतवैयर्थ्यं जपाद्यर्थत्वेनसार्थक्यादित्यतआह ॥ ब्रह्मपराणामिति ॥ तत्प्रतीतीच्छयो च्चरितत्वंतात्पर्यं । एवंचोपक्रमादिभिर्ब्रह्मप्रतीतीच्छया पूर्वपूर्वाध्यापकोच्चारितानामित्यर्थः ॥ श्रवणादीति ॥ फलाभावादि तिभावः । ननुनफलाभावः विश्वजिन्न्यायेनस्वर्गार्थत्वोपपत्तेरित्यतउक्तंब्रह्मज्ञानार्थमिति । "आत्मावाअरेद्रष्टव्यःश्रोतव्य"

इत्यत्रदर्शनार्थं श्रोतव्यइति श्रवणादे(र्ब्रह्मज्ञानार्थं)र्दर्शनार्थत्वस्यैवप्रतीतेर्नव्यवहितस्वर्गार्थत्वमित्यर्थः । ब्रह्मविचारयतोः ब्रह्मविचार(यितुमुपक्रांतयो)मुपक्रांतवतोरितिव्याख्येयं । अन्यथाविचारकरणकालेमौनाभावादितिध्येयं । गुरोर्मौनंशिष्यस्यमौढ्यं । गुरोर्मौनेशिष्यस्यमौढ्यंस्वतएवायातं उपदेशाभावेनब्रह्मज्ञानाभावादितिभावः ॥ दृशोऽज्ञानइति ॥ दृशः ब्रह्मचितः । सर्वस्यापिजगतःपक्षत्वेनचिद्विषयत्वरूपदृश्यत्वधर्मस्यापिपक्षकोटिनिविष्टत्वेनतज्ज्ञानमपिवाच्यं । तच्चनसंभवति । विशेषणीभूतायादृशःब्रह्मरूपचितः अज्ञानेचिद्विषयत्वरूपविशिष्टस्याप्यज्ञानात् । तथाचतस्मिन्नाश्रयैकदेशेवृत्तिव्याप्यत्वस्यज्ञातुमश

दृशोऽज्ञानेदृग्विषयत्वरूपदृश्यत्वज्ञानंचनस्यात् । "सर्वप्रत्य
यवेद्येचब्रह्मरूपेव्यवस्थित "इत्यादिस्ववचनविरोधश्चस्यात् ।

क्यत्वात्हेतोर्भागेऽज्ञानासिद्धिरितिसांप्रदायिकोर्थः ॥ दृग्विषयत्वेति ॥ वृत्तिविषयत्वेत्यर्थः । केचित्तुदृग्विषयत्वरूपदृश्यत्वज्ञानंचनस्यादित्यस्यचिद्विषयत्वरूपदृश्यत्वज्ञानंनस्यादित्यर्थः । तथाचदृशश्चितोब्रह्मणोऽज्ञानेकदाचित्कथंचिच्चिद्विषयत्वरूपस्यदृश्यत्वस्यज्ञातुमशक्यत्वात् चिद्विषयत्वरूपदृश्यत्वहेतोरसिद्धिरित्यर्थइत्याहुः । तच्चिंत्यं । वृत्तिव्याप्यत्वरूपदृश्यत्वदूषणावसरेचिद्विषयत्वस्यासिद्धिवचनस्यानवसरग्रस्तत्वादिति ॥ इत्यादीति ॥ "प्रपंचस्यप्रविलयःशब्देनप्रतिपाद्यते "इत्युत्तरार्धः । नचविशिष्टमेवसर्वप्रत्ययवेद्यंनशुद्धमितिवाच्यं । उत्तरार्धेप्रपंचविलयाधिष्ठानत्वोक्त्यासर्वप्रत्ययवेद्यस्यशुद्धत्वावगमादित्यर्थः ।

ननुनात्मनिव्यभिचारः तल्लक्षणाभावात् । तथाहि । विपक्षेहेतोःसत्त्वमात्रंनव्यभिचारः तथात्वेधूमवत्त्वस्यापिहृदेव्यभिचारः स्यात् । तत्रापिप्रातिभासिकधूमवत्त्वस्यसत्त्वात् । तस्माद्धर्मिसमसत्त्वस्यहेतोर्वृत्तिर्व्यभिचारः । धर्मिभूतहृदस्यव्यावहारिकत्वे नतत्समसत्ताकधूमवत्त्वस्यतत्राभावान्नव्यभिचारइतिवक्तव्यं । एवंचब्रह्मण्यपिनव्यभिचारः । पारमार्थिकेब्रह्मणिदृश्यत्वस्य व्यावहारिकत्वेनधर्मिसमसत्ताकदृश्यत्वहेतोर्ब्रह्मण्यवृत्तेरित्याशंक्यनिषेधति ॥ **नचेति** ॥ **अद्यापीति** ॥ तथाचब्रह्मजगतोः पारमार्थिकत्वव्यावहारिकत्वविभागेसिद्धेलक्षणाभावेनदृश्यत्वस्यव्यभिचाराभावादनुमानस्यसम्यक्त्वसिद्धिः तत्सिद्धौचास्य

**नचविपक्षेधर्मिसमसत्वस्यहेतोर्वृत्तिर्व्यभिचारः नत्वारोपितस्य अतिप्रसंगात् । दृश्यत्वंचव्यावहारिकेजगतीवपारमार्थिकात्मन्यपिव्यावहारिकमेवेतिनव्यभिचारइतिवाच्यं । ब्रह्मजगतोःपारमार्थिकत्वव्यावहारिकत्वविभागस्याद्याप्यऽसिद्धेः । किंचपक्षेधर्मिसमसत्वस्यसाध्यस्याभावोबाधः ।**

विभागस्यसिद्धिरित्यन्योन्याश्रयादितिभावः । ननुनान्योन्याश्रयः । विभागसिद्धेरनुमानसम्यक्त्वसिद्ध्यधीनत्वाभावात् । अपितर्हिअनाशंकितदोषयातत्सत्यंअतोन्यदार्तमित्यादिश्रुत्यैवविभागसिद्धौउपोद्धलकतयैवानुमानस्योच्यमानत्वादित्यस्वरसादाह ॥ **किंचेति** ॥ यदिधर्मिसमसत्त्वस्यहेतोर्वृत्तिर्व्यभिचारइतिलक्षणंकल्पयित्वाव्यभिचारपरिहारःक्रियते तर्हिसाध्याभावमात्रंनबाधलक्षणं । तथात्वेवह्निरनुष्णइत्यत्रापिप्रातिभासिकानुष्णत्वस्यसद्भावेनसाध्याभावाभावाद्बाधाभावापत्तेः । तथापक्षेहेतो

स्सत्त्वमात्रंनसिद्धिः । तथात्वेशब्दोनित्यश्चाक्षुषत्वादित्यत्रापिप्रातिभासिकहेतोःपक्षेसत्त्वेनासिद्ध्यभावापत्तेः । तस्मात्तत्परिहा
रायधर्मिसमसत्ताकस्यसाध्यस्याऽभावोबाधः पक्षेधर्मिसमसत्ताकस्यहेतोःसत्त्वंसिद्धिः तदभावोऽसिद्धिरितिलक्षणंवाच्यं । त
थाचअनुभूतिःस्वप्रकाशा अनुभूतित्वादितिब्रह्मणस्स्वप्रकाशत्वसाधकानुमानेपिअनुभूत्याख्यपारमार्थिकब्रह्मरूपधर्मिसमसत्ता
कस्यस्वप्रकाशत्वरूपसाध्यस्याभावाद्बाधःस्यात् ब्रह्मणिस्वप्रकाशत्वस्यव्यावहारिकत्वेनपारमार्थिकब्रह्मसमसत्ताकत्वाभावात् ।
तथाधर्मिसमसत्ताकस्यानुभूतित्वरूपहेतोःपक्षेऽभावेनासिद्धिश्चस्यात् ब्रह्मण्यऽनुभूतित्वस्यापिव्यावहारिकत्वेनपारमार्थिकब्रह्म
समसत्ताकत्वाभावादित्यपिस्यात् । एवंविपक्षेसाधनाभावमात्रमव्यभिचारोनभवति । तथात्वेपर्वतोधूमवान्वह्नेरित्यत्रापिविपक्षे
ऽयोगोलकेवह्निरूपसाधनाभावस्यारोपितस्यसत्त्वादव्यभिचारित्वापत्तेः । तस्माद्धर्मिसमसत्ताकःसाधनस्याभावोऽव्यभिचारि
त्वं विपक्षेऽयोगोलकेव्यावहारिकेवह्निरूपसाधनाभावस्यप्रातिभासिकत्वेनधर्मिसमसत्ताकत्वाभावान्नाव्यभिचारइतिवाच्यं । त
थाचमिथ्यात्वसाधकदृश्यत्वानुमानस्यव्यभिचारःस्यात् । ब्रह्मणिदृश्यत्वरूपंयत्साधनंतदभावस्याऽद्वैतभंगापत्त्याब्रह्मरूपधर्मि
समसत्ताकत्वाभावेनाव्यभिचारित्वलक्षणाभावात् । तस्मात्स्वप्रकाशत्वानुमानेव्यावहारिकस्यसाध्यस्यव्यावहारिकस्यहेतोश्च
पक्षेसत्त्वमात्रेणबाधासिद्धीपरिहरणीये । एवमेवविपक्षेब्रह्मणिव्यावहारिकस्यदृश्यत्वस्यसत्त्वाद्व्यभिचारस्तदवस्थः । ननुतथा
पिनात्मनिव्यभिचारःधर्मिसमसत्ताकदृश्यत्वादितिदृश्यत्वेधर्मिसमसत्ताकत्वविशेषणंदीयतइतिचेत्तर्हिदृश्यत्वंनामवृत्तिव्याप्यत्वं
व्याप्यत्वंचविषयत्वं । एवंचधर्मिसमसत्ताकविषयत्वादित्येवास्तु । वृत्तीतिविशेषणंव्यर्थं।नचब्रह्मणिधर्मिसमसत्ताकंविषयत्वमस्ती

तितत्रव्यभिचारवारणायवृत्तीतिविशेषणमितिवाच्यं । ब्रह्मणिधर्मिसमसत्ताकस्यकस्यापिधर्मस्याभावेनधर्मिसमसत्ताकविषयत्व रूपधर्मस्याप्यभावेनहेतोरेवाभावेनव्यभिचाराप्रसक्त्यावृत्तीतिविशेषणंव्यर्थमेवस्यादित्याह ॥ पक्षइत्यारभ्यमिथ्यात्वेहेतुः स्यादित्यंतेनग्रंथेन ॥ धर्मिसमसत्ताकंसाध्यंनास्तीत्युपपादनायतात्विकधर्महीनइत्युक्तं । दृश्यत्वादीनां वृत्तिव्याप्यत्वादीनां ॥

पक्षेहेतोर्धर्मिसमसत्ताकस्यसत्वंचासिद्धिःतदभावोऽसिद्धिः । तथाचात्मनितात्विकधर्महीनेस्वप्रकाशत्वादिरूपसाध्यस्यबाधः । तत्साधकानुभूतित्वादेश्चासिद्धिः । एवंविपक्षेधर्मिसमसत्ताकःसाधनस्याभावोऽव्यभिचारित्वं । तथाचदृश्यत्वादीनांआत्मनिव्यभिचार इतिचस्यात् । तस्माद्यथात्मनःपक्षत्वेतत्रव्यावहारिकस्यहेतोस्सत्वान्नासिद्धिः । तथा (अस्य)तस्यविपक्षत्वेपिव्यावहारिकस्यहेतोस्सत्वाद्व्यभिचारः । अथधर्मिसमसत्वंहेतु विशेषणं । तर्ह्यात्मन्येवंविधधर्मस्यकस्याप्यभावाद्विषयत्वादिरेवमिथ्यात्वेहेतुःस्यात् ।

नासिद्धिरिति ॥ व्यावहारिकसाध्यस्यापिसत्त्वान्नबाधइत्यपिद्रष्टव्यं ॥ विषयत्वादिरेवेति ॥ वृत्तिविषयत्वमित्यत्रव्याप्यत्वापरपर्यायंविषयत्वमेवहेतुःस्यात्वृत्तीतिविशेषणंव्यर्थमितिभावः । ननुनवृत्तीतिविशेषणंव्यर्थं । धर्मिसमसत्ताकवृत्तिविषयत्वस्याखंडोपाधित्वात् । अखंडोपाधौचनवैयर्थ्यं व्यर्थविशेषणताबीजाभावात् । एकस्मिन्धर्मिणिलघुगुरुधर्मद्वयसावेशेलघुना

व्याप्त्यवच्छेदेगुरोरनावश्यकत्वंहितद्बीजं । यथानीलधूमवत्त्वादित्यत्रनीलधूमवतोभावोनीलधूमएवतत्रहेतुः तत्रएकस्मिन्धर्मिणिधूमेधूमत्वनीलधूमत्वरूपधर्मद्वयसमावेशेलघुनाधूमत्वेनव्याप्तिज्ञानोपपत्तेर्गुरोर्नीलधूमत्वस्यानावश्यकत्वंदृष्टमित्येवंतद्बीजसद्भावेनव्यर्थविशेषणत्वंदृष्टं । नह्येवंवृत्तीत्यस्यवैयर्थ्यंवक्तुंयुक्तं । अत्रविषयत्वंहेतुः । तत्रविषयत्वत्वंधर्मोस्तिवृत्तिविषयत्वेवृत्तिविषयत्वत्वधर्मोस्तीत्येवंविषयत्वत्ववृत्तिविषयत्वत्वयोर्लघुगुरुधर्मयोरेकस्मिन्धर्मिणिविषयत्वेसमावेशाभावेनव्यर्थविशेषणताबीजाभावेनवृत्तीतिविशेषणवैयर्थ्यस्यवक्तुमशक्यत्वादित्यस्वरसादाह ॥ ममरीत्येति ॥ मन्मतेदृश्यत्वादिधर्माणांब्रह्मणितात्वि

**ममरीत्याआत्मनिव्यभिचारश्च । दृष्टांतस्यसाधनवैकल्यंच । ननुशुद्धंब्रह्मनदृश्यं किंतुविशिष्टमेव दृश्यत्वश्रुतयोपितद्विषयाः । अन्यथायत्तदद्रेश्यमित्यादिश्रुतिविरोधादितिचेन्न । स्वतःसिद्धेर्निराकरिष्यमाणत्वेनशुद्धासिद्धिप्रसंगात् ।**

कत्वेनधर्मिसमसत्ताकत्वादितिभावः ॥ दृष्टांतस्येति ॥ रजतंदृष्टमित्यनुभवेनव्यावहारिकदृश्यत्वाधिकरणेशुक्तिरूप्येधर्मिसमसत्ताकदृश्यत्वस्यत्वन्मतेऽभावादित्यर्थः । ब्रह्मणिव्यभिचाराभावंशंकते ॥ नन्विति ॥ ननुशुद्धब्रह्मणोऽदृश्यत्वे दृश्यतेत्वग्र्याबुद्ध्येत्यादिश्रुतिविरोधइत्यतआह ॥ दृश्यत्वेति ॥ तद्विषयाः विशिष्टविषयाः । नचविशिष्टएवव्यभिचारः । तत्रमिथ्यात्वस्यापिसत्त्वादितिभावः । अन्यथा शुद्धस्यदृश्यत्वांगीकारे । अद्रेश्यं अदृश्यं ॥ स्वतइति ॥ यदिशुद्धंब्रह्मदृश्यंनस्यात्तर्हि

तत्सिद्धिरेवनस्यात् । नचस्वप्रकाशत्वात्स्वतएवतत्सिद्धिरितिवाच्यं । स्वतइतिकोर्थः स्वेनेतिवा प्रमाणेनविनेतिवा । नाद्यः । कर्तृकर्मविरोधात् । नद्वितीयः । शशविषाणादीनामप्येवंसिद्धिप्रसंगादित्येवंस्वतःसिद्धेर्नि(राकरि)रसिष्यमाणत्वादित्यर्थः । विधातुमितिदृष्टांतार्थं । " सिद्धंधर्मिणमुद्दिश्यसाध्यधर्मोविधीयते "इत्युक्तेरितिभावः ॥ ज्ञेयत्वाच्चेति ॥ अभावज्ञानेऽधिकरणज्ञानस्यकारणत्वादित्यर्थः । नन्वज्ञातेधर्मिणीत्येतदयुक्तंस्वप्रकाशतयास्वतस्सिद्धत्वेनतज्ज्ञानसंभवात् । तत्रचवृत्तिविषयत्वरूपदृश्यत्वनिषेधोपपत्तेरित्याशंक्यनिषेधति ॥ नचेति ॥ वृत्त्यादृश्यत्वेति ॥ वृत्तिविषयत्वरूपदृश्यत्वेत्यर्थः । तथापिब्र

अज्ञानेधर्मिणिकस्यचिद्धर्मस्यविधातुंनिषेद्धुंवाअशक्यत्वेनशुद्धेदृश्यत्वंनिषेध
ताशुद्धस्यज्ञेयत्वाच्च । नचस्वप्रकाशत्वेनस्वतःसिद्धेशुद्धेवृत्त्यादृश्यत्वनिषेध
धीः।शुद्धंस्वप्रकाशमितिशब्दजन्यविशिष्टवृत्तौशुद्धाप्रकाशेतस्यस्वप्रकाशत्वा
सिद्धेःलाघवेनस्फुरणमात्रमेवमिथ्यात्वेतंत्रमितिस्वतःस्फुरदपिब्रह्ममिथ्यैव।

ह्मणिवृत्तिव्याप्यत्वनिषेधोनसंभवति । तथाहि । शुद्धंस्वप्रकाशमितिशब्दजन्यवृत्तौब्रह्मप्रकाशते नवा । नेतिपक्षेतस्यस्वप्रकाशत्वासिद्धेरित्याह ॥ शुद्धमिति ॥ आद्येवृत्तिविषयत्वस्यैवप्राप्त्याव्यभिचारस्तदवस्थइतिद्रष्टव्यं ॥ विशिष्टवृत्ताविति ॥ स्वप्रकाशत्वविशिष्टशुद्धविषयकवृत्तावित्यर्थः । किंचमिथ्यात्वेवृत्तिव्याप्यत्वापेक्षयास्फुरणमात्रस्यलघुत्वात्तस्यैवप्रयोजकत्वमस्तु । तथाचजगद्वद्ब्रह्मणोपिस्फुरणान्मिथ्यात्वंस्यादित्याह ॥ लाघवेनेति ॥ इयांस्तुविशेषः । जगत्प्रमाणेनस्फुरतिब्रह्मतुस्व

तःस्फुरतीति । ननुब्रह्मणोमिथ्यात्वेतत्सत्यमित्यादिश्रुतिविरोधइतिचेत्तर्हिजगतोमिथ्यात्वेपिविश्वंसत्यमित्यादिश्रुतिविरोधसा स्यात् । ननुजगत्सत्यताश्रुतिःविमतंमिथ्यादृश्यत्वादित्यनुमानविरोधादसद्वैलक्षण्यपरेतिचेत्तर्हिब्रह्मसत्यताश्रुतिरपि ब्रह्ममिथ्यास्फुरणादित्यनुमानविरोधादसद्वैलक्षण्यपरैवस्यादित्याह ॥ तत्सत्यत्वेति ॥ अभिधया शक्त्या ॥ तत्प्रयोगेति ॥ शुद्धपदप्रयोगेत्यर्थः ॥ वैयर्थ्यादिति ॥ अर्थबोधकत्वरूपप्रयोजनाभावादितिभावः । शुद्धबोधकत्वेचदृश्यत्वप्राप्त्याव्यभिचारइ

तत्सत्यत्वश्रुतिस्तुजगत्सत्यत्वश्रुतिवदनुमानादिविरोधेनासद्वैलक्षण्यपरेत्यापाताच्च । शुद्धं नदृश्यतइत्यत्रशुद्धशब्दस्याभिधयालक्षणयावाशुद्धाबोधकत्वेतत्प्रयोगवैयर्थ्याच्च । विशिष्टे मिथ्यात्वदृश्यत्वयोर्व्यतिरेकासंभवेनशुद्धनिष्ठव्यतिरेकज्ञानायशुद्धस्यज्ञेयत्वाच्च । विशिष्टज्ञानेविशेष्यस्यापिभानेनाविशिष्टस्यदृश्यत्वेनैवशुद्धस्यापिदृश्यत्वसिद्धेश्च । नचाविष्णवेशिपिविष्टायेत्यादौदेवतात्ववत्विषयत्वमपिविशिष्टएव । नतुविशेष्येपीतियुक्तं ।

तिहृदयं ॥ शुद्धेति ॥ दृश्यत्वहेतोरन्वयव्यतिरेकित्वाद्धेतुसाध्यव्यतिरेकग्रहाधिकरणत्वेनशुद्धस्यज्ञेयत्वादित्यर्थः । ननुव्यतिरेकग्रहोपिविशिष्टएवास्तामित्यतउक्तं ॥ विशिष्टइति ॥ ननुविशिष्टस्यज्ञानविषयत्वेविशेष्यभूतशुद्धस्यापितत्सिद्धमित्ययुक्तं । विष्णवेशिपिविष्टायेत्यादौयथादेवतात्वंनविशेष्यभूतविष्णुमात्रे नवाशिपिविष्टे किंनाम शिपिविष्टत्वविशिष्टएव एवंवृत्तिविषयत्वमपिविशिष्टएव नतुविशेष्येपि विशिष्टस्यविशेष्यातिरिक्तत्वादित्याशंक्यनिषेधति ॥ नचेति ॥ विषयत्वमपि ज्ञानविषयत्व

मपि ॥ देवतात्ववदेवेति ॥ तस्यशिपिविष्टमात्रेऽभावादितिभावः । विषयत्वस्यज्ञानविषयत्वस्य ॥ भागेति ॥ कर्तृत्वादि रूपविशेषणभागस्यापिजगदंतःपातित्वादितिभावः ॥ नतुविशेष्येघटइति ॥ ततश्चतस्यमिथ्यात्वंनस्यादितिभावः । विशिष्टएवदृश्यत्वंनतुविशेष्यइत्यंगीकारेबाधकांतरमाह ॥ विशिष्टइति ॥ ननुविशिष्टज्ञानानंतरंव्यवधानेनविशेष्यज्ञानंजायतेतज्ज्ञानादेवविशेष्यविषयकाज्ञानस्यनिवृत्तिर्नतुविशिष्टज्ञानात् अतोविशिष्टेज्ञातेपिविशेष्येऽज्ञानादिकमुपपद्यतइत्यतआह ॥ दं

देवतात्ववदेवविषयत्वस्यापिविशेषणेप्यभावेनभागासिद्धेः । घटविशिष्टएवदृश्यत्वंनतुविशेष्येघटइत्यापाताच्च । विशिष्टेज्ञातेपिकदाचिद्विशेष्येअज्ञानाद्यापाताच्च । दंडीचैत्रइतिज्ञानेनैवचैत्रोपिज्ञातइत्यनुभवाच्च । एतेनानुभवविरोधादिनैवाग्नीषोमयोर्देवतात्ववद्विषयत्वमपिव्यासज्यवृत्तीतिनविशेष्येतदितिनिरस्तं ।

डीचैत्रइतिज्ञानेनैवेति ॥ तथाचव्यवहितविशेष्यज्ञानकल्पनमप्रामाणिकमितिभावः ॥ अग्नीषोमयोरिति ॥ यथादेवतात्वपर्याप्त्यधिकरणत्वमग्नीषोमयोरेवनैकस्य । एवंदृग्विषयत्वपर्याप्त्यधिकरणत्वंकर्तृत्वादिविशेषणब्रह्मणोरेवनैकैकस्येतिकेवलेब्रह्मणिनव्यभिचारइतिभावः । एतेनेत्युक्तंविशदयति ॥ अनुभवेति ॥ दंडीचैत्रइतिज्ञानेकेवलेविशेष्येपिज्ञानविषयत्वानुभवेन तद्विरोधादित्यर्थः । आदिपदेन घटत्वघटयोरेववृत्तिविषयत्वपर्याप्त्यधिकरणत्वप्राप्त्याकेवलेघटेतदभावापातेनभागासिद्ध्यापत्ते ॥ ५४ ॥

रित्यवधेयं । ननुब्रह्मणोदृश्यत्वेऽदृश्यत्वश्रुतिविरोधइत्यतआह ॥ अतएवेति ॥ ब्रह्मणोदृश्यत्वस्ययुक्त्योपपादितत्वादेवेत्य
र्थः । सर्वथादृश्यत्वपरत्वेबाधकमाह ॥ अन्यथेति ॥ यदित्यनेनब्रह्मोद्दिश्यतत्रादृश्यत्वादिकंविधीयते । तथाचयदित्यादिप
देनैवब्रह्मणोज्ञाततत्वात्तस्यपुनरदृश्यत्वाभिधानेस्वक्रियाविरोधइतिभावः । तथाचोक्तं । "यतइत्यादिकैर्वद" न्नित्यादि ॥ एते
नेति ॥ चरमवृत्त्युपहितस्यात्मनएवचरमवृत्तिविषयत्वरूपदृश्यत्वांगीकारेउपधेयस्यशुद्धस्यापिवृत्तिविषयत्वस्यप्राप्तत्वेनव्यभि
चारादितिपूर्वोक्तरीत्यानिरस्तमित्यर्थः । किंचचरमवृत्त्युपहितस्यात्मनःचरमवृत्तिविषयत्वंवदन्प्रष्टव्यः । वेदांतजन्यचरमवृत्तौ

अतएवादृश्यत्वश्रुतिस्साकल्येनादृश्यत्वपरा । अन्यथायत्तदद्रेश्यमित्यादौयच्छब्दाद्ययोगात् ।
एतेनचरमवृत्त्युपहितस्यैवात्मनस्तद्विषयत्वात्तस्यचमिथ्यात्वान्नव्यभिचारइतिनिरस्तं । चरम
वृत्तेःस्वविषयांतर्भावेतस्याःस्वप्रकाशत्वस्याप्रमात्वस्यचापातात् । वृत्त्युपरागोत्रसत्तयोपयुज्यते

ब्रह्मविशेषणीभूताचरमवृत्तिःप्रतीयते नवेति । आद्येआह ॥ चरमवृत्तेरिति ॥ स्वेति ॥ स्वशब्देनचरमवृत्तिर्ग्राह्या । तद्वि
षयश्चरमवृत्त्युपहितंब्रह्मतदंतर्भावेब्रह्मवत्तद्विशेषणीभूतायाःस्वस्यावृत्तेरपिस्वविषयत्वइत्यर्थः ॥ स्वप्रकाशत्वस्येति ॥ स्वक
र्मकप्रकाशत्वंचकर्तृकर्मविरोधात्त्वयानांगीकृतमितिभावः ॥ अप्रमात्वस्येति ॥ चरमवृत्त्युपहितस्यब्रह्मणोमिथ्यात्वात्तद्वि
षयिण्याश्चरमवृत्तेरप्रमात्वंस्यादित्यर्थः । वृत्त्युपरागः ब्रह्मणोवृत्तिसंबंधः । अत्र चरमवृत्तौ । सत्तया स्वरूपसत्तयैव । तद्भाव

त्यंदर्शयति ॥ नत्विति ॥ प्रतिभास्यतयास्वस्याअपिचरमवृत्तेश्चरमवृत्तिविषयतयेत्यर्थः । तथात्वेचरमवृत्तेःस्वप्रकाशत्वाप्रमात्वयोरापातादेवेतिभावः । द्वितीयेत्वाह ॥ बहिर्भावेचेति ॥ वेदांतजन्यचरमवृत्तेर्ब्रह्ममात्रविषयकत्वेनस्वविषयकत्वानंगीकारइत्यर्थः ॥ विषयस्येति ॥ ब्रह्मणइत्यर्थः । तथाचचरमवृत्तेर्ब्रह्ममात्रविषयकत्वेनतस्मिन्वृत्तिविषयत्वसत्त्वेपिमिथ्यात्वाभावाद्व्यभिचारइत्यर्थः ॥ स्वरूपेणेति ॥ विशेषणाविशिष्टकेवलस्वरूपेणैववृत्तिविषयत्वमित्यर्थः ॥ विशिष्टरूपेणैवेति ॥ विशेषणावच्छिन्नस्वरूपेणेत्यर्थः । तथाचहेतोरेवाभावान्नशुद्धेब्रह्मणिव्यभिचारइतिभावः । ननुनघटादेरपिविशिष्टरूपेणैवदृश्यत्वं ।

**नतुप्रतिभास्यतयेतिकल्पतरुविरोधाच्च । बहिर्भावेचविषयस्यसत्यत्वेनव्यभिचारानुद्धारात् । नच स्वरूपेणदृश्यत्वंहेतुः । ब्रह्मतुविशिष्टरूपेणैवदृश्यमितिवाच्यं । निर्विकल्पकाभावपक्षेघटादेरपित त्सद्भावपक्षेनित्यातींद्रियस्यापिविशिष्टरूपेणैवदृश्यत्वेनासिद्धेः । नहिलिंगादिनानिर्विकल्पकधीः ।**

निर्विकल्पकज्ञानविषयस्यघटादेःस्वरूपेणैवदृश्यत्वादतोनासिद्धिरित्यतउक्तं ॥ निर्विकल्पकेति ॥ ननुनित्यातींद्रियस्यापिनिर्विकल्पकविषयत्वसंभवेनस्वरूपेणदृश्यत्वोपपत्तेर्नविशिष्टरूपेणैवदृश्यत्वमित्यतोनासिद्धिरितिचेन्न । नित्यातींद्रियस्यज्ञानंनतावत्प्रत्यक्षेणभवितुमर्हं किंतुलिंगागमाभ्यामेवेतिवाच्यं । अस्तुतर्हिलिंगागमाभ्यामेवधर्माद्यतींद्रियविषयकनिर्विकल्पकज्ञानोदयः । तथाचनासिद्धिरित्यतआह ॥ नहीति ॥ लिंगजन्यानुमितिरूपज्ञानस्यननिष्प्रकारकनिर्विकल्पकज्ञानरूपत्वं । अनुमितेर्व्याप

कतावच्छेदकप्रकारकत्वनियमात् । तथाशब्देनापिजायमानंज्ञानंननिर्विकल्पकं । तस्यशक्यतावच्छेदकप्रकारकत्वनियमात् । किंचब्रह्मणोनस्वरूपेणवृत्तिविषयत्वं किंतुविशिष्टरूपेणैवेतियद्युच्यते तर्हिवेदांतानांकल्पितविशिष्टपरत्वेनातत्वावेदकत्वंस्यादित्याह ॥ वेदांतानामिति ॥ तरतिशोकमिति ॥ तदुपादानाज्ञानंचेतिद्रष्टव्यं । यतोज्ञानमज्ञानस्यतत्कार्यस्यवानिवर्तकमित्यंगीकारात् । तथाचशोकाज्ञानतरणरूपनिवृत्तिंप्रतिसाधनत्वेनोक्तायाआत्मसंविदोनभ्रमत्वंयुक्तं । भ्रमस्याज्ञानानिवर्तकत्वात् । किंतुप्रमात्वमेव । प्रमात्वंचतस्याःकल्पितविशिष्टाविषयकत्वेनैववाच्यं । एवंचवेदांतानांकल्पितविशेषविनिर्मुक्तशुद्ध

वेदांतानांकल्पितविशिष्टपरत्वेतत्वावेदकत्वायोगाच्च। "तरतिशोकमात्मवि"
दित्यादौमोक्षसाधनशुद्धरूपप्रमोक्तेश्च । किंचशुद्धज्ञानाभावेतदाच्छादकस्यमू
लाज्ञानस्यनिवृत्तिर्नस्यात् । ज्ञानस्याज्ञाननिवर्तकत्वेहिसमानविषयत्वंतंत्रं ।

ब्रह्मज्ञानजनकत्वमेवेतितत्रव्यभिचारइत्यर्थः मोक्षसाधनेतिप्रमाविशेषणं ॥ तदाच्छादकस्येति ॥ शुद्धावरकस्येत्यर्थः । ( शुद्धब्रह्मविषयकस्येत्यर्थः ) । ननुशुद्धज्ञानाभावेपिघटादिज्ञानेनतदज्ञाननिवृत्तिर्दृष्टा यावंतिज्ञानानितावंतितन्निवर्त्याज्ञानानीतिमतसद्भावात् । अतउक्तंमूलेति । घटज्ञानेनतदधिष्ठानचैतन्यावरकाज्ञाननिवृत्तावपिसर्वजगदारोपाधिष्ठानभूतशुद्धब्रह्माच्छादकंयन्मूलाज्ञानंनतन्निवृत्तं । तन्निवृत्तिश्चशुद्धब्रह्मज्ञानेनैव । तस्यचज्ञानाविषयत्वेतदाच्छादकमूलाज्ञाननिवृत्तिर्नस्यादित्यर्थः । ननुशुद्धज्ञानस्यशुद्धविषयकत्वाभावेपिशुद्धाज्ञाननिवर्तकत्वंकिंनस्यादित्यतआह ॥ ज्ञानस्येति ॥ ननुज्ञानस्याज्ञाननिवर्तकत्वे

ऽज्ञानसमानविषयकत्वंनतंत्रं अप्रामाणिकत्वात् । नचघटादिज्ञानेदृष्टमितिवाच्यं । घटादिज्ञानेपितदज्ञाननिवर्तकत्वेघटान्याविषयकत्वमेवतंत्रं नसमानविषयकत्वं । एवंचब्रह्मज्ञानस्यब्रह्माविषयकत्वेपि ब्रह्मान्याविषयकत्वाद्ब्रह्माज्ञाननिवर्तकत्वंयुक्तमित्याशंक्यनिराकरोति ॥ नचेति ॥ तत्र घटाद्यज्ञाननिवर्तकत्वे । कुतोनचेत्यतआह ॥ गौरवादिति ॥ भावरूपत्वेनलघुत्वात्समानविषयकत्वमेवतंत्रं नतुतदन्याविषयकत्वंतंत्रं । अभावरूपत्वेनगुरुत्वादितिभावः ॥ दीपेति ॥ यद्विषयकंतमः तद्विष

नचघटादिविषयज्ञानेष्वप्यन्याविषयत्वमेवतत्रतंत्रं । गौरवात् । दीपेच्छादौसमानविषयत्वेनैवविरोधितमोद्वेषादिनिवर्तकत्वदर्शनाच्च । घटपटावितिज्ञानेनघटाज्ञानस्याविशिष्टज्ञानेनचाविशेषणाज्ञानस्यचनिवृत्तिदर्शनाच्च । ब्रह्मज्ञानस्यानिर्विषयत्वे ज्ञानत्वायोगस्यवक्ष्यमाणत्वाच्च । अथतदज्ञाननिवर्तकत्वेतदाकारत्वमेवतंत्रं ।

यकस्यैवदीपप्रकाशस्यविरोधितमोनिवर्तकत्वं । तथायद्विषयकोद्वेषः तद्विषयिण्याअयंमेप्रियोभूयादितीच्छायाविरोधिद्वेषनिवर्तकत्वं समानविषयकत्वेनैवदृष्टमित्यर्थः । नन्वत्रापितदन्याविषयकत्वमेवतंत्रमस्त्वित्यस्वरसादाह ॥ घटपटाविति ॥ घटपटावितिसमूहालंबनज्ञानस्यघटाज्ञाननिवर्तकत्वमस्ति तत्रतदन्याविषयकत्वंनास्ति घटान्यपटविषयकत्वात् । तथाविशिष्टज्ञानेनविशेषणाज्ञानंनिवर्तते । तत्रचनतदन्याविषयकत्वं विशेषणान्यविशेष्यविषयकत्वादितिभावः ॥ ज्ञानत्वायोगस्येति ॥ न

तावद्ब्रह्मरूपज्ञानस्यब्रह्मान्योविषयः । तस्यमिथ्यात्वेनब्रह्मज्ञानस्यभ्रमत्वापत्तेः । ब्रह्मणस्तुविषयत्वंकर्तृकर्मविरोधादयुक्तमित्येवंनिर्विषयत्वाद्ब्रह्मज्ञानस्यज्ञानत्वमेवायुक्तमितिवक्ष्यमाणत्वादित्यर्थः । यथोक्तं । "निर्विषयत्वेज्ञानमेवनस्याद्वदव" दिति । ननुतदाकारत्वमपितद्विषयकत्वाभावेकथंयुक्तमित्यतआह ॥ तच्चेति ॥ तदाकारत्वंचेत्यर्थः ॥ तद्विषयत्वाभावेपीति ॥ ज्ञानस्यतद्विषयकत्वाभावेपीत्यर्थः ॥ करणसामर्थ्यादेवेति ॥ आकांक्षादिमच्छब्दरूपकरणस्यतदाकारज्ञानजनकत्वरूपसामर्थ्यादेव नविषयसामर्थ्यादित्यर्थः । तथाहि शशशृंगादिशब्दाच्छशशृंगादिज्ञानंशशशृंगाद्याकारंतावज्जायते तत्रतदाकारत्वेन

**तच्चतद्विषयत्वाभावेपिकरणसामर्थ्यादेवशशशृंगादिशब्दज**
**न्यज्ञानस्येवयुक्तं । दृश्यत्वश्रुत्यादिकमपितद्विषयमितिचेत्।**

तद्विषयकत्वंप्रयोजकं विषयत्वंहिकर्मत्वं तच्चकारकविशेषः(क्रियाजनकत्वविशेषः) । तस्यचसकलसामर्थ्यविधुरेशशशृंगेऽभावात् । तस्मादाकांक्षादिमच्छब्दरूपकरणसामर्थ्याज्जायमानं शशशृंगाविषयकमपिशशशृंगाकारमेवजायतइत्यनुभवसिद्धं । एवंब्रह्मणःसकलसामर्थ्यविधुरस्य कारकविशेषकर्मत्वापरपर्यायविषयत्वाभावेप्याकांक्षादिमद्वेदांतवाक्यरूपकरणसामर्थ्याज्जायमानंज्ञानंब्रह्माविषयकमपिब्रह्माकारमेवजायतइ(त्यंगीकारादि)तिभावः । ननुब्रह्मज्ञानस्यब्रह्मविषयकत्वाभावे दृश्यतेत्वग्र्ययाबुद्ध्येतिब्रह्मणोदृश्यत्वोक्तिविरोधइत्यतआह ॥ दृश्यत्वेति ॥ तद्विषयमिति ॥ तदाकारत्वविषयमित्यर्थः । तथाचदृश्यतइत्य

स्यवेदांतजन्यब्रह्मज्ञानंतदाकारंभवतीत्येवार्थोवक्तव्यइतिभावः । वेदांतजन्यावृत्तिरात्माकारेत्यत्रविकल्पयति ॥ सएवेति ॥ सएव आत्मैव । तदाकारएव आत्माकारएव । तदाकारइव आत्माकारसदृशइत्यर्थः ॥ वृत्त्यनाश्रितस्येति ॥ आकारोह्या कारिणमाश्रयते । नचात्माख्याकारोवृत्तिरूपमाकारिणमाश्रयते अतोनात्मावृत्तेराकारइत्यर्थः ॥ साकारवादेति ॥ ज्ञानस्ये तिशेषः । बौद्धमतएवज्ञानंसाकारं नत्वन्मतेऽतइदंतवानिष्टमितिभावः । इदंचदूषणंपक्षत्रयेपिद्रष्टव्यं ॥ जडाद्याकारेति ॥

सएवाकारोयस्येतिवा । तदाकारएवाकारोयस्येतिवा । तदाकारइवाकारोयस्येतिवा ।
नाद्यः । वृत्त्यनाश्रितस्यात्मनोवृत्त्याकारत्वायोगात् । नद्वितीयः । साकारवादापातात् ।
जडाद्याकारवृत्तावात्मीयस्यज्ञानानंदाद्यपरिच्छेदाकारस्याभावाच्च । सत्तयैकाकारत्वे
चघटज्ञानस्याप्यात्माकारत्वापाताच्च । आत्मनोनिराकारत्वाच्च अतएवनतृतीयः ।

जडानानंदपरिच्छेदानृतरूपाकारयुक्तायावृत्तेर्ब्रह्मसंबंधिज्ञानानंदापरिच्छेदसत्यरूपाकारयुक्तत्वंनसंभवतीत्यर्थः । नन्वसाधारणो ज्ञानानंदापरिच्छेदादिरात्माकारोवृत्तेराकारइतिनब्रूमः । किंतुसर्वसाधारणीसत्तैवेत्यतआह ॥ सत्तयेति ॥ सत्तायाघटात्मोभ यनिष्ठत्वादितिभावः । ननुसत्तादिरूपसाधारणज्ञानादिरूपासाधारणाकारव्यतिरिक्तःसंस्थानविशेषएवात्माकारोवृत्तेराकारइत्यु च्यतइत्यतआह ॥ आत्मनइति ॥ आत्माकारसदृशाकारत्वंवृत्तेरितितृतीयोपिनसंभवतीत्यत्रोक्तमतएवेतिहेतुंविशदयति ॥

ज्ञानेति ॥ अतिप्रसक्तेरिति ॥ घटज्ञानस्याप्यात्माकारतापातादित्युक्तातिप्रसक्तेरित्यर्थः ॥ घटतद्वृत्त्योरिति ॥ यथातटाकोदकस्यकुल्यात्मनाबहिर्निस्सृतस्यकेदारान्प्रविष्टस्यकेदारवदेवचतुष्कोणत्वाद्याकारत्वंभवति तद्वदेवसावयवस्यतैजसस्यांतःकरणस्यचक्षुरादिद्वाराबहिर्निस्सृतस्यघटादिविषयंव्याप्यघटाकारत्वंभवति सेयंवृत्तिरित्युच्यमानत्वेनघटतद्वृत्त्योःपृथुबुध्नोदरत्वादिसंस्थानसाम्यंसंभवतीत्यर्थः । एतादृशवृत्तेरप्रामाणिकत्वात्कथंचिदित्युक्तं । तद्विषयत्वमेवहितदाकारत्वमितिभगवत्पादवाक्यंमनसिनिधायाह ॥ तस्मादिति ॥ ननुशशविषाणशब्दात्तदाकारंज्ञानमुपजायतइतिताव(त्साक्षि)दनुभवसिद्धं । नतुतत्स

ज्ञानानंदादिनासाम्यस्यासंभवात् । सत्तयासाम्यस्यचातिप्रसक्तेः । संस्थान(सारूप्य)साम्यस्यचघटतद्वृत्त्योःकथंचित्संभवेपिअपरिच्छिन्नपरिच्छिन्नयोर्ब्रह्मतद्वृत्त्योरयोगात् । तस्मात्तद्विषयत्वमेवतदाकारत्वमितिवाच्यं ।

विषयकं । सकलसामर्थ्यविधुरस्यकर्मत्वापरपर्यायविषयत्वायोगादेव । प्रकृतेपितथास्त्वितिचेत् । अत्रब्रूमः । शशविषाणशब्दादुपजायमानंज्ञानंसविषयंनिर्विषयंवा । निर्विषयत्वेज्ञानमेवनस्याद्घटवत् । सविषयत्वेकथमकर्मकंस्यात् तयोरेकत्वात् । अथकथंसकलसामर्थ्यविकलस्यशशविषाणस्यकर्मत्वमितिचेत् विषयत्वमपिकथं । ननुनविषयत्वंनामवस्तुसामर्थ्यं किंनाम करणसामर्थ्याद्यदुल्लेखिज्ञानमुपजायतेसतस्यविषयइत्युच्यतइतिचेत् । अथज्ञानंप्रतिकर्मत्वमपिकिमधिकंपश्यसि कर्तृकारकाद्यन्यत्वे

सतिज्ञानजनकत्वमितिचेन्न । ज्ञानजनकत्वमित्यत्रकिंज्ञानत्वावच्छिन्नज्ञानजनकत्वंविवक्षितंअपरोक्षज्ञानजनकत्वंवा । नाद्यः । ज्ञानंप्रत्यर्थस्यव्यभिचारेणकस्मिन्नपिज्ञानेजनकत्वासंभवात् । नद्वितीयः । यद्यप्यपरोक्षज्ञानेविषयस्यनियतपूर्ववृत्तित्वम(स्त्येव)स्ति तथापिनानन्यथासिद्धिः । विषयस्यैंद्रियसन्निकर्षनिष्पादकत्वेनान्यथासिद्धत्वात् । नचवर्तमानविषयकजन्यप्रत्यक्षत्वावच्छेदेनाव्यभिचारादनन्यथासिद्धेश्चकर्मणोपिहेतुत्वं । अन्यथाविषयसन्निकर्षनिष्पादकत्वेनकरणस्याप्यन्यथासिद्धतयाजनकत्वंनस्यादितिवाच्यं । वर्तमानविषयकानुमितित्वावच्छेदेनापिकर्मणोहेतुत्वापत्तेः । सामान्यरूपतयालघुभूतविद्यमानविषयकज्ञानत्वावच्छेदेनापिजनकत्वापत्तेश्च । तत्रविषयस्यव्याप्त्यादिलक्षणसन्निकर्षनिष्पादकत्वेनान्यथासिद्धत्वेऽत्रापितथास्तु । नचैवमिंद्रियस्यापिविषयसन्निकर्षजनकत्वेनान्यथासिद्धतयाऽजनकत्वमस्त्वित्युक्तमितिवाच्यं । याक्रियासाकरणजन्येतिक्रियायाः करणजन्यत्वनियमेनव्यापारवतएवचकरणत्वेनसन्निकर्षजनकस्यापिचक्षुरादेःज्ञानजनकत्वंयुक्तमितिनविषयस्यकरणसमानयोगक्षेमवत्ता । ननुचक्षुरादेःकरणस्यकरणत्वसिद्ध्यर्थंकर्मसन्निकर्षरूपव्यापारजननद्वाराक्रियाजनकत्वं । एवमेवघटादेःकर्मत्वसिद्ध्यर्थंकरणसन्निकर्षरूपव्यापारजननद्वाराक्रियाजनकत्वमस्तु अन्यथाकरणत्ववत्कर्मत्वमपिनस्यादितिचेन्न । नहिकरणत्वमिवकर्मत्वमपिव्यापारवत्त्वं । अतीतादिविषयकशाब्दादिज्ञानकर्मण्यव्याप्तेरिति । यथोक्तंतत्वोद्योतटीकायां । “यत्रशाब्दादौज्ञानेविनापिविषयसत्त्वेनकरणसन्निकर्षोत्पत्तिस्तत्रासतोपिकर्मत्वेकिमनुपपन्न” मिति । ननुविनापिविषयसत्त्वंसन्निकर्षोत्पत्तिरितिकथमुच्यते कथंवाशाब्दानुमितिरूपज्ञानस्थलेसन्निकर्षापेक्षेतिचेन्न । नहिसन्निकर्षोविषयसत्त्वव्याप्यः सामान्यादेरतीतादिवि

षयप्रत्यासत्तित्वाभ्युपगमात् । नवाशब्दादिकमसन्निकृष्टकरणं । घटशब्दादिनापटादेर्धूमेनघटादेरपिबोधप्रसंगात् । नचशक्ति व्याप्त्यादिकमेवातिप्रसंगभंजकमितिवाच्यं । तस्यैवसन्निकर्षशब्दार्थत्वोपगमात् । नन्वेवंपद्धत्यादिविरोधः । तत्रप्रमा तृप्रमेयव्यवच्छेदार्थंसाधनग्रहणमित्युक्त्याप्रमेयापरपर्यायस्यविषयस्यापिजनकत्वांगीकारादितिचेन्न । तस्यपररीत्यांगीकारवाद त्वादित्यवसेयं ॥ अन्यथेति ॥ तद्विषयत्वमेवतदाकारत्वमित्यनंगीकारइत्यर्थः । घटादिज्ञानेआत्मज्ञानेइत्यनयोरनंतरंतदज्ञा

अन्यथाघटादिज्ञानेतद्विषयत्वंतंत्रं । आत्मज्ञानेतुतदाकारत्वमित्यननुगमादितिसुस्थआत्म निर्व्यभिचारः । अनिर्वचनीयत्वादिकंमिथ्यात्वमितिपक्षेतुतुच्छेव्यभिचारश्च । असद्वैलक्ष ण्यज्ञानार्थंतस्यापिज्ञेयत्वात् । अथप्राचांरीत्यामास्तुदृग्विषयत्वंदृश्यत्वं । किंत्वाधुनिकरी त्याफलव्याप्यत्वमितिद्वितीयोस्त्वितिचेत् । फलंहिमद्रीत्याव्यवहारोवा भट्टरीत्याज्ञातता वा त्वद्रीत्यावृत्तिप्रतिफलितंचैतन्यंवा तदभिव्यक्तंविषयाधिष्ठानचैतन्यंवा । नाद्यः ।

ननिवर्तकत्वइतिशेषः । ननुसद्विविक्तत्वरूपमिथ्यात्वाख्यसाध्यस्यापितुच्छेसत्त्वात्नतत्रव्यभिचारइत्यतउक्तं ॥ अनिर्वचनी यत्वादिकमित्यादि ॥ आदिपदेनज्ञाननिवर्त्यत्वादि । ननुतत्रदृश्यत्वाख्यहेतोरेवाभावान्नव्यभिचारइत्यतआह ॥ असद्वैल क्षण्येति ॥ अभावज्ञानायप्रतियोगिनोज्ञातव्यत्वादितिभावः ॥ भट्टरीत्येति ॥ व्यवहारेभट्टनयइत्यंगीकारादितिभावः ।

व्यवहारः किं हानादिरूपो विवक्षितः अभिलपना(लापा)दिरूपो वा। नाद्य इत्याह ॥ हानादेरिति ॥ आदिपदेनोपादानोपेक्षे ग्राह्ये । तथा च गगनादेर्व्याप्तत्वेन हानोपादानयोरभावाद्भागासिद्धिः । तत्रोपेक्षाबुद्धिविषयत्वसद्भावेपि कदलीफलादावुपादेयेऽसिद्धिः । तत्राप्युपादानबुद्धिविषयत्वसत्त्वेपि अहिकंटकादौ हेये तदभावादसिद्धिः । तत्र हानविषयत्वसत्त्वेपि तस्योपेक्षणीयतृणादावभावादसिद्धिरित्येवं प्रत्येकं हानादिविषयत्वस्य हेतुत्वे भागासिद्धिरित्यर्थः । ननु हानाद्यन्यतमविषयत्वस्य विवक्षितत्वान्न लक्षणस्य परस्पराव्याप्तिः नाप्यनुमाने भागासिद्धिरिति चेन्न । त(स्या)थाप्यानंदरूपतया सर्वोपादेये ब्रह्मणि व्यभिचारापरिहारादिति द्रष्टव्यमिति

हानादेर्गगनादावभावात् । अभिलापस्य चात्मन्यपि भावात् । न द्वितीयः । ज्ञाततायाम मघटादौ परस्याप्यतीतादावभावात् । न तृतीयचतुर्थौ । अतीतादावसिद्धेः । तदपि स्वसत्ताकाले फलव्याप्यमिति चेन्न । नित्यातींद्रियेऽसिद्धेः ।

संप्रदायः ॥ आत्मन्यपीति ॥ अयमात्मेत्याद्यभिलपनरूपव्यवहाराख्यफलव्याप्यत्वस्यात्मन्यपि भावाद्व्यभिचार इति भावः ॥ अतीतादाविति ॥ असति धर्मिणि धर्मजननायोगादिति भावः । तथा चोभयरीत्या भागासिद्धिरिति भावः ॥ अतीतादाविति ॥ तत्रातीतेऽनागते च सन्निकर्षासंभवात्तत्रांतःकरणवृत्तेश्चक्षुरादिद्वारा बहिर्निस्सरणाभावेन तत्प्रतिफलितचैतन्य तदभिव्यक्ताधिष्ठानचैतन्यरूपफलाभावेन तद्व्याप्यत्वाभावादिति भावः । तदपि अतीतादिकमपि ॥ नित्यातींद्रिय इति ॥ धर्मादीनां

नित्यातींद्रियत्वेन चक्षुराद्यसन्निकृष्टतयाद्वाराभावेनांतःकरणवृत्तेर्नबहिर्निस्सरणं किंनामांतरेवतदाकारवृत्तिर्भवतीतितन्मतं । एवंचांतःकरणवृत्तेश्चक्षुरादिद्वाराबहिर्निस्सरणाभावेनतत्प्रतिफलितचैतन्यतदभिव्यक्ताधिष्ठानचैतन्यरूपफलयोरसंभवेनतद्व्याप्यत्वाभावाद्भागासिद्धिरित्यर्थः ॥ योगिनंप्रतीति ॥ धर्मादेर्योगिप्रत्यक्षत्वाद्योग्यंतःकरणवृत्तेर्बहिर्निस्सरणसंभवेनतत्प्रतिफलितचैतन्यादिरूपफलव्याप्यत्वंसंभवतीतिनासिद्धिरितिभावः ॥ चोदनैकेति ॥ यथोक्तंजैमिनिना" चोदनागम्योर्थोधर्म "इतिचोदनाविधिवाक्यं । तथाचशास्त्रैकसमधिगम्यत्वेनयोगिप्रत्यक्षविषयत्वमपि धर्मादीनांनास्तीत्युक्तत्वेनत्वयाधर्मादीनांयोगि

तदपियोगिनंप्रतिफलव्याप्यमितिचेन्न । चित्सुखेननचयोगिप्रत्यक्षगम्यतयाऽपरोक्षत्वंधर्मादीनां चोदनैकप्रमाण(गम्य)योग्यत्वादित्युक्तत्वेनतद्विरोधात् । तुच्छमपितुच्छत्वेनयोगिनंप्रत्यपरोक्षमिति सुवचत्वाच्च।पक्षैकदेशेसाक्षिवेद्याविद्यांतःकरणतद्धर्मसुखादौ दृष्टांतेशुक्तिरूप्येचफलव्याप्यत्वाभावाच्च।

नंप्रतिफलव्याप्यत्वांगीकारेतद्विरोधादित्यर्थः । नित्यातींद्रियस्यापियोगिप्रत्यक्षविषयत्वेनापरोक्षत्वेऽतिप्रसंगमाह ॥ तुच्छमपीति ॥ तथाचासच्चेदपरोक्षतयानप्रतीयेतेत्यापादनानुपपत्तिरितिभावः ॥ पक्षैकदेशइति ॥ चक्षुरादिद्वाराबहिर्निस्सृतांतःकरणवृत्तिप्रतिबिंबितचैतन्यादिरूपफलव्याप्यत्वंबाह्यपदार्थएवांगीकृतं नसाक्षिवेद्याविद्याद्यांतरपदार्थे अतोभागासिद्धिः । तथाशुक्तिरूप्यादेःप्रातिभासिकत्वेनसाक्षिवेद्यांतरपदार्थत्वांगीकारान्नोक्तवृत्तिप्रतिबिंबितचैतन्यादिरूपफलव्याप्यत्वंत्वयांगीकृत

मितिदृष्टांतेसाधनवैकल्यंचेत्यर्थः ॥ सामान्यस्यापीति ॥ दृश्यत्वरूपसामान्यस्यापि साधारणस्यापीत्यर्थः । ननुब्रह्मणिवृत्ति व्याप्यत्वसत्त्वेपिनसाधारणंदृश्यत्वमस्तीत्यतउक्तं ॥ वृत्तिव्याप्यत्वरूपविशेषस्येति ॥ ऋग्वेदिनिब्राह्मणत्ववद्विशेषसद्भावे सामान्यस्यापिसत्त्वाद्ब्रह्मणिव्यभिचारइतिभावः । कदाचिदितिविशेषणं भागासिद्धिवारणायेत्याशयेनोपपादयति ॥ अतीता देरपीत्यादिना ॥ कदाचि त्स्वसत्ताकाले ॥ स्वाकारेति ॥ स्वविषयकेत्यर्थः ॥ अविद्यादेरिति ॥ आंतरपदार्थस्येत्यर्थः ॥

नापिसाधारणमितितृतीयः(पक्षः) । ब्रह्मणिवृत्तिव्याप्यत्वरूपविशेषस्यसत्वेन(दृश्य त्वरूप)सामान्यस्यापिसत्वात् । नन्वस्तुतर्हिचतुर्थः । अतीतादेरपिकदाचित्स्वाकार वृत्तिप्रतिफलितचिद्विषयत्वात् । अविद्यादेरपिसाक्षिविषयत्वात्।नित्यातींद्रियस्यापि ज्ञातत्वेनाज्ञातत्वेनवासाक्षिविषयत्वात् । दृग्रू(पस्या)पात्मनस्तुतदविषयत्वादितिचेन्न।

साक्षीति ॥ साक्षिरूपचिदित्यर्थः । नित्यातींद्रियेभागासिद्धिवारणायकथंचिदित्युक्तमित्याशयेनोपपादयति ॥ ज्ञातत्वेने त्यादिना ॥ धर्मादिकंजानामीतिज्ञानावच्छेदकत्वेनवा नजानामीत्यज्ञानावच्छेदकत्वेनवा कथंचित्साक्षिरूपचिद्विषयत्वादित्य र्थः । अस्यहेतोर्नब्रह्मणिव्यभिचारइत्याह ॥ दृग्रूपस्येति ॥ चिद्रूपस्येत्यर्थः ॥ तदविषयत्वादिति ॥ ज्ञानरूपत्वेनधात्वर्थ क्रियारूपस्यब्रह्मणःकर्मत्वासंभवेनचिदविषयत्वादित्यर्थः । नित्यातींद्रियाणांयथाज्ञानाद्यवच्छेदकतयाकथंचित्साक्षिरूपचिद्वि

षयत्वमस्ति (एवं)तथाब्रह्मणोपिज्ञानाद्यवच्छेदकतयाकथंचिच्चिद्विषयत्वमस्तीत्याह ॥ नित्यातींद्रियमिति ॥ प्रकारांतरेणापि चितोब्रह्मणश्चिद्विषयत्वमुपपादयति ॥ तद्व्यवहारेति ॥ चित्‌चिद्विषयिणी । तद्विषयकव्यवहारजनकत्वात् । यद्यद्विषयकव्यवहारजनकंतत्तद्विषयं यथाघटव्यवहारजनकंघटज्ञानंघटविषयकमित्यनुमानंद्रष्टव्यं । ननुज्ञानस्यतद्विषयकव्यवहारजनकत्वेतद्विषयकत्वरूपंसाध्यंनप्रयोजकं किंतुतदन्याविषयकत्वमेवेत्यतउक्तं ॥ तद्व्यवहारेति ॥ तदन्याविषयकत्वस्यघटव्यवहारजनकेघटपटावितिसमूहालंबनज्ञानेव्यभिचारेणगौरवेणचतद्विषयकव्यवहारजनकत्वेऽप्रयोजकत्वादितिभावः । ननुचितोज्ञान

**नित्यातींद्रियंपूर्वंनज्ञातंइदानींशब्देनज्ञातमितिवत्शुद्धंब्रह्मपूर्वंनज्ञातमिदानींवेदांतेनज्ञातमित्यनुभवेनब्रह्मणिव्यभिचारात् । तद्व्यवहारजननेतद्विषयत्वस्यतंत्रत्वेनस्वव्यवहारहेतोश्चितोप्यभिधानस्याभिधेयत्ववच्चिद्विषयत्वाच्च ।कल्पितभेदेनबिंबप्रतिबिंबयोर्लिंगलिंगिभाववज्जीवब्रह्मणोर्ज्ञातृज्ञेयभाववच्चात्मनोपिस्वाकारवृत्तिप्रतिफलितचिद्विषयत्वसंभवाच्च ।**

रूपत्वेनक्रियात्वात्कथंतस्याःस्वविषयकत्वेनकर्मत्वं क्रियायाःकर्मत्वादर्शनादित्यतउक्तं ॥ अभिधानस्येति ॥ अभिधायाइत्यर्थः । अभिधेयत्वस्यकेवलान्वयित्वादभिधारूपक्रियायाअपिअभिधाविषयत्वेनकर्मत्वमस्तितद्वदित्यर्थः । नन्वथापिचितश्चिद्विषयत्वंनोपपन्नं भेदाभावादित्याशंक्यकल्पितभेदसद्भावाद्युक्तमित्येतदृष्टांताभ्यामुपपादयति ॥ कल्पितभेदेनेति ॥ बिंबेति ॥ त्वन्मतेबिंबप्रतिबिंबयोरभेदेपिकल्पितभेदमादाययथाप्रतिबिंबस्यबिंबानुमापकत्वं यथावा जीवब्रह्मणोरभेदेपिकल्पितभेदमादा

यज्ञातृज्ञेयभावः तथाचितएकत्वेपिकल्पितभेदमादायस्वविषयकांतःकरणवृत्तिप्रतिफलितचिद्विषयत्वसंभवादित्यर्थः ॥ अन्यथेति ॥ आत्मनःस्वाकारवृत्तिप्रतिफलितचिद्विषयत्वाभावे । तया स्वाकारवृत्तिप्रतिफलितचिता । यथाघटादेःस्वाकारांतःकरणवृत्तिप्रतिफलितचिद्विषयत्वेनघटाज्ञाननिवृत्तिर्दृष्टा एवमात्मनोपितदज्ञाननिवृत्त्यर्थंस्वाकारवृत्तिप्रतिफलिताचिद्विषयत्वेवाच्ये व्यभिचारएवेतिभावः । ननुतदाकारवृत्त्यैवतदज्ञाननिवृत्ति(रित्या)रास्तां तथाचाचिद्विषयत्वाभावान्नव्यभिचारइत्यतआह ॥ तदाकारेति ॥ तर्ह्यनयैवरीत्याघटाद्याकारवृत्त्यैवघटाज्ञाननिवृत्त्युपपत्तौघटादेरपिचिद्विषयत्वाभावापत्त्याऽसिद्धिःस्यादितिभावः । ननुघटाकारवृत्तौचित्प्रतिफलनंविनानाऽज्ञाननिवृत्तिः घटाद्याकारवृत्तिमात्रस्याज्ञानानिवर्तकत्वात् । यथाहुः "तृणादे

अन्यथातयातदज्ञाननिवृत्त्ययोगात् । तदाकारवृत्त्यैवचतन्निवृत्तौघटादावपितथात्वापातेनासिद्धेः ।

र्भासिकाप्येषासूर्यदीप्तिस्तृणंदहेत् । सूर्यकांतमुपारुह्यतन्न्यायंचितियोजये"दिति । अतोंतःकरणवृत्तिप्रतिफलितचिद्विषयत्वं घटादेर्वक्तव्यमितिचेत्तर्ह्यात्मन्यपिवृत्तिमात्रस्याज्ञानानिवर्तकत्वादात्मनोप्यात्माकारवृत्तिप्रतिफलितचिद्विषयत्वंवाच्यमितिसमं । नन्वात्मनोंतःकरणवृत्तिप्रतिफलिताचिद्विषयत्वाभावेप्यात्मनःस्फुरणरूपत्वात्स्फुरणरूपात्माकारवृत्त्यातदज्ञाननिवृत्तिर्युक्तेतिचेत्तर्हिंघटस्यापिस्फुरणरूपत्वात्स्फुरणरूपघटाकारवृत्त्यैवाज्ञाननिवृत्त्युपपत्तेरस्याप्यंतःकरणवृत्तिप्रतिफलितचिद्विषयत्वंनस्यादितिसमं । ननुघटस्यस्फुरणरूपत्वेघटाज्ञानमेवनस्यादितिचेत् तर्हिंब्रह्मणोपिस्फुरणरूपत्वेतदज्ञानमपिनस्यादितिसमं । नन्वज्ञानावि

रोधिस्फुरणरूपंब्रह्मेतिचेत्तत्राह । अज्ञानेतीतिसंप्रदायः । किंचघटादौस्वाकारेंद्रियजन्यवृत्तिविषयत्वमात्रंविहायतत्प्रतिबिंबित चैतन्यरूपज्ञानविषयत्वंकस्मात्कल्प्यते किंघटादिव्यवहारार्थं उतानुभवबलात् अथश्रुतिबलात् यद्वाघटादौविषयेस्वतोपरोक्षा भावादपरोक्षचित्संबंधेनैवापरोक्ष्य(त्व)स्यवक्तव्यत्वात् घटादिविषयस्यापरोक्ष्य(त्व)सिद्ध्यर्थं । नाद्यइत्याह ॥ अस्फुरणरूपे ष्वित्यादिना ॥ इंद्रियजन्यांतःकरणवृत्तावेवचित्प्रतिफलनं नत्वनुमित्यादिरूपांतःकरणवृत्तावितिहिपरसिद्धांतः । एवंचयथा नुमित्यादिविषयेष्वतींद्रियेषुधर्मादिषुवृत्तिप्रतिफलितचिद्विषयत्वाभावेपिव्यवहारः तथैंद्रियकेष्वपिघटादिषुवृत्तिप्रतिफलितचि

अज्ञानाविरोधिस्फुरणरूपत्वस्यचात्मनीवघटादावपिसुवचत्वात् । अस्फुर
णरूपेष्वतींद्रियेष्विवैंद्रियकेष्वपिवृत्तिविषयत्वमात्रेणव्यवहारादिसंभवेतत्प्र
तिफलितचैतन्यविषयत्वस्यतदभिव्यक्तचैतन्यविषयत्वस्यवाकल्पनायोगाच्च।

द्विषयत्वाभावेपिस्वाकारेंद्रियजन्यवृत्तिविषयत्वमात्राद्व्यवहारोस्तु । एवंचव्यवहारान्यथानुपपत्त्यानवृत्तिप्रतिफलितचिद्विषय त्वंकल्प्यमित्यर्थः । नन्वतींद्रियार्थानांस्फुरणरूपत्वाद्वृत्तिप्रतिफलितचिद्विषयत्वाभावेपिव्यवहारोभविष्यतीतिनदृष्टांतइत्यतउ क्तं ॥ अस्फुरणरूपेष्विति ॥ नद्वितीयइत्याह ॥ घटादाविति ॥ चैतन्यस्याज्ञानस्फोरकत्वेनाज्ञानाविरोधितयाऽज्ञानानि वर्तकत्वाद्वृत्तेरेवाज्ञाननिवर्तकत्वमंगीकृत्यतयाऽज्ञानेनिवृत्तेतदभिव्यक्तचैतन्यरूपज्ञानेनैवघटःप्रकाशतइत्युच्यते तर्हिवयमपिव दामोलोकेययाप्रभयांधकारोनिवर्ततेतयैवप्रभयाघटःप्रकाशतइत्यनुभवसिद्धं तदपिनस्यात् । तत्रापिप्रभयांधकारेनिवृत्तेतदभि

व्यक्तंपुनःकिंचित्प्रभांतरंकल्पयित्वातेनैवघटादिकंप्रकाशतइत्यपिकल्पनीयंस्यादिति। अस्त्वितिचेत्तत्राह ॥ घटादाविति ॥ अन्यथेति ॥ अज्ञाननिवृत्तिरूपकार्यस्यान्यथोपपन्नत्वेपि अज्ञाननिवृत्तिरूपकार्यजनकंघटाद्याकारापरोक्षांतःकरणवृत्त्यतिरिक्तं तत्प्रतिफलितचैतन्यरूपंतदभिव्यक्तचैतन्यरूपंवाज्ञानमननुभूतंकल्प्यतइत्यर्थः। ज्ञानप्रतिफलितंतद्व्यंग्यंवाज्ञानांतरंकल्प्येतइति यावत्। इच्छाद्यंतःकरणवृत्तीत्येवपाठः। अंतःकरणस्येच्छादिरूपेणपरिणतत्वादिच्छारूपायाअंतःकरणवृत्तिस्तत्प्रतिफलितंतद्व्यं

घटादावंधकारानिवर्तकप्रभायाइवाज्ञानाविरोधिज्ञानस्याननुभवाच्च। अन्यथाइच्छा(द्याकारां)
द्यंतःकरणवृत्तिप्रतिफलितंतद्व्यंग्यंवाइच्छादिकंपरोक्षवृत्तिप्रतिफलितंतद्व्यंग्यंवापरोक्षज्ञानंतमो
निवर्तकप्रभाप्रतिफलितंतद्व्यंग्यंवाप्रभांतरंचकल्प्यंस्यात्। "तमेवभांत"मि(त्यादि)तिश्रुत्यर्थ
स्तुप्रतिकर्मव्यवस्थाभंगेवक्ष्यते। चैतन्याविषयस्याप्यापरोक्ष्यंचचैतन्याभिव्यंजकत्वार्थमावश्य

ग्यंवाकिंचिदिच्छादिकमपिकल्पनीयंस्यादित्याद्यतिप्रसंगइत्यर्थः। प्रभाप्रतिफलितंप्रभायांप्रतिफलितं। तमेवभांतमितिश्रुतौतं भांतंप्रकाशमानंवृत्तिप्रतिफलितचैतन्यरूपात्मानं अनुघटादिकंप्रकाशतइतिश्रुतिबलाद्वृत्तिप्रतिफलितचिद्विषयत्वंघटादीनामंगी कार्यमितितृतीयंनिराचष्टे ॥ तमेवेति ॥ विषयस्यापरोक्ष्यान्यथानुपपत्त्याचैतन्यरूपंज्ञानमंगीकार्यमितिचतुर्थंपराचष्टे ॥ चैत

न्येति ॥ विषयस्यापरोक्ष्यान्यथानुपपत्त्याचैतन्यविषयत्वंनांगीकार्यं चैतन्यविषयत्वाभावेपिविषयेआपरोक्ष्यंतुवृत्तिगतोयःसाक्षात्कारत्वरूपोविशेषस्तेनैवोपपन्नं । अयंचविशेषस्तवाप्यावश्यकइत्युक्तं चैतन्येति । वृत्त्याचैतन्यव्यक्त्यंगीकारेणचैतन्याभिव्यंजकत्वार्थंवृत्तिगतविशेषस्यावश्यकत्वादित्यर्थः । अन्यथापरोक्षवृत्त्यापिचैतन्याभिव्यंजनापत्तेरितिभावः । नन्वपरोक्षवृत्तिनिष्ठं(परोक्षवृत्त्यनिष्ठं)साक्षात्कारत्वंघटादिवृत्तौकुतइत्यतउक्तं ॥ इंद्रियजन्यत्वेति ॥ अंतःकरणवृत्तेश्चक्षुरादिद्वाराबहिर्निस्सृतत्वादितिभावः । अपरोक्षवृत्तिगतापरोक्षत्वविशेषेणविषयेआपरोक्ष्यंयुक्तं । परोक्षवृत्तिगतेनज्ञानत्वरूपविशेषेणविषयस्यज्ञात

केनेंद्रियजन्यत्वप्रयुक्तेनवृत्तिगतेनसाक्षात्कारत्वरूपविशेषेणैवोपपन्नं । इच्छादिवृत्त्यनिष्ठेनपरोक्षवृत्तिगतेनज्ञानत्वरूपविशेषेणविषयस्यज्ञातत्ववत्स्मृत्याद्यनिष्ठेनानुभवादिगतेनविशेषेणतद्विषयस्यानुभूतत्वानुमितत्वादिवच्च ।

त्ववदित्याह ॥ परोक्षवृत्तीति ॥ विषयेज्ञातत्वंपरोक्षवृत्तिगतज्ञानत्वविशेषाधीनमित्युक्तेइच्छादिवृत्तावपिज्ञानत्वरूपविशेषप्रसक्तौसत्यांवृत्तावपिसंकोचःकार्यइत्यतउक्तं ॥ इच्छादीति ॥ इच्छादिरूपायांतःकरणवृत्तिः तदनिष्ठेनेत्यर्थः । ज्ञातत्वेपिपुनरवांतरभेदोस्त्येवेत्याह ॥ अनुभवादीति ॥ अनुभवगतोविशेषोनज्ञानमात्रनिष्ठइतिज्ञानेपिसंकोचःकार्यइत्याशयेनस्मृत्याद्यनिष्ठेनेत्युक्तं । अनुभूतत्वेपिपुनरवांतरभेदोस्तीत्युक्तं अनुमितत्वेति । साक्षात्कारप्रमाऽवृत्तेनानुमितिगतविशेषेण तद्विषयस्यानु

मितत्ववदित्यर्थः ॥ अन्यथेति ॥ अंतःकरणवृत्तावपरोक्षत्वमनंगीकृत्यतस्याःपरोक्षत्वमेवांगीकृत्यतत्प्रतिफलितचैतन्यएवाप
रोक्षत्वंनवृत्तावित्यंगीकारेपरोक्षत्वापरोक्षत्वयोर्ज्ञानत्वव्याप्यत्वंनस्यात् । चैतन्यनिष्ठापरोक्षत्वस्यचैतन्यनिष्ठज्ञानत्वव्याप्यत्वेपि
वृत्तिनिष्ठापरोक्षत्वस्यज्ञानत्वव्याप्यत्वाभावात् । वृत्तौपरोक्षत्वसद्भावेपितत्रज्ञानत्वाभावात् । भावव्युत्पत्त्याज्ञप्तिरूपज्ञानत्वंचै
तन्यस्यैव वृत्तेस्तज्ज्ञप्तिरूपचैतन्यव्यंजकतयाज्ञानकरणत्वमेवनज्ञानत्वमित्यंगीकारात् । तथावृत्तिगतपरोक्षत्वस्यवृत्तिव्याप्यत्व
मेवस्यात् । तथाचकरणभावव्युत्पत्तिभ्यांवृत्तिचैतन्ययोरुभयोरपिज्ञानत्वात्तन्मध्येयद्भावव्युत्पत्त्याज्ञप्तिरूपमेकंज्ञानंतन्निष्ठंय

अन्यथापरोक्षत्वापरोक्षत्वेएकज्ञानत्वव्याप्येनस्यातां । (नपंचमः ।) आत्मनोपिस्वप्रकाशत्वा
द्वितीयत्वादिविशिष्टव्यवहारेतदपेक्षानियमात् । नन्वात्मनिविशिष्टव्यवहारेविशेषणो
पनायकमानापेक्षानियमेपिस्वरूपमात्रव्यवहारेतदनपेक्षेतिचेन्न । घटादावपितथात्वसिद्धेः ।

ज्ज्ञानत्वंतद्व्याप्यत्वंसर्वजनसिद्धंनस्यात् । अतःसर्वजनसिद्धैकज्ञानत्वव्याप्यत्वनिर्वाहायवृत्तावपिज्ञानत्वेंगीकार्येइंद्रियत्वेनेंद्रिय
जन्यतयाचापरोक्षत्वेचांगीकार्येऽपरोक्षज्ञानरूपवृत्तिविषयत्वमात्रेणविषयेआपरोक्ष्योपपत्तौतदर्थंवृत्तिप्रतिबिंबितचैतन्यस्यतद
भिव्यक्तचैतन्यस्यवाकल्पनाऽयोगादितिचिद्विषयत्वरूपहेतोःस्वरूपासिद्धिरितिभावः ॥ तदपेक्षेति ॥ स्वातिरेकिसंविदपेक्षे
तिभावः । अतिव्याप्तिपरिहारमाशंकते ॥ नन्विति ॥ तथेति ॥ घटत्वादिविशिष्टघटव्यवहारएवस्वातिरिक्तंयद्विशेषोपनाय

कंमानंतदपेक्षा नतुघटस्वरूपमात्रव्यवहारइत्यपिवक्तुंशक्यत्वादसिद्धिरितिभावः । असिद्धिपरिहारंशंकते ॥ नन्विति ॥ निर्विकल्पकाभावाभिप्रायेणेदं । तथाचविशिष्टव्यवहारस्यैवसत्त्वात्स्वातिरिक्तसंविदपेक्षानियतिस्तत्रास्तीतिनासिद्धिरित्यर्थः । नन्वात्मन्यपिघटादाविवस्वरूपमात्रव्यवहाराभावेनविशिष्टव्यवहारस्यैवसत्त्वात्तत्रचविशेषणोपनायकप्रमाणापेक्षानियतिसद्भावेन हेतोरात्मनिव्यभिचारइत्यतआह ॥ आत्मनित्विति ॥ परामर्शेनपरामर्शबलेन तस्यसौषुप्तिकव्यवहारस्य विशिष्टत्वेनकाला

**ननुघटादौस्वरूपमात्रव्यवहारएवनास्तिआत्मनितुसुषुप्तावस्तीतिचेन्न । एतावंतंकालंसुखमहमस्वाप्समितिपरामर्शेनतस्याविशिष्टत्वेनैवसिद्धेः । नन्वात्मनिविशिष्टव्यवहारेतदपेक्षायामपिनविशेष्यांशेतदपेक्षा । स्वप्रकाशत्वात् । घटादौतदंशेपीतिचेन्न । नियतिपदवैयर्थ्यात् ।**

दिविशिष्टत्वेन तथाचस्वरूपमात्रव्यवहारस्यैवाभावादात्मनिव्यभिचारएवेतिभावः । ननुस्वव्यवहारेस्वांशावच्छेदेनापिस्वातिरिक्तसंविदपेक्षानियतिरितिहेतुर्विवक्षितः । सुषुप्तिकालीनेआत्मगोचरकालादिविशिष्टव्यवहारेतुकालादिविशेषणांशएवतदपेक्षानत्वात्मांशेपि । तस्यस्वप्रकाशत्वादतोनात्मनिव्यभिचारइत्याशंकते ॥ नन्वात्मनीति ॥ असिद्धिंपरिहरति ॥ घटादाविति ॥ घटादेरस्वप्रकाशत्वात्स्वांशावच्छेदेनापिस्वातिरिक्तसंविदपेक्षानियतिरस्तीतिनासिद्धिरितिभावः ॥ नियतिपदेति ॥

अद्वितीयत्वादिविशिष्टब्रह्मव्यवहारेस्वातिरिक्तसंविदपेक्षासद्भावेनब्रह्मणिदृश्यत्वप्राप्तौतद्व्यावृत्त्यर्थंहिनियतिपदंदत्तं । तथाच स्वरूपमात्रव्यवहारेतदपेक्षायाअभावेननस्वातिरेकिसंविदपेक्षानियतिरित्येवंब्रह्मणिदृश्यत्वाभावोवक्तव्यः । तथाचनियतिपदनिवारणीयब्रह्मण्यतिव्याप्तिरूपातिप्रसंगनिवारणस्यस्वांशावच्छेदेनापिस्वातिरेकिसंविदपेक्षावत्त्वंदृश्यत्वमित्यस्याविवक्षयैवोपपत्तौ नियतिपदंव्यर्थमित्यर्थः । ननुतर्हिस्वांशावच्छेदेनापिस्वातिरिक्तसंविदपेक्षावत्त्वमेवदृश्यत्वमित्येवहेतुर्विवक्षितइतिनियतिपदंत्यज्यतइतिचेन्न शुद्धएवव्यभिचारादित्याह ॥ आसंसारमिति ॥ अज्ञानावृतेशुद्धेशुद्धंब्रह्मेतिव्यवहारस्यापलापायोगेनशुद्धस्व

आसंसारमज्ञानावृतस्यशुद्धस्यस्वव्यवहारेअनधिगता
र्थबोधकवेदांतजन्याज्ञाननिवर्तकवृत्त्यपेक्षानियमाच्च ।

रूपव्यवहारेशुद्धरूपस्वांशावच्छेदेनापिस्वातिरेकिवेदांतजन्याज्ञाननिवर्तकवृत्तिरूपसंविदपेक्षास्त्येवेतिव्यभिचारः नचस्वांशस्य शुद्धस्यस्वप्रकाशत्वेनस्वाख्यसंविदैवव्यवहारोपपत्तौतत्राज्ञानाभावान्नस्वांशावच्छेदेनाज्ञाननिवर्तकस्वातिरेकिवेदांतजन्यवृत्तिरूपसंविदपेक्षानियमइतिवाच्यं । शुद्धस्यस्वप्रकाशत्वेनस्वतःस्फुरणांगीकारेतस्याज्ञानावृतत्वंनस्यात् । तदिदमाह ॥ अज्ञानावृतस्येति ॥ नन्वात्माज्ञानावरणकालेस्वातिरिक्तसंविदैवव्यवह्रियतां तदनावरणकालेस्वातिरेकिसंविदंविनैवव्यवह्रियतामित्यत उक्तं ॥ आसंसारमिति ॥ आसंसारमज्ञानावृतत्वेनतदनावरणकालएवनास्तीत्यर्थः । नन्वासंसारमज्ञानावृतोप्यात्माकदाचि

त्स्वयमेवावरणमज्ञानंनिवर्तयिष्यति अनंतरमुक्तसंविदंविनैवव्यवह्रियतामित्यतःशुद्धस्येत्युक्तं । शुद्धस्यकेवलस्याज्ञानस्फोरकत्वे नाज्ञानानिवर्तकत्वान्नकदाचिदपिस्वाज्ञाननिवर्तकत्वं किंनामवेदांतजन्यचरमवृत्तेरेव अन्यथावेदांतजन्यचरमवृत्तेवैयर्थ्यापत्तेः। तस्याअज्ञाननिवर्तकत्वेनैवसार्थक्यादित्याशयेनोक्तं । वेदांतजन्याज्ञाननिवर्तकवृत्तीति । किंचयद्यात्मव्यवहारःस्वतःस्फुरणादे वभवतिनतत्रस्वांशावच्छेदेनस्वातिरेकिसंविदपेक्षेत्युच्यते तर्हिवेदांतानांप्रकाशमानार्थप्रकाशकत्वेनानधिगतार्थावगतिसाधन (त्वा)ताऽभावेनप्रमाणलक्षणाभावादप्रामाण्यंस्यादित्याशयेनोक्तं ॥ अनधिगतार्थबोधकेति ॥ तथाचाज्ञानावृतेशुद्धस्वरूपे स्वांशावच्छेदेनापिस्वातिरेकिवेदांतजन्यवृत्तिरूपसंविदपेक्षासद्भावेनमिथ्यात्वाभावात्नियतिपदत्यागेपिव्यभिचारइतिभावः । न

वृत्त्यन्यसंविदपेक्षायाश्चतत्रनित्यातींद्रियेष्वघटादावप्यभावादयुक्तत्वाच ।

नुस्वांशावच्छेदेनस्वातिरेकिवृत्त्यन्यचैतन्यरूपसंविदपेक्षावत्त्वमितिसंविदिवृत्त्यन्यत्वंविशेष्यते । शुद्धेस्वांशावच्छेदेनव्यवहा रेस्वातिरेकिवृत्त्यपेक्षायाएवसत्त्वेनोक्तहेतोर्नव्यभिचारः । घटादौतुवृत्त्यन्यचैतन्यरूपसंविदपेक्षायाएवसत्त्वेननासिद्धिरित्याशं क्यनिराकरोति ॥ वृत्त्यन्येति ॥ अभावादिति ॥ वृत्त्यन्यायासंवित्वृत्तिप्रतिबिंबितचैतन्यंतदभिव्यक्तचैतन्यंवातदुभयंचा प्रामाणिकमित्युक्तमित्यर्थः । नन्वात्मव्यवहारेनवेदांतजन्यसंविदंतरापेक्षा किंत्वात्माज्ञाननिवृत्तिमात्रे । आत्मव्यवहारस्तुस्व तःस्फुरणादेव अतोनात्मनिव्यभिचारः । घटादौत्वस्फुरणरूपतयास्वव्यवहारेस्वातिरेकिसंविदपेक्षास्तीतिनासिद्धिरित्याशंक्य

निराकरोति ॥ नचेति ॥ नहीत्यर्थः । तथाचासिद्धिरेवेतिभावः । ननूक्तमस्फुरणरूपतयाघटादौस्वव्यवहारेस्वातिरेकिसंविद पेक्षेति । सत्यमुक्तंदुरुक्तंतत् । तथात्वेघटादिवद्ब्रह्मणोप्यस्फुरणरूपत्वमेवास्तुस्फुरणरूपत्वेतदज्ञानायोगात् । अज्ञानाविरोधिस्फुरणरूपत्वस्यचात्मनीवघटादावपिसुवचत्वादित्युक्तत्वादितिभावः ॥ एतेनेति ॥ उक्तप्रबंधेनब्रह्मणोज्ञानविषयत्वस्योपपादनेनेत्यर्थः ॥ स्वावच्छिन्नेति ॥ स्वशब्दःसमभिव्याहृतपरः । स्वविषयकेत्यर्थः । तथाचस्वव्यवहारेस्वविषयकसंवित्सापेक्षत्वं दृश्यत्वं । वर्ततेचेदंघटादौ नास्तिचब्रह्मणि क्रियाकर्मभावविरोधेनस्वव्यवहारहेतोःस्वाख्यसंविदोब्रह्मविषयकत्वाभावात् । स

नचघटादावपिवृत्त्याऽज्ञानेनिवृत्तेव्यवहारार्थंसंविदंतरापेक्षाअनुभूयते।एतेनस्वव्यवहारेस्वातिरिक्त स्वावच्छिन्नसंवित्सापेक्षत्वंदृश्यत्वमितिनिरस्तं। (नषष्ठः।) घटादौविशेष्यवत्फलव्याप्यत्वाभावरूप

कलसामर्थ्यविधुरस्यकर्मत्वापरपर्यायवेदांतजन्यवृत्तिविषयत्वस्याप्यभावाच्च । अतोनतत्रव्यभिचारइत्येतदपिनिरस्तं । ब्रह्मणोपिवेदांतजन्यवृत्तिव्याप्यत्वस्योपपादितत्वात् । क्रियाकर्मभावाविरोधस्यचाभिधानस्याभिधेयत्ववदुपपन्नत्वेनस्वविषयकस्वाख्यसंवित्सापेक्षत्वाच्चेतिसांप्रदायिकोर्थः । फलाव्याप्यत्वेसत्यपरोक्षव्यवहारयोग्यत्वाभावरूपास्वप्रकाशत्वरूपदृश्यत्वस्यभागासिद्धिमुपपादयति ॥ घटादाविति ॥ विशेष्यवत्अपरोक्षव्यवहारयोग्यत्ववत् ॥ उक्तन्यायेनेति ॥ वृत्तिप्रतिबिंबितचैतन्यरूपस्यतदभिव्यक्ताधिष्ठानचैतन्यरूपस्यवाफलस्योक्तन्यायेनाऽप्रामाणिकतयापक्षैकदेशेघटादौविशेषणविशेष्ययोरुभयोरपिसत्त्वे

नविशिष्टाभावरूपास्वप्रकाशत्वाभावाद्भागासिद्धिरित्यर्थः । प्रातिभासिकाविद्याशुक्तिरूप्यादिदृष्टांतेसाधनवैकल्यमुपपादयति ॥ अविद्यादाविति ॥ विशेषणवदिति ॥ अंतःकरणवृत्तिप्रतिबिंबितचैतन्यस्यैवात्रफलशब्देनाभिप्रेततयाप्रातिभासिकस्यसर्वस्याप्यविद्याशुक्तिरूप्यादेरांतरपदार्थतयाबाह्यत्वाभावेनांतःकरणवृत्तेर्नबहिर्निस्सरणं ततोत्रांतःकरणवृत्तिप्रतिबिंबितचैतन्यादिरूपफलव्याप्यत्वंनतत्रास्ति किंतुअविद्यावृत्तिप्रतिबिंबितचैतन्यरूपसाक्षिविषयत्वमेव । तथाचतत्रविशेषणवदपरोक्षव्यवहारयोग्यत्वरूपंविशेष्यंचास्ति । अतोनतत्रविशिष्टाभावरूपास्वप्रकाशत्वमस्तीतिदृष्टांतेसाधनवैकल्यमित्यर्थः । उत्तरग्रंथोपक्षे

**विशेषणस्याप्युक्तन्यायेनसत्त्वेनाविद्यादौशुक्तिरूप्यादौचविशेषणवद्विशेष्यस्यापिसत्वेनविशिष्टरूपस्वप्रकाशत्वव्यतिरेकरूपहेतोःपक्षैकदेशेदृष्टांतेचाभावात् । अत्रोक्तंचित्सुखेन । “ शुक्तिरूप्या**

पार्थविशेष्यस्यापिसत्त्वेनेत्युक्तं अत्रोक्तमिति । साधनवैकल्यापादनायविशेष्यस्यापिसत्त्वेनेतियदुक्तंतदुपरिचित्सुखेनसमाधानमत्रोक्तमस्तीत्यर्थः । तदेवाह ॥ शुक्तिरूप्यादाविति ॥ शुक्तिरूप्यादेर्व्यवहारकालएवबाधितत्वात्तत्रापरोक्षव्यवहारयोग्यत्वंव्यवहारदशायामपिनास्तीत्यर्थः । तथाचविशेष्याभावप्रयुक्तविशिष्टाभावस्यशुक्तिरूप्यादौसत्त्वेनास्वप्रकाशत्वसद्भावान्नदृष्टांतःसाध्यविकलइतिभावः । ननुशुक्तिरूप्यादेरापरोक्ष्याभावेशुक्तिरूप्यंसाक्षात्करोमीत्येवंशुक्तिरूप्यादौआपरोक्ष्यावगाह्यनुव्यव

सायरूपव्यवहारविरोधइत्यतआह ॥ अपरोक्षव्यवहारायोग्येपीति ॥ अविद्यावृत्तिप्रतिबिंबितचैतन्यरूपसाक्षिविषयत्वेनां तरत्वादितिभावः ॥ साक्षीति ॥ साक्षिगतंयदापरोक्ष्यंतदध्यासादित्यर्थः । तत्रदृष्टांतःइदमिति । तस्मिन् शुक्तिरूप्येोपरवत्त्वा भावादिदमितिव्यवहारायोग्यत्वंतस्येतिभावः ॥ अधिष्ठानगतेति ॥ इदमाकारवृत्तिप्रतिबिंबितचैतन्यगतेदंतारोपइत्यर्थः । ननुयदिरूप्यस्याध्यस्तत्वात्तत्रापरोक्ष्यमधिष्ठानभूतसाक्षिगतापरोक्ष्याध्यासादित्युच्यते तर्हिघटादीनामप्यापरोक्ष्यंनस्यात् । तेषामप्यध्यस्तत्वेनाधिष्ठानचैतन्यगतापरोक्ष्यमेवप्रतीयतइत्यपिवक्तुंशक्यत्वेनतत्राप्यापरोक्ष्यंप्रातिभासिकंस्यादित्याशंक्यनिराक

दौविशेषणमस्ति नतुविशेष्यं। अध्यस्तत्वात्। अपरोक्षव्यवहारायोग्येपितत्रतद्व्यवहारस्तुअधिष्ठानभूतसाक्षिगतापरोक्ष्याध्यासाद्युक्तः । इदमितिव्यवहारायोग्येपितस्मिन्नधिष्ठानगतेदंत्वारोपादिदमितिव्यवहारवत्। यद्यपिघटादिरप्यध्यस्तः । तथापितत्रसत्वमिवाऽऽपरोक्ष्यंव्यावहारि

रोति ॥ यद्यपीत्यादिना ॥ तथाचरूप्यादेरपरोक्षव्यवहारयोग्यत्वत्वाभावसाधकस्याध्यस्तत्वहेतोर्घटादौव्यभिचारइतिभावः । अध्यस्तत्वाविशेषेपिब्रह्मज्ञानेतरज्ञानाबाधितत्वात्तत्रसत्त्वंयथाव्यावहारिकंएवमापरोक्ष्यमपिव्यावहारिकमेव। रूप्यादेस्तुब्रह्मज्ञानेतरज्ञानबाध्यत्वात्तत्रसत्त्वमिवापरोक्ष्यमपिप्रातिभासिकमेवातोऽधिष्ठानगतमेवभासतइत्यर्थः।तथाचघटादिनिष्ठमापरोक्ष्यंव्यावहारिकंव्यावहारिकधर्मिनिष्ठत्वात्सत्त्ववदित्यनुमानमुक्तंभवति । तथाचरूप्यादेरपरोक्षत्वाभावसाधकमध्यस्तत्वंब्रह्मज्ञानेतरज्ञान

बाध्यत्वापरपर्यायंप्रातिभासिकत्वरूपंविवक्षितमितिनघटादौव्यभिचारइतिभावः । एवंसाधनवैकल्यपरिहारेपिअविद्यादौभागा सिद्धिःस्यादित्याशयेनाह ॥ तन्नेत्यादिना ॥ सर्वव्यावहारिकोपादानत्वमज्ञानस्यैवविशेषणं नांतःकरणादेः ब्रह्मज्ञानादित्या दिविशेषणद्वयमुभयोरितिज्ञेयं । व्यावहारिकेव्यावहारिकतयांगी(कर्तव्ये)कृतइत्यर्थः । तथाचप्रातिभासिकतयात्वयोच्यमान मज्ञानंव्यावहारिकंव्यावहारिकोपादानत्वात् ब्रह्मज्ञानात्प्रागबाधितत्वात् तमआसीदित्यादि(श्रुत्यादि)सिद्धत्वाच्चेत्यनुमानत्रयम

कं । रूप्यादौतुप्रातिभासिक"मिति । तन्न । सर्वव्यावहारिकोपादानेब्रह्मज्ञानात्प्रागबाधितेश्रुत्या दिसिद्धेचव्यावहारिकेऽज्ञानेअंतःकरणादौचयोग्यत्वस्यापिव्यावहारिकत्वात् । नह्यापरोक्ष्यैकर सेनसाक्षिणासाक्षाद्वेद्येअज्ञानादावापरोक्ष्यंप्रातिभासिकं । वृत्तिद्वारातद्वेद्येघटादौतुव्यावहारिक

त्वद्रष्टव्यं । योग्यत्वस्याऽपरोक्षव्यवहारयोग्यत्वस्य । व्यावहारिकत्वादिति । नत्वधिष्ठानगतत्वंतस्येत्यर्थः । तथाचाज्ञानादा वुक्तरीत्याविशेषणस्यविशेष्यस्यचसत्त्वेनविशिष्टाभावरूपास्वप्रकाशत्वस्यासिद्धिरितिभावः । आपरोक्ष्यंघटादौव्यावहारिकंरू प्यादौप्रातिभासिकमितिवदतोऽकौशलमित्याह ॥ नहीति ॥ वृत्तिद्वारेति ॥ ज्ञानावच्छेदकत्वेनसाक्षिवेद्यइत्यर्थः । ( अ पिच )ननुअपरोक्षव्यवहारविषयत्वयोग्यत्वाभावरूपास्वप्रकाशत्वस्यब्रह्मण्यतिव्याप्तिः । तस्यनिर्धर्मकत्वेनापरोक्षव्यवहारविषय

तायोग्यत्वरहितत्वात् । किंचापरोक्षव्यवहारविषयत्वयोग्यत्वाभावोनामअपरोक्षव्यवहारविषयत्वात्यंताभावानधिकरणत्वाभावः अपरोक्षव्यवहारविषयत्वात्यंताभावाधिकरणत्वमितियावत् । इदमपिब्रह्मण्यतिव्याप्तं । कल्पितैतादृशधर्मसद्भावादित्यादिदूषणमभिसंधायाह ॥ शिष्टमिति ॥ अस्यलक्षणस्यब्रह्मण्यतिव्याप्तिरूपंदूषणमित्यर्थः ॥ वक्ष्यतइति ॥ द्वितीयपरिच्छेदेस्वप्रकाशत्ववादे "प्रमाणंचात्रानुभूतिःस्वप्रकाशे"त्यादिग्रंथेनेत्यर्थः । एवमेतद्वाक्यव्याख्यानेउत्तरत्रसंग्रहश्लोके"(अस्तिचात्मनीति)" अस्वप्रकाशत्वलक्षणस्यात्मन्यतिव्याप्तिःसंगृह्यतेतदप्युपपन्नमितिध्येयमितिसंप्रदायागतःपंथाः। ननुफलव्याप्यत्वमेवास्वप्रकाशत्वं

**मितियुक्तं । शिष्टंस्वप्रकाशत्ववादेवक्ष्यते । किंचास्वप्रकाशत्वस्यपंचमप्रकाराविद्यानिवृत्तौव्य भिचारः । यत्तुप्रमाणवस्त्वन्यतराधीनवृत्तिविषयत्वंदृश्यत्वं । तुच्छस्यघटादिवत्प्रमाणाधीनवृत्ति**

घटादीनांफलव्याप्यत्वंचवृत्तिप्रतिबिंबितचैतन्यजन्यातिशययोगित्वं अतिशयश्च भग्नावरणचित्संबंधएवेतिलक्षणांतरमभिधीयतेइत्यतआह ॥ शिष्टमिति ॥ भग्नावरणचित्संबंधरूपातिशयस्यैवाप्रामाणिकत्वेननोक्तलक्षणंसाध्वितिस्वप्रकाशत्वभंगेवक्ष्यतइतिव्याख्यानेतुत्वदुक्तास्वप्रभत्वंचरूप्येनास्त्यस्तिचात्मनीतिसंग्रहश्लोकेआत्मन्यतिव्याप्तिःसंगृह्यते तदयुक्तं स्यात् । उक्तस्यैवसंग्राह्यत्वात् आत्मन्यतिव्याप्तेश्चपूर्वमनुक्तत्वादित्यस्वारस्यंद्रष्टव्यं । अस्वप्रकाशत्वस्यतदाख्यदृश्यत्वस्य ॥ पंचमेति ॥ इदंचचतुर्थप्रकाररूपसदसद्वैलक्षण्याख्यमिथ्यात्वरूपसाध्याभावोपपादनाय । प्रतियोगितदभावयोर्वैलक्षण्यस्या

वश्यकत्वादितिभावः ॥ वस्त्विति ॥ प्रातिभासिकस्यापिरूप्यादेरसद्विलक्षणत्वमात्रेणवस्तुत्वंमंतव्यं । तथाचतदधीनवृत्तिर्नाम तदाकाराविद्यावृत्तिरित्यर्थः । प्रमाणाधीनवृत्तिविषयत्वरूपंदृश्यत्वंमिथ्याभूतेप्रातिभासिकेरूप्यादौनास्तीतिसाधनवैकल्यपरिहारायवस्त्वधीनवृत्तिविषयत्वमित्युक्तं । घटादावसिद्धिवारणायप्रमाणाधीनवृत्तिविषयत्वमित्युक्तं । अननुगमवारणायान्यतरेत्युक्तमितिद्रष्टव्यं । तथाचनासिद्धिसाधनवैकल्येइतिभावः । घटादावसिद्धिपरिहारंदृष्टांतेसाधनवैकल्यपरिहारंचसूचयंस्तुच्छेव्यभिचारोपिनास्तीत्याह ॥ तुच्छस्येति ॥ व्याप्तेरिति ॥ तथाचैतादृशदृश्यत्वंसाध्याभावेनैवव्याप्तत्वाद्विरुद्धमितिभावः ॥

विषयत्वस्यप्रातिभासिकवद्वस्त्वधीनवृत्तिविषयत्वस्यचाभावान्नतत्रव्यभिचारइति । तत्त्वतितुच्छं । प्रमाणाधीनवृत्तिविषयत्वस्यामिथ्यात्वेनव्याप्तेः। प्रमाणशब्देनज्ञापकोक्तौतुतुच्छेव्यभिचारः। तज्ज्ञानस्यापिज्ञापकाधीनत्वात् । धीमात्रशरीररूप्यादिवृत्तौवस्तुपरतंत्रत्वस्याप्यभावाच्च । वस्तुपरतंत्रशब्देनासदविषयकत्वस्यासद्विलक्षणविषयकत्वस्याचोक्तौमद्रीत्यादृष्टांतस्यसाधनवैकल्यात् ।

ज्ञापकोक्ताविति ॥ तथाचनास्यमिथ्यात्वेनैवव्याप्तिरितिभावः ॥ ज्ञापकाधीनत्वादिति ॥ शशशृंगादिपदरूपज्ञापकाधीनत्वादित्यर्थः । रूप्यादौसाधनवैकल्यंचाह ॥ धीमात्रेति ॥ धीमात्रशरीरंयद्रूप्यादितदाकाराविद्यावृत्तिरित्यर्थः । वस्तुपरतंत्रत्वस्यवस्त्वधीनत्वस्य । वस्तुपरतंत्रत्वाभावोपपादनायधीमात्रशरीरेत्युक्तं । तथाचप्रातिभासिकतयाधीमात्रस्यरूप्यादेर्घटादिवद्वृत्त्यपेक्षयापूर्वभावित्वाभावेनतदाकाराविद्यावृत्तेःशुक्तिरूप्यादिरूपवस्त्वधीनत्वाभावात्साधनवैकल्यमितिभावः। मद्रीत्येति ॥

रूप्यस्यात्यंतासत्त्वेननासदविषयकवृत्तिविषयत्वं नवाऽसद्विलक्षणार्थविषयत्वमित्यर्थः ॥ ब्रह्मणीति ॥ असदविषयकासद्विलक्षणार्थविषयकवेदांतजन्यवृत्तिविषयत्वेनवस्त्वधीनवृत्तिविषयत्वसद्भावाद्व्यभिचारइत्यर्थः ॥ अन्यापेक्षेति ॥ स्वव्यवहारे स्वातिरेकीत्यादिलक्षणमित्यर्थः ॥ औपनिषदेति ॥ हेतुगर्भमिदंविशेषणं । अद्वितीयत्वादिविशिष्टव्यवहारेविशेषणोपनायकैकमेवाद्वितीयमित्यादिमानापेक्षास्तीत्यतिव्याप्तिरित्यर्थः ॥ रूप्येनास्तीति ॥ तथाचसाधनवैकल्यमितिभावः ॥ अस्तिचा

ब्रह्मणिव्यभिचारापरिहाराच्च । एवंच नधर्मादौफलव्याप्तिर्वृत्तिव्याप्यत्वमात्मनि । अज्ञातत्वादि
रूपेणचिद्वेद्यत्वंतुचित्यपि । अन्यापेक्षाभिलाषत्वमस्त्यौपनिषदात्मनि । त्वदुक्तास्वप्रभत्वंचरूप्ये
नास्त्यस्तिचात्मनि ॥ ७ ॥ इतिदृश्यत्वहेतुभंगः ॥३॥ जडत्वमप्यज्ञातृत्वंवा अज्ञानत्वंवा अस्वप्रका
शत्वंवा अनात्मत्वंवा पराभिप्रेतंवा । नाद्यः । त्वन्मतेपक्षनिक्षिप्तस्याहमर्थस्यैवज्ञातृत्वात् । शुद्धा
त्मनोप्यज्ञातृत्वाच्च । शुद्धेपिकल्पितंज्ञातृत्वमस्तीतिचेन्न । कल्पितेनहेत्वभावेनव्यभिचारापरिहा

त्मनीति ॥ शिष्टंस्वप्रकाशवादेवक्ष्यतइत्यात्मनिअतिव्याप्तेःपूर्वमुक्तत्वात्तत्संग्रहोयमितिसंप्रदायः । तथाचातिव्याप्तिरितिभावः ॥ ७ ॥ इतिदृश्यत्वहेतुभंगविवरणं ॥ ३ ॥ परेति ॥ मायावाद्यपेक्षयापरेषांतत्त्ववादिनामस्माकंयदभिप्रेतंतद्वे(तदि)त्यर्थः ॥ अहमर्थस्यैवेति ॥ तथाचभागासिद्धिरितिभावः ॥ शुद्धेति ॥ तथाचात्मनिव्यभिचारइतिभावः ॥ शुद्धेपीति ॥ तथाचहेतोरेवाभावान्नव्यभिचारइतिभावः ॥ अपरिहारादिति ॥ अज्ञातृत्वरूपोयोहेतुस्तदभावस्यकल्पितत्वमुक्तंस्यात् ।

तथाचनव्यभिचारपरिहारः । अन्यथापर्वतोधूमवान्वह्नेरित्यत्रापिअयोगोलकेकल्पितस्यवह्न्यभावस्यसत्त्वाद्व्यभिचारित्वंनस्यादितिभावः । ननुकल्पितत्वंनाभावविशेषणं किंनामाभावप्रतियोगिनोज्ञातृत्वस्यैव । एवंचब्रह्मणिकल्पितज्ञातृत्वसद्भावेनतदभावाभावान्नव्यभिचारइतिशंकते ॥ कल्पितस्येति ॥ गौरोहमिति ॥ अहमर्थनिष्ठस्यज्ञातृत्वस्यगौररूपवतिदेहेकल्पितत्वादितिभावः । नन्वत्राहमर्थएवज्ञातृत्वंप्रतीयतेनदेहइतिचेन्न । गौरोहमितिगौरत्वाहंत्वयोःसामानाधिकरण्यप्रतीत्याशरीराहमर्थयोरभेदप्रतीतेरितिभावः । देहादौ पक्षीभूते तथाचभागासिद्धिरितिभावः ॥ धर्मीति ॥ तथाचनासिद्धिः । देहेप्रतीयमान

रात् । कल्पितस्यज्ञातृत्वस्याभावोहेतुरितिचेन्न । गौरोहंजानामीतिकल्पितज्ञातृत्ववतिदेहादौतदभावासिद्धेः । धर्मिसमसत्तस्यज्ञातृत्वस्याभावोहेतुरितिचेन्न । तादृशज्ञातृत्ववत्यंतःकरणेतदभावा

स्यज्ञातृत्वस्यकल्पिततयाप्रातिभासिकत्वेनव्यावहारिकधर्मिभूतदेहसमसत्ताकत्वाभावादितिभावः ॥ तादृशज्ञातृत्ववतीति ॥ व्यावहारिकधर्मिभूतांतःकरणसमसत्ताकज्ञातृत्ववतीत्यर्थः । एवंचभागासिद्धिरितिभावः ॥ तादृशेति ॥ पारमार्थिकधर्मिभूतशुद्धब्रह्मसमसत्ताकज्ञातृत्वाभावस्यशुद्धेसत्त्वाद्व्यभिचारइतिभावः । ननुवृत्तिज्ञानेनभागासिद्धिः । अज्ञानत्वादित्यस्याज्ञप्तित्वादित्यर्थोविवक्षितः । वृत्तिरूपंज्ञानंचनभावव्युत्पत्त्याज्ञानशब्दवाच्यं किंतुज्ञायतेऽनयाचैतन्यमितिकरणव्युत्पत्त्यैव । भा

वव्युत्पत्त्यातद्वाच्यंतुवृत्तिप्रतिबिंबितचैतन्यमेवेत्यतोनदोषइत्याशंक्यदूषयति ॥ यदिचेति ॥ यदिचवृत्तिरज्ञप्तिरित्यन्वयः । तत्रविवरणसंमतिमाह ॥ **सांख्येति** ॥ सांख्यावेदांतिनश्चसांख्यवेदांतिनस्तेषां । सांख्यरूपावेदांतिनइत्यर्थइत्यप्याहुः । मतइति शेषः । बुद्धेरंतःकरणस्यवृतिःकरणव्युत्पत्त्याज्ञानमित्यन्वयः।अज्ञप्तित्वमपिवृत्तिरूपेज्ञानेनास्तीत्यसिद्धिरेवेत्याह॥**नहीति**॥ अपरोक्षवृत्तौचैतन्यप्रतिबिंबितत्वनियमात्तस्यचज्ञप्तित्वात्ततोऽज्ञाननिवृत्त्यादिकंभविष्यतीत्यतउक्तंपरोक्षवृत्त्येति। परोक्षवृत्तौचैतन्यप्रतिफलननियमादेस्त्वन्मतेऽभावादज्ञाननिवृत्त्यादेर्ज्ञप्तिकार्यस्यततोपिदर्शनात्परोक्षवृत्तेरपिज्ञप्तित्वमवश्यमभ्युपेयमतोऽसिद्धि

**सिद्धेः। शुद्धेतादृशज्ञातृत्वाभावाच्च। नद्वितीयः। वृत्तिज्ञानेभागासिद्धेः। यदिचसांख्यवेदांतिनांतु करणव्युत्पत्त्याबुद्धिवृत्तिर्ज्ञानमितिविवरणोक्तेर्वृत्तिरज्ञप्ति स्तर्हिपरोक्षवृत्त्याखविषयेअज्ञाननिवृत्ति व्यवहारस्मृतयोनस्युः । तासांज्ञप्तिकार्यत्वात् । धर्माधर्मादिकंचजानामीत्यनुभवश्चनस्यात् ।**

रित्यर्थः । कुतइत्यतआह ॥ **तासामिति** ॥ स्मृतेःसंस्कारद्वारज्ञप्तिकार्यत्वंद्रष्टव्यं । तथाचज्ञप्तिभिन्नात्ज्ञप्तिकार्यंनदृष्टमितिभावः ॥ **जानामीति** ॥ ज्ञाअवबोधनइतिधातोःधर्मादिज्ञप्तिमानित्यनुव्यवसायरूपानुभवइत्यर्थः । ज्ञाधात्वर्थभूतज्ञप्तिविषयत्वंधर्मादौप्रतीयते । तथाचज्ञप्तित्वरहितायांपरोक्षरूपायांधर्मादिवृत्तौज्ञप्तित्वमवगाहमानोनुभवःप्रमा नस्यादित्यर्थः । घटादिकंजानामीत्यनुभवःप्रमानस्यादित्यापादनंतुनशक्यं । ज्ञप्तित्वरहितायांअपरोक्षरूपायांघटादिवृत्तौज्ञ

प्तित्वमवगाहमानानुभवस्यप्रमात्वंभविष्यतिअपरोक्षवृत्तेरज्ञप्तित्वेपिचैतन्यरूपज्ञप्तिप्रतिबिंबनसद्भावादतोधर्मादिकमित्युक्तं ॥किं चात्मनीति॥ त्वदभिप्रेतेआत्मरूपेज्ञानेज्ञानत्वाभावस्यापाद्यमानत्वेनतत्राज्ञानत्वरूपहेतोःसत्त्वाद्व्यभिचारइत्यर्थः। ज्ञानत्वव्यापकानांसविषयत्वज्ञातृसाहित्यप्रमाऽप्रमान्यतरत्वादीनामभावान्नात्मनोज्ञानत्वमितिज्ञानत्वाभाववक्तुंज्ञानत्वव्यापकसविषयत्वाभावंतावदुपपादयति ॥ तथाहीति ॥ आत्मरूपज्ञानं चैतन्यरूपाज्ञप्तिरित्यर्थः ॥ स्ववृत्तिविरोधेनेति ॥ तथाहि । लोकेक्रिया द्विविधादृष्टा सकर्मकाअकर्मकाचेति । तत्राकर्मकाक्रियाकर्त्राश्रितैवदृष्टा । यथाशयनासनादिक्रियादेवदत्ताश्रितैव । सकर्म

**किंचात्मनिव्यभिचारः। तथाहि। आत्मरूपंज्ञानंसविषयं निर्विषयंवा। आद्येपिस्वविषयं परविष**

काचक्रियाद्विविधा । काचनकर्त्राश्रिता यथाभोजनगमनादिक्रियादेवदत्ताश्रिता काचनकर्माश्रिता यथाछिदाछेद्यरूपकर्माश्रिता । तदिहज्ञानरूपाचक्रियासकर्मकेतिकर्माश्रिताकर्त्राश्रितावावाच्या तदत्रचैतन्यस्वरूपभूतज्ञानरूपक्रियांप्रतिब्रह्मणएव विषयत्वांगीकारेतस्यैवकर्तृत्वात्तस्यैवचकर्मत्वात्कर्तृकर्मक्रियाणांसर्वासामप्येकत्वात्क्रियायाःक(र्म)र्मीभूतायांस्वस्यामेववृत्तिःप्राप्ता। इदंचविरुद्धं । नहिछिदाछिदायांवर्तते शयनंवाशयने एवंचस्ववृत्तिविरोधेनब्रह्मस्वरूपज्ञप्तेःस्वविषयत्वंपरैर्नांगीकृत। मि(त्यर्थइ)तिसंप्रदायः। ( ननुस्यादयंस्ववृत्तिविरोधः। यद्यात्मनःकर्मत्वंस्यात् नचैतदस्ति येनक(र्म)र्मीभूतायांस्वस्यामेववृ

त्तिप्राप्त्यास्ववृत्तिविरोधःस्यात् किंतु )। ननुब्रह्मणःस्वरूपज्ञानंप्रतिकर्मत्वाभावेपिविषयत्वमस्त्येव। नचतदेवकर्मत्वमितिवाच्यं। तयोर्भेदात् तथाचनस्ववृत्तिविरोधइत्याशंकते॥नन्विति॥ ( तथाचब्रह्मस्वरूपभूतंज्ञानंस्वविषयमेवेतिनज्ञानत्वव्यापकसविषयत्वव्यावृत्तिर्ब्रह्मस्वरूपज्ञानेइतिनव्यभिचारइतिशंकते॥नन्विति॥)कर्मत्वातिरिक्तंज्ञानजन्यव्यवहारयोग्यत्वमेवविषयत्वं। ज्ञानेचस्वविषयविषयकव्यवहारजननयोग्यत्वंसविषयकत्वमित्यर्थः। यत्रज्ञानानंतरंव्यासंगादिनाव्यवहारोनजातस्तत्रज्ञानेस्वविषय विषयकव्यवहारजनकत्वाभावात्तद्विषयेचज्ञानजन्यव्यवहारास्पद (रस्यदृष्ट) त्वाभावादव्याप्तिवारणाययोग्यत्वमित्युक्तं। योग्यत्वंचसहकारिविरहप्रयुक्तकार्याभावः। तदिहज्ञानानंतरंव्यवहारेजननीयेव्यासंगाभावःसहकारीतदभावाद्व्यवहारोनभवति।

**यंवा। नाद्यः। स्ववृत्तिविरोधेनपरैरस्वीकारात्। ननुस्वकर्मकत्वाभावेपिस्वव्यवहारजननयोग्यत्वरूपंस्वविषयत्वमस्ति। तत्स्वभावस्यापिस्फुरणस्यतद्व्यवहारजनकतयातद्विषयत्वमितिचित्सुखोक्ते**

तत्सद्भावेतुभवत्येवेत्येवंव्यासंगदशायामपिउक्तरूपयोग्यतासद्भावान्नाव्याप्तिरितिभावः। ब्रह्मज्ञानस्यस्वकर्मकत्वाभावेपिस्वव्यवहारजननयोग्यत्वरूपंस्वविषयत्वमस्तीत्यत्रपरःस्वाचार्यसंमतिमाह ॥ तत्स्वभावस्यापीति ॥ आत्मस्वभावस्यापीत्यर्थः स्फुरणस्यज्ञानस्य तद्विषयत्वं तद्विषयकत्वं। एतदन्यस्यज्ञानजन्यव्यवहारयोग्यत्वभिन्नस्य। तथाचघटादौज्ञप्तिविषयत्वकर्मत्वयोरेकत्वदर्शनात्ब्रह्मणोज्ञप्तिकर्मत्वमनंगीकृत्यतद्विषयत्वांगीकारोविरुद्धइत्यर्थः। ननुज्ञानजन्यव्यवहारयोग्यत्वरूपविषय

त्वातिरिक्तंज्ञप्तिकर्मत्वंघटादावस्त्येवेतिउक्तमसदित्याशंक्यनिराकरोति ॥ **नहीत्यादिना** ॥ एकदेशिमतेनाह ॥ **तदाकारावृ त्तिरिति** ॥ घटाद्याकारांतःकरणवृत्तिरित्यर्थः ॥ **तांचप्रतीति** ॥ तदाकारावृत्तिर्ज्ञप्तिरितिमतेतांप्रतिकर्मत्वंनामतत्कारकविशे षत्वं । तत्प्रतिबिंबितंचैतन्यंज्ञप्तिरितिमतेतांप्रतिकर्मत्वंनामतज्जन्येत्यादिरूपमितिविवेकः । घटादेश्चैतन्यकारकत्वाभावेनतत्का रकविशेषत्वरूपकर्मत्वस्यद्वितीयमतेऽयोगादितिध्येयं । कर्त्रादिकारकव्यावृत्त्यर्थंविशेषपदं ॥ **तज्जन्येति** ॥ वृत्तिप्रतिबिंबित चैतन्यजन्येत्यर्थः । अतिशयविशेषणमेतत् । अतिशययोगित्वं अतिशयजन्यव्यवहारयोगित्वमित्यर्थोद्रष्टव्यः ।

**रितिचेन्न । घटादावप्येतदन्यस्यज्ञप्तिकर्मत्वस्याभावात् । नहिघटादावपितदाकारवृत्तिः तत्प्रति बिंबितचैतन्यंवाज्ञप्तिः । तांचप्रतिकर्मत्वंतत्कारकविशेषत्वंवातज्जन्यावरणाभिभवरूपातिश ययोगित्वंवेतियुक्तं । ज्ञातैकसतिसुखादौशुक्तिरूप्यादौचोक्तरूपज्ञप्तिकर्मत्वाभावापातात् ।**

अन्यथाप्राप्तप्रकाशप्रतिबंधरूपावरणस्ययोऽभिभवोध्वंसःतद्रूपातिशययोगित्वं । तदभिव्यक्ताधिष्ठानचैतन्यएवस्यात्नघटादा वितिध्येयं । यद्वावृत्तिप्रतिबिंबितचैतन्यजन्योयआवरणाभिभवरूपोतिशयः भग्नावरणचित्संबंधइतियावत् । तद्रूपातिशययो गित्वमितिव्याख्येयं । इदंचघटादावस्तीतिध्येयं । ज्ञानकर्मत्वेनसंप्रतिपन्नेदुःखादौनिरुक्तंकर्मत्वमव्याप्तमित्याह ॥ **ज्ञातैकस तीति** ॥ दुःखादीनामविद्यावृत्तितत्प्रतिबिंबितसाक्षिचैतन्यविषयत्वेनोक्तरूपज्ञप्तिद्वयंप्रतिकारकविशेषत्वाभावादित्यर्थः । एत दुपपादनायज्ञातैकसतीत्युक्तं । दुःखादीनांशुक्तिरूप्यादीनांचप्रातिभासिकत्वेनप्रतीतिसमयमात्रवृत्तित्वेनज्ञातैकसत्त्वात्तत्रचाव

रणाभावेनआवरणाभिभवरूपातिशययोगित्वाभावेनकर्मत्वाभावापातात् । तथादुःखादेर्ज्ञातैकसत्त्वेनज्ञप्त्यपेक्षयापूर्वभावित्वा भावेनवृत्तिरूपज्ञप्तिकारकत्वरूपंकर्मत्वमपिनास्ति । कारकत्वस्यजनकत्वगर्भत्वेनतस्यपूर्ववृत्तित्वघटितत्वात् अतोऽव्याप्तिरित्य र्थः । उक्तयोःकर्मत्वलक्षणयोरतिव्याप्तिंचाह ॥ ब्रह्मणोपीति ॥ चरमवृत्तेर्ब्रह्माकारतयातांप्रतिब्रह्मणःकारकत्वात् चरमवृत्ते श्चित्प्रतिफलनाभावेवृत्तेर्मूलाज्ञाननिवर्तकत्वायोगात्तदन्यथानुपपत्त्याघटाकारवृत्तिवत्चित्प्रतिफलनयुक्ततायाअवश्यंवाच्यत्वे नब्रह्माकारवृत्तिप्रतिफलितचैतन्यंप्रतिब्रह्मणोपिकर्मत्वात् । सकलसामर्थ्यविधुरस्यकारकत्वंनास्तीत्येतच्चनिराकरिष्यतइतिहृदयं ।

ब्रह्मणोपिचरमवृत्तिविषयस्योक्तरूपांज्ञप्तिंप्रत्युक्तरूपकर्मत्वापाताच्च किंतुवृत्त्यभिव्य क्तंघटाद्यधिष्ठानचैतन्यंतज्ज्ञप्तिः नचतस्यघटादावपिव्यवहारादन्यत्कृत्यमस्ति । इयां स्तुभेदः घटादिःस्वान्यज्ञप्तिकर्म चैतन्यंतुस्वस्वरूपज्ञप्तिकर्मेति । नद्वितीयः मोक्षेप

तादृशचैतन्यजन्यावरणाभिभवरूपातिशययोगित्वात्ब्रह्मण्यतिव्याप्तिरित्यर्थः । विषयत्वातिरिक्तंकर्मत्वंनिरस्यज्ञानजन्यव्यव हारयोग्यत्वरूपंविषयत्वमेवकर्मत्वंघटादावित्याह॥किंत्विति॥तज्ज्ञप्तिःघटज्ञप्तिः। इत्येवत्वयावाच्यमितिशेषः।तस्यज्ञप्तिरूपघटा धिष्ठानचैतन्यस्य । एवंघटचैतन्ययोर्ज्ञप्तिकर्मत्वेपिआंतरालिकमेवभेदमाह ॥ इयांस्त्विति ॥ ( स्वस्वरूपास्वाख्या ) एवंस तिकर्मत्वविषयत्वयोरैक्येनब्रह्मणोपिकर्मत्वावश्यंभावात्स्ववृत्तिविरोधादितिभावः ॥ मोक्षइति ॥ तथाचमोक्षकालेसाक्षिणो

निर्विषयत्वंस्यादितिभावः । मोक्षकालेपिसाक्षिणोमयापूर्वंसुखादिकमनुभूतमित्येवंरूपेणातीतविषयकत्वंभविष्यतीत्याशंक्यतद
तीतंकिंसाक्षान्मोक्षेसाक्षिणोविषयः । ज्ञानादिद्वारावा । नतावद्द्वितीयः । उपनायकस्यवृत्तिज्ञानस्यमोक्षेऽभावादित्यभिप्रे
त्यप्रथमपक्षंनिराचष्टे ॥ त्वन्मतेचेति ॥ वर्तमानस्यैवेति ॥ योग्यस्यैवसुखादेरित्यर्थः । तथाचातीतसुखादेःनसाक्षात्साक्षि
विषयत्वमितिभावः । साक्षिणोतीतविषयत्वेदूषणांतरमाह ॥ वह्निरिति ॥ वह्निरत्रपर्वतेपूर्वमासीदित्यनुमितौयथातीतवह्न्यु
ल्लेखोभवत्येवंमोक्षेसुषुप्तौचअतीतविषयोल्लेखरूपसंसाराख्योपप्लवःस्यात् । तथाचमोक्षसुषुप्त्योर्निष्प्रपंचतानस्यादित्यर्थः । त

राभावात् त्वन्मतेचवर्तमानस्यैवसाक्षात्साक्षिविषयत्वात् वह्निरासीदित्याद्यनुमि
ताविवसाक्षिज्ञानेमोक्षसुषुप्त्योरतीतविषयोल्लेखरूपोपप्लवापाताच्चनिर्विषयत्वेतुज्ञान
त्वमेवनस्यात् तद्धिविषयानुल्लेखित्वं । ननूल्लिखितस्यविषयस्यावर्तमानत्वमत्यंता

थात्वज्ञानत्वव्यापकसविषयत्वरहितत्वान्नज्ञानमात्मेतितत्राज्ञानत्वहेतोर्व्यभिचारःसुस्थइतिभावः । आत्मरूपंज्ञानंनिर्विषयमिति
द्वितीयपक्षंदूषयति ॥ निर्विषयत्वइति ॥ आत्मानज्ञानं निर्विषयत्वात् घटवदित्यत्रनिर्विषयत्वंनामअवर्तमानविषयत्वंवा
अत्यंतासद्विषयकत्वंवा । आद्येऽतीतज्ञानेव्यभिचारः । द्वितीयेतुच्छज्ञानेव्यभिचारइत्याशंकांनिराकुर्वन्हेतुस्वरूपमाह॥तद्धीति
॥निर्विषयत्वमित्यर्थः । अत्रबालमूकादिज्ञानव्यतिरिक्तत्वंहेतौविशेषणीयं। अतोनतत्रव्यभिचारइतिध्येयं । ननुनिर्विषयत्वेज्ञान
मेवनस्यादित्युक्तमयुक्तं निर्विषयत्वेपिकदाचित्सविषयत्वमात्रेणज्ञानत्वमस्तु । तथाचमोक्षकालीनात्मरूपज्ञानस्यसंसारावस्थायांस

विषयकत्वाज्ज्ञानत्वमुपपन्नमित्यप्रयोजकतामाशंक्यनिराकरोति ॥नचेति॥ सप्रतियोगिकइति॥ तथाचाभावादौसप्रतियोगिकत्वादीनांस्वभावत्वमिवब्रह्मरूपज्ञानेपिसविषयत्वंस्वभावएवेत्यंगीकर्तव्येकदाचित्सविषयत्वस्याप्रयोजकत्वात्॥ मोक्षेचात्मरूपज्ञानस्यसविषयकत्वाभावाज्ज्ञानत्वंनस्यादेवेत्यर्थः । मोक्षेविषयानुल्लेखेब्रह्मरूपज्ञानस्यज्ञानस्वभावहान्यापत्त्याज्ञानत्वाभावमुक्त्वादोषांतरमाह॥ परमेति॥मोक्षेआत्मरूपज्ञानस्यनिर्विषयत्वांगीकारेआनंदस्यआत्मरूपज्ञानाविषय(त्वापत्त्या)त्वप्राप्त्याआनं(दप्रकाशएवन)दाप्रकाशएवस्यात् । तथाचमोक्षस्यपरमपुरुषार्थत्वं नस्यादित्यर्थः । नचानंदरूपत्वाद्युक्तंपरमपुरुषार्थत्वमितिवाच्यं । द्रवि

सत्वंवा येनातीतादिज्ञानेतुच्छज्ञानेचव्यभिचारःस्यात् नचकदाचित्सविषयत्वमात्रेणज्ञानत्वं । सप्रतियोगिकेअभावादौसप्रतियोगिकत्ववत्सविषयकेइच्छादौघटादिज्ञानेचसविषयकत्वादःस्वभावत्वदर्शनात् परमपुरुषार्थमोक्षेआनंदाप्रकाशापाताच्च। अर्थप्रकाशत्वरूपज्ञानस्वभावाभावेपिज्ञानत्वे

णवत्त्वेहिपारिवृढ्यं नतुद्रविणत्वेऽतस्तन्न्यायेनानंदप्रकाशोऽवश्यंवाच्यइतिभावः । निर्विषयत्वेज्ञानमेवनस्याद्घटवदितिभगवत्पादीयवाक्येनिर्विषयत्वाज्ज्ञानमेवनस्यादित्यंशमुपपाद्यघटवदित्यंशमुपपादयति ॥ अर्थेति ॥ ज्ञानस्वभावेति ॥ ज्ञानस्वरूपलक्षणेत्यर्थः । "बुद्धिरर्थप्रकाशन"मितिवचनादितिभावः । नन्वर्थप्रकाशात्मकत्वरूपज्ञानस्वभावाभावेपिज्ञानत्वमस्तु नचघटादेरपिज्ञानत्वापत्तिः अर्थाप्रकाशकंयज्जडंतद्व्यावृत्तत्वमेवज्ञानत्वमित्यंगीकृतत्वात् घटादेस्त्वर्थाप्रकाशात्मकजडव्यावृत्तेरभावादितिचेन्न । ज्ञानस्यार्थप्रकाशात्मकत्वाभावेऽर्थाप्रकाशकजडव्यावृत्तेरेववक्तुमशक्यत्वादित्याह ॥ अर्थाप्रकाशेति ॥

ज्ञात्रभावादिति॥ नतावदात्मस्वरूपभूतज्ञानस्यआत्मैवज्ञाता कर्तृत्वकर्मत्वयोरेकत्रविरोधात्‌नापिपरः मोक्षेपराभावादित्यर्थः।एवंकर्तृकर्मणोरभावेपिज्ञानत्वमस्त्वित्यतआह ॥ नहीति ॥ नन्वात्मस्वरूपज्ञानस्यानादित्वान्नज्ञात्राद्यपेक्षा अनादिनःपरानपेक्षत्वादित्यतआह ।।यदिचेति॥ तदनपेक्षा कर्त्राद्यनपेक्षा । ब्रह्मसत्तायाः ब्रह्मकर्तृकसत्तायाः अस्तिब्रह्मेत्यादाविति शेषः। ब्रह्म

घटादेरपिज्ञानत्वापात्ताच्च अर्थप्रकाशात्मकजडव्यावृत्तेरपिअर्थप्रकाशात्मकत्वंविनाऽयोगाच्च। एवंज्ञात्रभावादपिनज्ञानं । नहिभोज्यभोक्तृरहिताभुक्तिरस्ति । यदिचज्ञानस्यानादित्वात्तदनपेक्षातर्ह्यनादेःप्रागभावादेःप्रतियोगिनिजातिरूपस्यधर्मस्यव्यक्तिरूपेधर्मिणिजीवब्रह्मविभागस्यचधर्मिप्रतियोगिनोर्वेदरूपस्यशब्दस्यचवक्तृवाच्ययोरज्ञानस्यचाश्रयविषययोर्ब्रह्मसत्तायाश्चकर्तर्यपेक्षानस्यात् । तथाचास्तिब्रह्मेत्यादौकर्तरिलकारोनस्यात् । अतीतादिज्ञानस्येश्वरज्ञानस्यचोत्पत्त्यर्थंविषयाद्यनपेक्षत्वेपितन्निरूप्यत्वदर्शनेनज्ञानस्यज्ञातृज्ञेयनिरूप्यत्वस्वभावत्वाच्च ।

सत्तायाःकर्तर्यपेक्षानास्त्येवेतिचेत्तत्राह॥ तथाचेति॥ कर्तरि कर्त्रर्थे लकारः अस्तीत्यत्रलड्रूपः।कर्तरिलटोविधानादितिभावः। ननुज्ञातृज्ञेयादिनिरूप्यस्वभावत्वमप्युत्पत्त्यर्थमेवांगीकार्यं आत्मज्ञानस्यचानादित्वेनतदभावान्नतन्निरूप्यस्वभावत्वकल्पनमिति मंदाशंकानिरासायोक्तं ॥ अतीतादीति ॥ दृष्टांतोयं । ईश्वरादिज्ञानंदार्ष्टांतिकमितिबुद्ध्याविवेकः । अतीतादिज्ञानस्यविष

याभावान्नोत्पत्त्यर्थंतदपेक्षा ईश्वरज्ञानस्यतुनित्यत्वादितिज्ञेयं। ज्ञानस्यज्ञेयादिनिरूप्यस्वभावत्वेऽनुभवंप्रमाणयति॥इदमिति॥ इदमितिविषयस्यअहमितिज्ञातुरुल्लेखइतिज्ञातव्यं॥ज्ञातुरिति॥ ज्ञातुर्योऽर्थप्रकाशःतदेवज्ञानमित्यर्थः। ज्ञातुरितिकर्त्रपेक्षाअर्थेतिज्ञेयापेक्षाचोक्तेतिभावः।ज्ञानविशेषाभ्यांप्रमाऽप्रमाभ्यांबहिर्भूतत्वाच्चनात्माज्ञानमित्याह॥ किंचात्मेति॥तद्वेद्यस्य प्रमारूपसाक्षिवेद्यस्य प्रमायास्सदर्थविषयकत्वनियमादितिभावः। नन्वित्यनंतरं( यइति )यदितिशेषः॥ अंतःकरणेति॥ अंतःकरण

इदमहंजानामीतिह्यनुभवः। उक्तंहिविवरणे।"ज्ञातुरर्थप्रकाशस्यज्ञानत्वा"दिति।तथाच "ज्ञातृज्ञेयविहीनंतेब्रह्मज्ञानात्मकंयदि। भोक्तृभोज्यविहीनापिभवेत्तर्हिभुजिक्रिया"। किंचात्माज्ञानंचेत्प्रमाभ्रमोवा। नाद्यः। तद्वेद्यस्याविद्यादेस्तात्विकत्वापातात्।नांत्यः।दोषाजन्यत्वात्। नन्वंतःकरणवृत्तिप्रतिबिंबितस्सप्रमा। अविद्यावृत्तिप्रतिबिंबितस्तुभ्रमइतिचेन्न। स्वभावप्रश्नंप्रत्यस्यानुत्तरत्वात्।

वृत्तिप्रतिप्रबिंबितात्मचैतन्यमितियावत्॥ अविद्येति ॥ अविद्यावृत्तिबिंबितसाक्षिचैतन्यमितियावत्॥ स्वभावेति॥ यन्मोक्षेप्य(नु)निवर्तमानंशुद्धात्मस्वभावभूतंज्ञानंतत्प्रमारूपंवाभ्रमरूपंवेतिप्रश्नस्यांतःकरणवृत्तिप्रतिबिंबितचैतन्यादेःप्रमात्वादिकथनस्यानुत्तरत्वात् वृत्तिप्रतिबिंबितचैतन्यादेःसंसारकालीनत्वात्तत्प्रमात्वादिकथनमयुक्तमित्यर्थः। नन्वात्मरूपंज्ञानंस्वभावतःप्रमाऽप्रमाबहिर्भूतमितिस्वभावप्रश्नस्योत्तरंवदामइतिचेत्तत्राह॥ स्वभावतइति॥ रूपद्वयेति॥ प्रमात्वाप्रमात्वाख्यध

मंद्वयेत्यर्थः ॥ ज्ञानमपीति ॥ यावद्विशेषाभावेसामान्यायोगाद्व्यभिचारइतिभावः ॥निरस्तत्वादिति ॥अस्वप्रकाशत्वंदृश्यत्वमित्यत्रेतिशेषः ॥ आत्मत्वमिति ॥ अनात्मत्वप्रतियोगिभूतमित्यर्थः ॥ एकत्वादिति ॥ जातेरनेकानुगतत्वावश्यंभावादित्यर्थः । ननुविशिष्टात्मनांबहूनांसत्त्वात्तदनुगतमात्मत्वंजातिर्भविष्यतीत्यतआह ॥ विशिष्टेति ॥ तथाचविशिष्टात्मनांमिथ्यात्वेनपक्षनिक्षिप्तत्वेनतत्रानात्मत्वहेतोर्भागासिद्धिरित्यर्थः ॥ निरस्तत्वादिति ॥ तथाचज्ञातृत्वादीनामात्मत्वेअज्ञातृत्वम

स्वभावतोरूपद्वयहीनश्चेत्स्वभावतोज्ञानमपिनस्यात् । नतृतीयः । निरस्तत्वात् । चतुर्थैपिनतावदात्मत्वंजातिविशेषः । आत्मनएकत्वात् । विशिष्टात्मनांभेदेपितेषांपक्षनिक्षिप्तत्वात् । नापिज्ञातृत्वंवाज्ञानत्वंवास्वप्रकाशत्वंवा निरस्तत्वात् । नाप्यानंदत्वं । जन्मादिमत्यऽनात्मनिवैषयिकानंदेऽनानंदत्वासिद्धेः ।

ज्ञानत्वमस्वप्रकाशत्वंचानात्मत्वमित्युक्तंस्यात् तथाचाद्यस्याहमर्थेऽसिद्धिःद्वितीयस्यवृत्तिज्ञानेतृतीयस्यफलाव्याप्यत्वेसत्यपरोक्षव्यवहारयोग्यत्वाभावरूपस्यघटादौअविद्यादौचासिद्धिः शुक्तिरूप्येसाधनवैकल्यंचेतिनिरस्तमित्यर्थः ॥ वैषयिकेति ॥ तस्यमिथ्यात्वेनपक्षनिक्षिप्तत्वादितिभावः । ननुवैषयिकानंदस्यात्माभिन्नत्वेनपक्षबहिर्भावएवेतिनासिद्धिरित्यतउक्तंजन्मादिमत्यनात्मनीति । अनात्मनि जडइत्यर्थः । तथाचानादिभूतेनचेतनभूतेनात्मनानाभेदइतिभावः । ननुनात्मस्वरूपानंदातिरिक्तो

त्वादित्यर्थःस्यात् । सचपरिच्छिन्नत्वहेतुःदेशकालादावसिद्ध्यादिनानिरासिष्यतइतिभावः ॥ साध्येति ॥ तथाचानात्मत्वंनाम बाध्यत्वमित्युक्तंस्यात् । तदेवचमिथ्यात्वमितिसाध्यावैशिष्ट्यमित्यर्थः ॥ आत्मशब्दवाच्यइति ॥ "आत्मादेहेधृतौजीवे(जीवे धृतौदेहे )स्वभावेपरमात्मनी "त्यभिधानादितिभावः ॥ तल्लक्ष्यत्वमिति ॥ तथाचात्मनिआत्मशब्दालक्ष्यत्वरूपानात्मत्वाभावान्नव्यभिचारः । आत्मशब्दवाच्येदेहादौसत्त्वान्नासिद्धिरितिभावः ॥ तत्प्रतिपाद्यत्वमिति ॥ वाच्यत्वलक्ष्यत्वसाधारणमित्यर्थः । हेतोः आत्मशब्दालक्ष्यत्वहेतोः । आत्मशब्दलक्ष्यत्वस्यकेवलान्वयित्वादितिभावः । आत्मशब्दाप्रतिपाद्यत्वरूपहेतोर

(हेतोः)साध्यावैशिष्ट्यात् । नाप्यात्मशब्दवाच्यत्वं । अवाच्येआत्मनिहेतोर्व्यभिचा
रात् आत्मशब्दवाच्येदेहादावसिद्धेश्च । नापितल्लक्ष्यत्वं । तत्प्रतिपाद्यत्वमात्रंवा ।
इंद्रियादावात्मशब्दलक्ष्येहेतोर्भागासिद्धेः । नापिपराभिप्रेतं । मयाज्ञातृत्वमात्मत्व
मित्यंगीकारात् । तस्मान्नचतुर्थः । नापिपंचम : मयाअज्ञातृत्वंजडत्वमित्यंगीकारात् ।

पिलक्षणयातत्प्रतिपाद्येंद्रियादावसिद्धिश्चद्रष्टव्या ॥ परेति ॥ मायावाद्यपेक्षयापरेषांतत्ववादिनामस्माकंयदभिप्रेतमात्मत्वंतदेवमयापिहेतूक्रियतइतिवक्तुंनशक्यतइत्यर्थः ॥ मयेति ॥ यथोक्तमाचार्यैः" जडत्वंचाप्रमातृत्वमेवे"ति । तथाचतदभावरूपानात्मत्वंचनत्वयाहेतूकर्तुंशक्यं । आत्मनिव्यभिचारादहमर्थेऽसिद्धेश्चेतिभावः । पराभिप्रेतमेवजडत्वमितिपंचमःकुतोनयुक्तइत्यतआह ॥ मयेति ॥ तच्चात्मादौव्यभिचारादिनात्वयावक्तुंनशक्यतइतिभावः । तत्वशुद्धिः मायावा(दि)दग्रंथविशेषः ॥

निरस्तइति ॥ अचेतनत्वंजडत्वमेव तच्चदूषितमितिभावः । यद्वाऽचेतनत्वंचेतनत्वाभावः तत्रचेतनत्वंजातिविशेषोवाज्ञातृत्वं वेत्याद्यात्मत्वनिर्वचनदूषणेनदूषितप्रायं । अतोमिथ्यात्वसाधनायपरोपन्यस्तोऽचेतनत्वहेतुरपिपरास्तइत्यर्थः ॥ इतिजडत्वहेतुभंगविवरणं ॥ ४ ॥ देशतइति ॥ देशांतरेऽसत्त्वमित्यर्थः ॥ कालतइति ॥ कालांतरेऽसत्त्वमित्यर्थः ॥ वस्तुतइति ॥ अन्योन्याभाववत्त्वमित्यर्थः । देशकालयोर्हेत्वभावंप्रत्यक्षा( गमानुमानै )नुमानागमैरुपपादयति ॥ अवकाशरूपेति ॥ अ

एतेनतत्वशुध्युक्तोऽचेतनत्वहेतुरपिनिरस्तइति ॥ ७ ॥ इतिजडत्वहेतुभंगः ॥ ४ ॥ परिच्छिन्नत्वम पिदेशतःकालतोवस्तुतोवा । नाद्यद्वितीयौ । देशकालाज्ञानेषुत्वदभिमतेवियदादेरूप्यादे श्चप्रतिपन्नोपाधिस्थनिषेधेचासिद्धेः । अवकाशरूपदेशस्यकालस्यचाऽपरिच्छिन्न(तयैव)त्वेनैवध र्मिग्राहिणासाक्षिणा “आकाशवत्सर्वगतश्चनित्यः । सदेवसौम्येदमग्रे । दृष्ट्वैवतंमुच्यते ।

व्याकृताकाशरूपेत्यर्थः ॥ अपरिच्छिन्नत्वेनैवेति ॥ देशस्यदेशांतरनिष्ठात्यंताभावाप्रतियोगित्वेनैवकालस्यचप्रध्वंसाप्रतियोगित्वेनैवेत्यर्थः ॥ इदमग्रइति ॥ जगत्सृष्टेःप्राक्प्रलयेकालस्यसत्त्वोक्त्यानित्यत्वसिद्धिरित्यर्थः ॥ दृष्ट्वैवेति ॥ दृष्ट्वेत्यस्यदर्शनानंतरमित्यर्थः । तथाचापरोक्षज्ञानेनसर्वस्यापिजगतोनिवृत्तत्वात्कतकरजोवद्वेणुसंघर्षजाग्निवच्चस्वस्यापिनष्टत्वात्तदनंतरमित्युक्त्यासाक्षात्कारानंतरमपिकालःप्रतीयते । तथाचतस्यनिवर्तकाभावेननित्यत्वावगमान्नकालतःपरिच्छिन्नत्वमित्यर्थः ॥

अथमर्त्योऽमृतोभवति । यत्रत्वस्यसर्वमात्मैवाभू"दित्यादिश्रुत्या सदासर्वत्रकार्यदर्श
नादियुक्त्याचसिद्धेः । "आकाशःसंभूत"इत्यादिश्रुतेश्चभूताकाशविषयत्वात् ।
उक्तंचाकाशद्वैतमन्यत्र । अत्रदेशोनास्तिइदानींकालोनास्तीत्यस्यव्याहतत्वाच ।

अथेति॥"यदासर्वेप्रमुच्यंतेकामायेऽस्यहृदिस्थिता"इतिज्ञानेनसर्वकामप्रहाणानंतरममृतोभवतीत्युच्यते । तथाचज्ञानेनसर्वकामप्रहाणानंतरमपिकालसत्त्वस्यार्थेत्यनेनावगमात्नित्यत्वसिद्धिरित्यर्थः ॥ यत्रत्विति ॥ यत्रत्वस्येत्यस्ययस्यामवस्थायामित्यर्थकत्वेनाविद्यानिवृत्तिरूपमोक्षावस्थायामपिकालसत्त्वप्रतीत्यातस्यनित्यत्वसिद्धेर्नतस्यकालतःपरिच्छेदइतिभावः । नन्वाकाशेनानित्यत्वरूपकालपरिच्छेदराहित्यं "तस्माद्वाएतस्मादात्मनआकाशःसंभूत" इतिश्रुतेःसिद्धजन्यत्वेनहेतुनाध्वंसप्रतियोगित्वरूपकालपरिच्छिन्नत्वस्याकाशेऽनुमातुंशक्यत्वादित्यतआह ॥ आकाशइति ॥ नाव्याकृताकाशविषया(येयं)श्रुतिःकिंतुभूताकाशविषया । भागासिद्धिश्चाव्याकृताकाशएवास्माभिरभिहितेत्याशयः । आकाशद्वयमप्रामाणिकमितिचेत्तत्राह ॥ उक्तंचेति ॥ भूताकाशोऽव्याकृताकाशश्चेत्याकाशद्वयंवियत्पादेसुधायांटीकाकृद्भिरस्माभिश्चचंद्रिकायांप्रतिपादितमित्यर्थः । देशकालयोर्देशांतरेऽसत्त्वरूपंदेशतःपरिच्छिन्नत्वंकालांतरेऽसत्त्वरूपंकालतःपरिच्छिन्नत्वंचवदतात्रदेशोनास्तिइदानींकालोनास्तीतिप्रतीतिरंगीकार्याअस्तीतिचेत्तत्राह ॥ अत्रेति ॥ अत्रेदानींशब्दाभ्यामधिकरणतयादेशकालौनिर्दिश्यपुनस्तयोर्निषेधेव्याहतिरित्यर्थः ।

नन्वत्रदेशोनास्तिइदानींकालोनास्तीतिप्रतीत्यादेशकालयोर्देशांतरादावसत्त्वरूपंपरिच्छिन्नत्वंनोच्यते येनव्याहतिःस्यात् किंतु ब्रह्मकुत्रचित्कदाचिद्देशकालौविनास्तीति । तथाचयत्रयदाब्रह्मास्तितत्रतदादेशकालयोरभावप्राप्त्यादेर्देशांतरादावसत्त्वरूपपरिच्छेदसिद्धिरित्यतआह ॥ ब्रह्मेति ॥ कुत्रचित्कदाचिच्छब्दाभ्यांदेशकालौनिर्दिश्यपुनस्तौविनाब्रह्मास्तीत्यभिधानेव्याघातइत्यर्थः । किंचदेशकालयोर्देशांतरादावसत्त्वरूपपरिच्छेदनिरूपणार्थमपिदेशकालयोरपरिच्छेदसिद्धिरित्याह ॥ देशकालयोरिति ॥ देशादेर्देशांतरादावसत्त्वरूपंपरिच्छिन्नत्वंवदतायदुपाधौदेशकालौवर्तेतेतदुपाधौतयोर्निषेधेविरोधापत्त्यादेशकालयोर्निषे

ब्रह्मकुत्रचित्कदाचिद्देशंकालंचविनास्तीत्यस्यापिव्याहतत्वाच्च । देशकालयोः
स्वोपाधौनिषेधेविरोधेनाविरोधायनिषेधोपाधितयादेशकालांतरयोरावश्यकत्वाच्च ।

धोपाधिभूतावन्यौसत्यभूतौदेशकालौदेशांतरादावसत्त्वरूपपरिच्छेदशून्यावपरिच्छिन्नावेववक्तव्यौ । तयोरपिपुनर्देशांतरादावसत्त्वरूपपरिच्छेदवत्त्वेपुनस्तयोर्यदुपाधौतौदेशकालौवर्तेतेतदुपाधावेवतयोर्निषेधेविरोधापत्त्यापुनस्तयोर्देशकालयोर्निषेधाधिष्ठानभूतावन्यौदेशकालौसत्यभूतौअपरिच्छिन्नावेववाच्यावित्येवमनवस्थास्यादतस्तद्भीत्याकयोश्चिद्देशकालयोर्देशांतरादावसत्त्वरूपपरिच्छेदाभावरूपमपरिच्छिन्नत्वमंगीकार्यमतोसिद्धिरितिभावः । ननुदेशांतरादावसत्त्वरूपंपरिच्छिन्नत्वंनोच्यते । येनैतन्निषेधाधि(करण)ष्ठान(भूत)तयादेशकालांतरयोस्सत्यभूतयोरपरिच्छिन्नयोःस्वीकारापत्तिः । किंनाम(अंतरपदंविहाय)देशादावस

त्वमेवदेशादिपरिच्छिन्नत्वमित्युच्यते। इदंचदेशेकालेचास्ति देशस्वरूपेदेशस्यावृत्तित्वात् कालस्वरूपेचकालस्यावृत्तेः। अन्यथाऽऽत्माश्रयात्। अतोदेशादौनिषेधरूपपरिच्छिन्नत्वसद्भावेननासिद्धिरित्यतआह ॥ देशइति ॥ स्वनिर्वाहकतयेति ॥ स्वस्मिन्स्वस्याधाराधेयभावघटकतयेत्यर्थः। नात्माश्रयदोषेणदेशकालयोःस्वस्वरूपेऽवृत्तिर्वाच्या। प्रमेयत्वादिवदभेदेनसंबंधेनस्वस्मिन्नपिवृत्तेःप्रामाणिकत्वात्। तथाचदेशकालयोर्देशादावसत्त्वरूपंपरिच्छिन्नत्वमप्यसिद्धमितिभावः। प्रतिज्ञातामज्ञानेहेत्वसिद्धिमुपपादयति ॥ अज्ञानस्येति ॥ अपरिच्छिन्नत्वोपपादनायसर्वगतेत्युक्तं। (सर्वगत)अपरिच्छिन्नदेशकालोपादा(नं

देशस्सर्वत्रास्तिकालस्सदास्तिपूर्वःकालइत्याद्यबाधितप्रतीत्यातयोःस्वनिर्वाहकतयाप्रमेयत्वादिवत्स्वसंबंधसंभवाच्च।अज्ञानस्यचसर्वगतदेशकालोपादानत्वेनसर्वगतंब्रह्मप्रतिविषयसंबंध्यावरणत्वेनचदेशादिपरिच्छेदायोगात्।

चाज्ञानं)नत्वादज्ञानंसर्वगतमेववाच्यमिति नतस्यपरिच्छिन्नत्वमित्यर्थः। अज्ञानस्यापरिच्छिन्नत्वेयुक्त्यंतरंसर्वगतंब्रह्मेति। द्विविधमावरणंलोकेदृष्टं। एकंज्ञातृसंबंधि यथानेत्रपटलादि। एकंविषयसंबंधि यथांधकारादि। तत्रज्ञातृसंबंध्यावरणं(नेत्र)नयनपटलादिस्वयंपरिच्छिन्नमपिमहतःपर्वतादेर्दर्शनप्रतिबंधकं। तदिहाज्ञानस्यज्ञातृसंबंध्यावरणत्वेऽपरिच्छिन्नत्वंनसिद्ध्यतीत्यतउक्तंविषयसंबंधीति। अत्रचब्रह्मणोविषयत्वात्तस्यचापरिच्छिन्नत्वात्तदावरणभूतमप्यज्ञानंअपरिच्छिन्नमेववाच्यमित्यसिद्धिरित्य

र्थः । प्रतिज्ञातांवियदादेरूप्यादेश्चप्रतिपन्नोपाधिस्थनिषेधेहेत्वसिद्धिमुपपादयति ॥ प्रतिपन्नोपाधाविति ॥ कुत्रचिदिति ॥ देशांतरादावसत्त्वरूपपरिच्छिन्नत्वेप्रोच्यमानइत्यर्थः ॥ प्रतियोगिनइति ॥ अभावाभावस्यप्रतियोगिसत्त्वव्याप्यत्वादितिभावः । संगृह्णाति ॥ तथाचेति ॥ इत्यादिश्रुतिभिः प्रमाणैः कालादिर्नपरिच्छिन्नइत्यन्वयः । नपरिच्छिन्नः कालांतरेऽसत्त्ववान्नेत्यर्थः ॥ नोचेदिति ॥ कालादेःकालांतरादावसत्त्वरूपपरिच्छिन्नत्वांगीकारेइदानींकालोनास्तीत्यादिप्रतीत्याव्याहतिर्दुर्वारेत्यर्थः । एवंकालांतरादौनिषेधएवकालादिपरिच्छिन्नत्वमित्यंगीकृत्यदूषणमुक्तं । इदानींकालादिपरिच्छिन्नत्वंनामकिमेककाला

प्रतिपन्नोपाधौनिषेधस्यचकुत्रचित्कदाचिदभावेतत्रतदाप्रतियोगिनःसत्वापातात्।
तथाच । "कालादिर्नपरिच्छिन्नअग्रआसीद्यथामृतः । इत्यादिश्रुतिभिर्नोचेद्दुर्वाराव्याहतिर्भवेत् ।" किंचकालादिपरिच्छिन्नत्वंनतावदेककालादिमात्रेसत्वं

दिमात्रेसत्त्वंवा कालांतरादावसत्त्वंवेतिविकल्प्याद्यंनिराह ॥ किंचेत्यादिना ॥ एककालमात्रइति ॥ एककालादौसत्त्वमात्रंनासत्त्वमितियोज्यं । एवमुत्तरत्रापि । यथास्थितेतुएककालादिमात्रेसत्त्वोक्त्यामात्रपदव्यवच्छेद्यतयाकालांतरादावसत्त्वस्यलब्धत्वान्नापिकालांतरादावसत्त्वमितिपृथग्विकल्पानुपपत्तिरितिध्येयं । नचभवत्पक्षेपिकालांतरादावसत्त्वरूपस्यकालांतरादिपरिच्छिन्नत्वस्याग्रआसीदित्यादिश्रुतिविरोधेनदूषितत्वान्नापीतिपुनर्निषेधःकिमर्थइतिवाच्यं । दूषणांतरदानायपुनराशंक्यनिषे

धोपपत्तेरितिध्येयं ॥ रूप्यादाविति ॥ रूप्यादेरत्यंतासत्त्वांगीकारेणैककालेसत्त्वस्याभावात्साधनवैकल्यमितिभावः ॥ त्रैकालिकनिषेधेति ॥ तद्रूपमिथ्यात्वेत्यर्थः ॥ विरोधाच्चेति ॥ एककालादौसत्त्वरूपपरिच्छिन्नत्वहेतोःत्रैकालिकसत्तानिषेधाख्यमिथ्यात्वाभावव्याप्यत्वाद्विरोधइत्यर्थः ॥ धीमात्रमिति ॥ एककालेसत्त्वेनज्ञानमात्रमित्यर्थः । एककालेसत्त्वेनज्ञानमात्रंतु रूप्यादावस्त्येव । अन्यथाप्रवृत्तिर्नस्यादितिभावः ॥ मात्रशब्देनेति ॥ सत्त्वेनज्ञानमात्रंनतुसत्त्वरूपोर्थइत्यर्थसत्त्वंमात्रपदव्यवच्छेद्यमितिभावः ॥ भ्रमोक्ताविति ॥ सत्त्वेनज्ञानमात्रं तज्ज्ञानंतुप्रमारूपंनभवति किंतुसत्त्वमस्ति । परंतुतज्ज्ञानंभ्रमरूप

रूप्यादौममासिद्धेः । तेनत्रैकालिकनिषेधसाधनेविरोधाच्च । नापितथाधीमात्रं । मात्रशब्देनैककालादिमात्रेसत्वरूपार्थाभावोक्तौभ्रमोक्तौचप्रपंचेममासिद्धेः । प्रमाभ्रमसाधारणधीत्वसामान्योक्तावात्मन्यपितादृशभ्रमसंभवेनव्यभिचारात् । व्यावहारिकप्रमोक्तौरूप्यादावभावात् ।

मितिमात्रशब्दाभिप्रायइत्यर्थः । पूर्वोत्तरपक्षयोरीतिभेदएवनत्वर्थभेदः । ज्ञानस्यभ्रमत्वेऽर्थस्यासत्त्वनियमादितिद्रष्टव्यं ॥ प्रपंचइति ॥ प्रपंचेसत्त्वांगीकारेणसत्त्वरूपार्थाभावस्वरूपमात्रपदार्थस्यतथातज्ज्ञानेभ्रमत्वस्यचानंगीकारेणासिद्धिरित्यर्थः ॥ सामान्येति ॥ सामान्यतःप्रयुक्तस्यविशेषविकल्पेननिराकरणेऽनुमानमात्रोच्छेदइत्यर्थः । यावद्विशेषातिरिक्तंसामान्यंनास्तीत्यभिप्रेत्यदूषणमाह ॥ आत्मन्यपीति ॥ तादृशेति ॥ एकका(लादि)लमात्रेसत्त्वेनभ्रमसंभवादितिभावः ॥ व्यावहारि

केति ॥ एककाले(लादौ)सत्त्वप्रकारकव्यावहारिकप्रमाविषयत्वंमात्रशब्दार्थइत्यर्थः ॥ रूप्यादाविति ॥ व्यावहारिकप्रमा
विषयत्वाभावेनसाधनवैकल्यमितिभावः । पूर्वंदूषितमपिद्वितीयपक्षंदूषणांतरदानायाशंक्यनिराकरोति ॥ नापीति ॥ काला
तरादावसत्त्वरूपंकालादिपरिच्छिन्नत्वमितोपिनोपपद्यतइत्यर्थः । कुतोनोपपद्यतइत्यतोऽतिप्रसंगादित्याह ॥ तेनेत्यादि ॥ अ
यमर्थः । तेनकालांतरादावसत्त्वरूपपरिच्छिन्नत्वहेतुनायथेदानीमपिस्वोपाधावसत्त्वरूपंमिथ्यात्वंसाध्यते तथावयमपिवदामः ।
इदानींस्वदेशकालयोःसत्त्वेनकालांतरादावपिसत्त्वं(त्वसाधनं)किंनस्यादिति । नन्विदानींसत्त्वेनकालांतरादावपिसत्त्वसाधनेभा

नापिकालांतरादावसत्वं । तेनस्वकालादावप्यसत्वसाधनेप्रमाणविरोधस्याविशिष्टतयास्वकालादौ
सत्वेनकालांतरादौसत्वसाधनापातात् । रूपांतरेणासतोब्रह्मणःस्वरूपेणाप्यसत्वापाताच्च ।

विबाधकशंकादिरूपबाधकसद्भावान्नतत्साधनंयुक्तमितिचेत् तर्हिकालांतरेऽसत्त्वेनेदानीमप्यसत्त्वसाधनेसन्घटइत्यादिप्रत्यक्षबा
धस्याविशिष्टत्वादिति कालांतरेऽसत्त्वादिदानीमप्यसत्त्वमित्यस्यकेनचिद्रूपेणासतःप्रतीयमानस्वरूपेणाप्यसत्त्वमितिहिफलितो
र्थः । तत्रातिप्रसंगमाह ॥ रूपांतरेणेति ॥ निर्धर्मकतयापारमार्थिकत्व(त्वेन)रूपेणासतइत्यर्थः । यद्वामिथ्यात्वादिरूपेणास
तइत्यर्थः । किंचकालांतरेऽसत्त्वादिदानीमप्यसत्त्वसाधनेरूप्यादेर्वियदादेश्चकालांतरेऽसत्त्वादिदानीमपिस्वरूपेणासत्त्वंस्यात् ।
न्या. श्री. १४ नचेष्टापत्तिः । असद्विलक्षणस्वरू(पमंगीकृत्यतदनुपमर्देन)पांगीकारात् । असद्विलक्षणस्वरूपानुपमर्देनपारमार्थिकत्वाकारेणैवनि

षेधइतित्वत्सिद्धांतविरोधादित्याशयेनाह ॥ रूप्यादेरिति ॥ एतेनेति ॥ कालांतरादावसत्त्वेनेदानीमप्यसत्त्वसाधनेरूप्यादेरित्युक्तातिप्रसंगापातेनेत्यर्थः ॥ कदाचिदिति ॥ भाविबाधकदशायामित्यर्थः । तथाचतदानीमसत्त्वादिदानीमप्यसत्त्वमितिभावः ॥ शून्यवादीति ॥ तेनेदानींजगदसत्त्वांगीकारात् मायिनाचासद्विलक्षणत्वांगीकारादिदानीमप्यसत्त्वसाधनंशून्यवाद्युक्तिच्छर्दिरेवेत्यर्थः । ननुदेशपरिच्छिन्नत्वंनाम नदेशांतरेऽसत्त्वमेकदेशमात्रेसत्त्वंवाविवक्षितं येनोक्तदोषः किंत्वन्यदेवेति

रूप्यादेर्वियदादेश्चस्वकालेप्यसद्विलक्षणस्वरूपाभावापाताच्च । एतेनयत्सत्तत्सदा सर्वत्रसदेव । नहिरूपंकदाचित्कुत्रचिद्बंधोभवति । तथाचयत्कदाचित्कुत्रचिदसत्तत्सदासर्वत्रासदेवेतिवाचस्पतीयंशून्यवाद्युक्तयुक्त्युद्गिरणंनिरस्तं । ननुदेशपरिच्छिन्नत्वंसर्वमूर्तासंयोगित्वंवा परममहत्परिमाणानधिकरणत्वंवा महत्त्वानधिकरणपरिमाणाधिकरणत्वंवेतिचेन्न । आद्ययोरसंगेनिर्गुणेचब्रह्मण्यापिभावात्

तार्किकरीत्याशंकते ॥ नन्विति ॥ परिमाणाधिकरणत्वंविभुद्रव्येऽतिव्याप्तमतोमहत्त्वानधिकरणेतिपरिमाणविशेषणं । महत्त्वानधिकरणत्वमात्रंगुणेऽतिप्रसक्तमतःपरिमाणाधिकरणत्वमित्युक्तमितिद्रष्टव्यं ॥ आद्ययोरिति ॥ "असंगोह्ययंपुरुष" इतिश्रुतेःब्रह्मणोसंगत्वावगमात्सर्वमूर्तासंयोगित्वमस्ति । "केवलोनिर्गुणश्चे" तिश्रुतेर्ब्रह्मणोनिर्गुणत्वावगमात्परममहत्परिमाण

रूपगुणाभावेननपरममहत्परिमाणाधिकरणत्वंचास्तीत्यतिव्याप्तिरितिभावः ॥ गुणादाविति ॥ गुणकर्मादौगुणानंगीकारादितिभावः । तथाचभागासिद्धिरितिभावः । लक्षणत्रयस्याप्यवकाशप्रकृत्यादावसिद्धिःस्पष्टेतिनोक्तेतिद्रष्टव्यं । कालांतरासत्त्वाख्यानित्यत्वमेवकालतःपरिच्छिन्नत्वमितिपक्षेपूर्वानुक्तदूषणांतरमाह ॥ कालेति ॥ अन्योन्याभावादावित्यत्रादिपदेननित्यभूतप्रध्वंसाभावग्रहणं । अन्योन्याभावस्याऽनित्यत्वेसर्वपदार्थानांतादात्म्यापत्तिः । प्रध्वंसस्यानित्यत्वेचप्रतियोग्युन्मज्जनापत्तिरितिहृदयं ॥ तद्धीति ॥ वस्तुतःपरिच्छिन्नत्वमित्यर्थः । किंतात्विकभेदवत्त्वंवा कल्पितभेदवत्त्वंवा धर्मिसमसत्ताकभेदवत्त्वं

अंत्यस्यगुणादावप्यभावात् । कालपरिच्छिन्नत्वमन्योन्याभावादौप्रतिवाद्यसिद्धंचनतृतीयः तद्धिभिन्नत्वं । तस्यचतात्विकस्यप्रपंचेप्यभावात् । आत्मन्यप्यनृतव्यावृत्तिस्तात्विकीतिवक्ष्यमाणत्वाच्च । कल्पितस्यत्वात्मन्यपिभावात् धर्मिसमसत्वस्यरूप्येपिममाभावात्

वा उभयसाधारणभिन्नत्वमात्रंवा । नाद्यइत्याह ॥ तस्येति ॥ तथाचप्रपंचेत्वयातात्विकभेदवत्त्वानंगीकारादसिद्धिरित्यर्थः । आत्मन्यपिअनृतव्यावृत्तिरूपतात्त्विकभेदवत्त्वसत्त्वेनब्रह्मण्येवव्यभिचारश्चेत्याह ॥ आत्मन्यपीति ॥ नद्वितीयः । ब्रह्मण्येवव्यभिचारादित्याह ॥ कल्पितस्येति ॥ नतृतीयः । मन्मतेऽन्योन्याभावस्यधर्मिस्वरूपत्वेनासतिचधर्मिणएवाभावेनान्योन्याभावमात्रस्यैवानंगीकारेणधर्मिसमसत्ताकभेदवत्त्वंरूप्येऽसिद्धमितिसाधनवैकल्यमित्याह ॥ धर्मीति ॥ धर्मिसमसत्त्वस्येति

बहुव्रीहिः । तस्येत्यनुवर्तते । अनृतव्यावृत्तेस्तात्त्विकत्वेनधर्मिसमसत्ताकभेदवत्त्वस्यब्रह्मणिव्यभिचारोपिद्रष्टव्यः । नचतुर्थः । तत्रापिकिमध्यस्ताद्भिन्नत्वंविवक्षितमुतसत्याद्भिन्नत्वं । नाद्यः । अध्यस्ताद्भिन्नत्वस्यअमिथ्यात्वेनव्याप्ततयासत्यत्वसाधकत्वाद्विरुद्धत्वंस्यादित्याह ॥ भिन्नत्वेति ॥ अध्यस्ताद्भेदेन विद्यमानेननिमित्तेन नद्वितीयइत्याह ॥ सत्यादिति ॥ प्रपंचस्यमया सत्यत्वांगीकारादितिभावः ॥ स्वानुगतेति ॥ स्वान्प्रत्यनुगतत्वेनप्रतिभासमानंयद्वस्तुतत्रकल्पिताइत्यर्थः । विभक्तत्वा दननु

भिन्नत्वमात्रस्यचाध्यस्ताद्भेदेनसत्वेप्युपपत्तेः सत्याद्भेदस्यचासिद्धेः एतेनयदुक्तंप्रमाण
मालायां "विवादाध्यासिताः स्वानुगतप्रतिभासेवस्तुनिकल्पिताः । विभक्तत्वात ।
यथासर्पमालादिकंस्वानुगतेरज्ज्वाइदमंशेसदर्थेचब्रह्मण्यनुगच्छतिपटादिकंविभज्यते
सन्घटःसन्पटइतिप्रतीते" रितिनिरस्तं । विभक्तत्वंहिनतावद्विभिन्नत्वं । कादा
चित्कत्वंवा काचित्कत्वंवा । निरस्तत्वात् । नापिबाधकदशायांनिषिध्यमानत्वं

गतत्वादित्यर्थः । अननुगतंस्वानुगतेवस्तुनिकल्पितमितितदभिप्रेतोर्थः । सर्पमालादिकमित्यत्रादिपदेनबलीवर्दमूत्रग्रहणं । यथैकस्मिन्रज्जाविदमंशेऽयंसर्पःइयंमालाअयंबलीवर्दमूत्रखंडइत्याद्यारोपदर्शनात्स्वान्सर्पादीननुगतान्प्रत्यधिष्ठानतयानुगतेरज्जाविदमंशेसर्पादिकंकल्पितमित्यर्थः । अनुगच्छतिसति विभज्यतेऽननुगतंभवति । तदेवदर्शयति ॥ सन्नित्यादि ॥ विभक्तत्वादितिसामान्यतएवहेतोःकरणात्तदर्थतयाप्रसक्तपक्षानाशंक्यनिषेधति ॥ विभक्तत्वंहीति ॥ निरस्तत्वादिति ॥ आद्यस्य

वस्तुपरिच्छिन्नत्वरूपहेतुनिरासेनद्वितीयतृतीययोःकालपरिच्छिन्नत्वदेशपरिच्छिन्नत्वरूपहेतुनिरासेननिरस्तत्वादित्यर्थः ॥ सा ध्येति ॥ स्वानुगतप्रतिभासेवस्तुनिकल्पितत्वमपीदमेवेतिसाध्याविशिष्टयमित्यर्थः ॥ सुखदुःखादीति ॥ सुखादेर्ज्ञातैकसत्त्वे नस्वोत्पत्त्यनंतरंयावत्स्वसत्त्वंसर्वदाप्रकाशमानत्वेनकदाचिदेवप्रकाशमानत्वंनास्तीत्यर्थः ॥ अप्रयोजकत्वाचेति ॥ कदाचिदे वप्रकाशमानत्वरूपंविभक्तत्वंकल्पितत्वंविनासत्यत्वेनाप्युपपन्नमित्यप्रयोजकत्वाच्चेत्यर्थः । ननुनाप्रयोजकता सत्त्वेसर्वदाप्रका शप्रसंगेनकदाचिदेवप्रकाशमानत्वंनस्यादित्यनुकूलतर्कसद्भावादित्यतोऽत्रान्यथासिद्धिमाह ॥ युक्तोहीति ॥ सतोपिसत्यस्या

साध्याविशिष्टयात् । नापिकदाचिदेवप्रकाशमानत्वं सुखदुःखा(दौभागा)दिभोगेअसि द्धेः । अप्रयोजकत्वाच्च । युक्तोहिसतोपिप्रकाशसामग्र्याःकादाचित्कत्वेनकदाचिदेवेच्छा दिवत्प्रकाशोपि । नाप्यननुगतत्वं । अननुगतानांघटपटादीनांचलनादौरूपादौद्रव्य त्वादौध्वंसादावनात्मत्वादौचखपुष्पनृशृंगादीनांचासतिआत्मनश्चसदर्थेऽनध्यासात् ।

पिवस्तुनःइच्छादिवत्कदाचिदेवप्रकाशोपियुक्तइत्यन्वयः । प्रकाशसामग्र्याः इंद्रियार्थसंनिकर्षादिरूपायाः ॥ इच्छेति ॥ यथा कदलीफलादेःसत्त्वेपिनसर्वदाइच्छा किंनामार्थेंद्रियसन्निकर्षजन्यज्ञानादिरूपतत्सामग्र्यांसत्यामेवतथेत्यर्थः । एवंसंभावितान्प क्षान्निषिध्येतःपरंपराभिप्रेतंविभक्तत्वमाशंक्यनिराकरोति ॥ नापीति ॥ कुतोनेत्यतोव्यभिचारादित्याशयेनाह ॥ अननुग तानामिति ॥ नन्वननुगतस्यानुगतेऽध्यासोऽस्माभिःसाध्यते । तस्यचनघटादौव्यभिचारः । तत्रघटादौअननुगतत्वसद्भावे

पिचलनादीनामनुगतत्वाभावादित्यतोघटादीनामननुगतत्वसद्भावेपिचलनादीनामनुगतत्वमुपपादयति ॥ अस्तिहीत्यादिना ॥ आत्मासन्नित्यादीति ॥ आत्मासन्द्वितीयाभावःसन्नित्येवमात्मद्वितीयाभावयोरननुगतत्वेपिसदर्थस्यानुगमोद्रष्टव्यः । अतएवपूर्वमप्यात्मनश्चेत्यत्रद्वितीयाभावस्यचेत्यपिग्राह्यं । एवमव्याख्यानेघटपटौप्रतिचलनादिवत्सदर्थस्योभयानुगतत्वंनसिध्येदितिद्रष्टव्यं । किंचयद्यनेकेषामननुगतानामेकस्मिन्ननुगतेऽध्यासदर्शनात्प्रपंचस्यसदर्थेब्रह्मण्यध्यासउच्यतेतर्हिएकस्यापिरू

अस्तिहिघटश्चलतिपटश्चलतिघटोरूपीपटोरूपीघटोद्रव्यंपटोद्रव्यंघटोध्वस्तःपटोध्वस्तःअनात्माघटःअनात्मापटःखपुष्पमसत्नृशृंगमसत् आत्मासन्नित्यादिधीः ॥ ७ ॥

दृश्यतेचैकत्रानेकेषामिवैकस्यापिरूप्यस्यानेकेषुशुक्तिवंगादिष्वध्यासः। एवंचसदर्थस्यैवघटादिष्वारोपःकिंनस्यात् । एतेनविवादाध्यासितंसद्रूपेकल्पितं । प्रत्येकंतदनुविद्धतयाप्रतीयमानत्वात्। प्रत्येकंचंद्रानुविद्धजलतरंगचंद्रवदितिब्रह्मसिद्ध्युक्तंनिरस्तं।

प्यस्यानेकेषु शुक्त्यादिष्वध्यासदर्शनादेकस्यैवसदर्थस्यब्रह्मणोनेकेषुपटादिष्वेवाध्यासःकिंनस्यादितिवैपरीत्यमेवस्यादित्याह ॥ दृश्यतेचेति ॥ वंगं सीसं ॥ तदनुविद्धतयेति ॥ सूत्रेस्यूतानांनानामणीनांसूत्रानुस्यूततयायथाप्रतीतिस्तथाघटःसन्पटःसन्नितिसदर्थानुविद्धतयाप्रतीयमानत्वादित्यर्थः । यद्यदनुविद्धतयाप्रतीयते तत्तत्रकल्पितमितिसामान्यव्याप्तौदृष्टांतमाह ॥ प्रत्येकंचंद्रेति ॥ जलतरंगेषुप्रतिबिंबितचंद्रस्यायंचंद्रोयंचंद्रइत्यादिरूपेणगगनस्थचंद्रानुवेधोऽस्तीत्यवधेयं । ब्रह्मसिद्धि मा॰या

वादग्रंथविशेषः । प्रत्येकंचलनाद्यनुविद्धत्वेनप्रतीयमानयोर्घटपटयोश्चलनादावनध्यासेनव्यभिचारादितिदूषणमेतेनेत्यतिदिश्य दूषणांतरमाह ॥ खंडोगौरिति ॥ तत्र गोत्वे । तथाचोक्तहेतोःस्वानुविद्धतयाप्रतीयमानेगोत्वादौव्यक्तीनामकल्पितत्वात्खं डमुंडादिव्यक्तौव्यभिचारइत्यर्थः । उक्तहेतोःस्वरूपासिद्धिमप्याह ॥ किंचेति ॥ सन्घटःसन्शब्दइत्यादिज्ञानविषयतयाप्रती यमानेघटादौब्रह्मानुविद्ध(तयाप्रतीयमान)त्वंनास्तीतिकुतइत्यतआह ॥ रूपा(दिहीनमि)दीति ॥ रूपादीत्यादिपदेनगंधादि ग्रहणं । अशब्दमस्पर्शमरूपमित्यादिश्रुतेरित्यर्थः । ( नतावत्ब्रह्मचाक्षुषादिज्ञानविषयः । रूपादिहीनत्वात् । धर्मादिवत्इत्य

खंडोगौर्मुंडोगौरितिप्रत्येकंगोत्वानुविद्धस्यापिखंडादेस्त
त्रानध्यासात् । किंचरूपादिहीनमासंसारमज्ञानावृतं

नुमानमुक्तंभवति । नन्विदमयुक्तं । गुणेगुणानंगीकारेणरूपादावेवव्यभिचारादितिचेत्सत्यं । रूपादिशब्दस्यमहत्त्वसमानाधि करणोद्भूतरूपवत्त्वतद्वत्समवेतत्वादिरूपचाक्षुषत्वादिप्रयोजकधर्मपरत्वेनव्यभिचाराभावादित्यवधेयं ।) महत्त्वसमानाधिकर णोद्भूतरूपवत्त्वतद्वत्समवेतत्वरूपचाक्षुषत्वश्रावणत्वादिप्रयोजकधर्महीनमितिव्याख्येयं । यथाश्रुतेरूपरूपत्वतदभावादिषुव्य भिचारइतिध्येयं । तथाचब्रह्मचाक्षुषश्रावणादिज्ञानाविषयः । तत्प्रयोजकधर्मरहितत्वात् अतींद्रियवदित्यनुमानमुक्तंभवति । हेत्वंतरमाह ॥ आसंसारमिति ॥ तथाचब्रह्मनचाक्षुषादिज्ञानविषयः । आसंसारमज्ञानावृतत्वात् । व्यतिरेकेणघटादिवदि

त्यनुमानमुक्तंभवति । घटादौसंसारप्रसक्तेरेवाभावेनहेत्वभावोऽस्तीतिज्ञातव्यं । विमुक्तिकालीनेब्रह्मचैतन्येस्वरूपासिद्धिवारणायाऽऽसंसारमित्युक्तं । व्यतिरेकेणघटादिर्दृष्टांतः । तत्रसंसारप्रसक्तेरेवाभावेनहेत्वभावस्यसत्त्वादितिद्रष्टव्यं । हेत्वंतरमाह ॥ शब्दैकेति ॥ ब्रह्मनचाक्षुषादिज्ञानविषयः शब्दैकसमधिगम्यत्वाद्धर्मादिवत् व्यतिरेकेणघटादिवच्चेत्यनुमानंद्रष्टव्यं । ननुचाक्षुषादिज्ञानेतावत्सन्घटइत्यादिप्रतीयते । सच्चब्रह्मैवेतिअनुमानानांबाधइतिचेन्न । सत्तुब्रह्मनभवत्येव । तर्हिकिमितिपृच्छति ॥ किंत्विति ॥ उत्तरयति ॥ अनित्यइति ॥ ननुरूपादिराहित्याद्युक्तहेतुत्रययुक्तस्यापिब्रह्मणश्चाक्षुषेज्ञानेभानमस्तु कथमितिचे

शब्दैकगम्यंब्रह्मसन्घटःसन्शब्दइत्यादिचाक्षुषादिज्ञानेनभाति । किंत्वनित्योघटइत्यादौअ
नित्यत्वादिकमिवसत्वमपिघटगतमेव। नचस्वरूपेणाप्रत्यक्षस्यापिराहोश्चंद्रावच्छेदेनेवब्रह्मणो
पिघटाद्यवच्छेदेनप्रत्यक्षतेतियुक्तं । शब्दाद्यवच्छिन्नस्यगगनादेःश्रावणादित्वापातात् ।

त् व्यंजकविशेषसमवधानादितिवदामः । यथाहिरूपादिरहिततयास्वरूपेणप्रत्यक्षायोग्यस्यापिराहोःप्रत्यक्षीभूतचंद्रसंबंधोयदातदोपरागकालेचंद्रावच्छेदरूपव्यंजकसमवधानेनप्रत्यक्षत्वंदृष्टं । एवंस्वरूपेणरूपादिरहिततयाप्रत्यक्षायोग्यस्यापिब्रह्मणःप्रत्यक्षीभूतघटाद्यवच्छेदरूपव्यंजकसमवधानेनप्रत्यक्षत्वोपपत्तेरित्यप्रयोजकतामाशंक्यनिषेधति ॥ नचेति ॥ कुतोनचेत्यतोतिप्रसंगानाह ॥ शब्दादीति ॥ तथात्वेस्वरूपेणाश्रावणस्यापिगगनस्यशब्दसंबंधोयदातदाश्रावणीभूतशब्दावच्छेदेन तस्यापिश्रा

वणत्वंस्यादित्यर्थः । एवंस्पर्शावच्छेदेनवायोरपिस्पार्शनत्वंस्यादित्याद्यतिप्रसंगआदिशब्दार्थः । ननुराहोरिवोपपत्तिरित्युक्तमिति चेन्न । स्यादिदं यदिराहोःस्वरूपेणरूपादिरहिततयाप्रत्यक्षायोग्यत्वंस्यात् । नचैवं । नीलरूपांगीकारेणचाक्षुषतायास्सत्त्वात् । तर्हिकस्मान्नदृश्यतइतिचेत् दूरस्थत्वादिदोषयुक्तत्वात् । ननुतर्हिदूरस्थत्वादिदोषयुक्तत्वादेवराहुप्रतीतिःकदापिनस्यादिति चेन्न । राहुमंडलस्यदूरस्थत्वेपिपर्वणिचंद्रंग्रसितुंयदातत्संबद्धंभवति तदानीलरूपवतोराहोःशुक्लभास्वररूपोपेतचंद्रसंबंधाच्चाक्षुषत्वोपपत्तेः । लोकेनीलस्यवस्तुनोदूरस्थस्यापिसौरादिप्रकाशसंबंधेनचाक्षुषतायाअनुभवसिद्धत्वात् । प्रकृतेचब्रह्मणोरूपादि

राहोस्तुदूरदोषेणाज्ञातस्यनीलस्यशुक्लभास्वरचंद्रसंबंधाच्चाक्षुषतायुक्तेति ॥ ७ ॥ इ
तिपरिच्छिन्नत्वहेतुभंगः ॥ ४ ॥ ५ ॥ अंशित्वादिहेतुष्वपिमतद्वयेपिकार्यस्यकारणाभे
देनतदनाश्रितत्वात्सिद्धसाधनं । अनाश्रितत्वेनान्याश्रितत्वेनवोपपत्त्यार्थांतरंच ।

रहितत्वेनप्रत्यक्षायोग्यतयाचाक्षुषादिज्ञानेभानायोगात्सदनुविद्धतयाप्रतीयमानत्वंविवादाध्यासितेघटादौस्वरूपासिद्धमित्याशयेनाह ॥ राहोस्त्विति ॥ तथाचप्रत्यक्षायोग्यस्यापीत्युक्तमसदितिभावः ॥ ७ ॥ इतिपरिच्छिन्नत्वहेतुभंगविवरणं ॥ ५ ॥ मतद्वयेपीति ॥ आवयोर्मतइत्यर्थः ॥ कार्यस्येति ॥ कार्यकारणयोरभेदेनआश्रयाश्रयिभावानंगीकारात्एतत्तंतोरेवपटत्वेनैतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वंसिद्धमितिसिद्धसाधनमितिभावः ॥ अनाश्रितत्वेनेति ॥ अन्यत्रानाश्रितत्वंसिद्धमेवास्ति

एतत्तंतुष्वपिनास्तीत्युक्तेऽनाश्रितत्वेनाप्युपपत्तेः । अथवाविशेषनिषेधःशेषविध्यनुज्ञापकइतिन्यायेनएतत्तंतुष्वसत्त्वेऽन्याश्रितत्वमेवसिद्ध्येन्नमिथ्यात्वमित्यर्थः । अर्थांतराभावमाशंक्यनिषेधति ॥ यदिचेति ॥ अनाश्रितत्वेऽन्याश्रितत्वेवाप्रत्यक्षबाधः । एतत्तंत्वारब्धःपटस्तावत्प्रत्यक्षः । अंशित्वंचहेतुः । तत्रांशित्वंनामांशवत्त्वं पटस्यांशाश्चतंतवएव तद्वत्त्वंचाश्रयाश्रयिभावसंबंधेनैव । एवंचांशित्वहेतुर्यदाएतत्पटेप्राप्तस्तदैतत्पटस्यनानाश्रितत्वादिकमित्यर्थः । असत्त्वमत्यंताभावप्रतियोगित्वं । एतत्तंतुष्वसत्त्वसाधनेपिप्रत्यक्षबाधात् उक्तरीत्यांशित्वहेतोःपक्षधर्मताबलाद्वाएतत्तंतुष्वप्यसत्त्वंनसाधयितुंशक्यमित्यर्थः । उक्तमप्यधिक

यदिचप्रत्यक्षबाधादेतत्तंत्वारब्धस्यपक्षत्वेनपक्षधर्मताबलाद्वानानाश्रितत्वादिकं । तर्हिततएवैतत्तंतुष्वपिनासत्वं । अपिचात्यंताभावःप्रामाणिकोप्रामाणिकोवा । आद्येऽद्वैतहानिः । अंत्ये सिद्धसाधनं । एतेनात्यंताभावमात्रंसाध्यमितिनिरस्तं । अत्यंताभावोव्यावहारिकइतितुनिरस्तं ।

विवक्षयाह ॥ अपिचेति ॥ प्रामाणिकइत्यादि ॥ प्रामाणिकात्यंताभावप्रतियोगित्वंवासाध्यमप्रामाणिकात्यंताभावप्रतियोगित्वंवेत्यर्थः ॥ एतेनेति ॥ यावद्विशेषातिरिक्तसामान्याभावेनेत्यर्थः । व्यावहारिकात्यंताभावप्रतियोगित्वंसाध्यतइतिचेत्तत्राह ॥ अत्यंताभावइति ॥ प्रतियोगितदभावयोर्वैलक्षण्यस्यावश्यकत्वेनात्यंताभावस्यव्यावहारिकत्वेतत्प्रतियोगिनोप्रातिभासिकस्यजगतःपारमार्थिकत्वंस्यादित्येवंनिरस्तमित्यर्थः । ननुप्रामाणिकात्यंताभावप्रतियोगित्वमेवसाध्यते तथात्वेऽद्वैतहानिः

स्यादितिचेन्न । कुतइत्यतआह ॥ अभावरूपाइति ॥ नेहनानेत्यादिश्रुतीनांभावद्वैतनिषेधपरत्वमेवेतिभावः । अभावस्याद्वितीयस्यांगीकारेद्वितीयभावोप्यवर्जनीयइत्याह ॥ अभावइति ॥ तदाश्रयइति ॥ अभावस्यसाधिकरणत्वादभावाश्रयेब्रह्मणिअभावाश्रयत्वंआदिपदेनअभावेतदाश्रितत्वमित्यादिभावरूपबहुधर्मांगीकारापत्तिरित्यर्थः । ब्रह्मणीवाऽभावेपिव्यावहारिकाधर्मास्संत्येवेतिनानिष्टमेतदित्यस्वरसादाह ॥ अभावरूपेति ॥ अद्वितीयादीत्यादिपदेननिर्गुणनिराकारादिशब्दग्रहणं । अत्रकिंचित्प्रष्टव्यं । त्वन्मतेब्रह्मणःकस्मात्सर्वशब्दावाच्यत्वमंगीकृतमिति । शब्दप्रवृत्तिनिमित्तभूतानांद्रव्यगु(णकर्माभावा)णा

नन्वभावरूपाधर्मानाद्वैतंघ्नंतीतिमंडनोक्तेरभावद्वैतंस्वीकृतमितिचेन्न । अभावेअभावत्वादेस्तदाश्रयेचाभावाश्रयत्वादेःभावस्यावश्यकत्वात् । अभावरूपप्रवृत्तिनिमित्तसंभवेनब्रह्मणोऽद्वितीयादिशब्दवाच्यत्वापातात् । अखंडार्थेनवेदांतेनब्रह्माभावयोर्द्वयोरसिद्धेश्च ।

दीनांनिर्धर्मकेब्रह्मण्यभावादितिचेत् तर्हिब्रह्मणोद्वितीयादिशब्दवाच्यत्वंस्यात् । द्वितीयाभावरूपप्रवृत्तिनिमित्तस्यप्रामाणिकस्यब्रह्मणिसद्भावादित्यर्थः । किंचतात्विकेद्वितीयाभावेप्रमाणाभावेनतस्यासिद्धेश्च । ननुकथमसिद्धिः । "एकमेवाद्वितीय"मित्यादिवेदांतेनैवतत्सिद्ध्युपपत्तेरितिचेत्तत्राह ॥ अखंडार्थेनेति ॥ अयमर्थः । वेदांतानांलक्षणया ब्रह्ममात्रप्रतिपादकत्वरूपाखंडार्थत्वांगीकारेणाभावाप्रतिपादकत्वात्तदसिद्धिरेवस्यात् । ननुस्वातंत्र्येणाभावाप्रतिपादकत्वेपिब्रह्मविशेषणत्वेनतत्प्रतिपादकत्वं

भविष्यतीतिचेन्न । तथापिनिर्विशेषार्थनिष्ठत्वरूपाखंडार्थत्वहानिरेवेतिनवेदांतेनतत्सिद्धिरिति । व्यासज्यवृत्त्यभावाभिप्रायेण द्वयोरित्युक्तं । तथाप्यागमातिरिक्तप्रमाणेनतत्सिद्ध्युपपत्तिरितिचेत्तत्राह ॥ अन्यस्यचेति ॥ आगमातिरिक्तयोःप्रत्यक्षानुमानयोरतत्वावेदकत्वात्तत्वावेदकंप्रमाणमागमएवेतिवाच्यं । तेनचतत्सिद्धिर्नसंभवतीत्युक्तमित्यर्थः ॥ श्रौतेति ॥ अयमत्रकक्षाक्रमः । ब्रह्मव्यतिरिक्तंद्वितीयाभावंप्रामाणिकमंगीकुर्वतात्वयाब्रह्मव्यतिरिक्तस्यसर्वस्याभावबोधिकायाः "एकमेवाद्वितीय" मित्यादिश्रुतेरभावव्यतिरिक्तद्वितीयभावमात्रनिषेधपरत्वेनसंकोचःकार्योनत्वभावरूपद्वितीयनिषेधपरत्वेनेत्युच्यते तत्रवदामः ।

अन्यस्यचतत्वावेदकस्याभावात् । श्रौताद्वितीयपदस्याभावरूपद्वितीयनिषेधइव भावरूपद्वितीयनिषेधेपिमानांतरेणाग्रइतिस्वपदेनचाविरोधाविशेषेभावरूपद्वितीयनिषेधपरत्वेनैवसंकोचोनत्वभावरूपद्वितीयनिषेधपरत्वेनेत्यत्रहेत्वभावाच ।

अद्वितीयमित्यत्रब्रह्मव्यतिरिक्तंभावरूपंद्वितीयमस्ति अभावरूपंद्वितीयमेवनास्तीत्यपिसंकोचःक्रियतां विशेषहेत्वभावात् । नन्वस्तिविशेषहेतुः । तात्विकद्वितीयाभावंबोधयताऽद्वितीयपदेनपुनरभावनिषेधेस्वविरोधः । "यत्तदद्रेश्य" मितिमानांतरेणचविरोधः । तत्राभावरूपधर्मप्रतिपादनात् अतोभावरूपद्वितीयनिषेधपरत्वेनैवसंकोचःकर्तव्यइतिचेत् तर्हिभावरूपद्वितीयमात्रनिषेधेप्यग्रआसीदित्यादिकालसत्त्वप्रतिपादकेनस्ववाक्यांतर्गतपदेनविरोधः । सन्घटइत्यादिप्रत्यक्षरूपमानांतरेणचविरोधः

समानएवेति(भावरूपपदार्थमंगीकृत्याभावरूपपदार्थनिषेधपरत्वेनस्वतंत्रभावनिषेधपरत्वेनवासंकोचःक्रियतामिति)भावाभावरूपं पदार्थमंगीकृत्यभावरूपपदार्थएवस्वतंत्रभावनिषेधपरत्वेनैवसंकोचःक्रियतामिति । अभावस्यसत्यत्वांगीकारे(सत्यत्वज्ञानत्वानंतत्वादिरूपस्य)भावमात्रस्यापिसत्यत्वंलब्धं सर्वस्यापिभावस्यस्वाभावाभावत्वेनाभावरूपत्वादित्याह ॥ **भावस्यापीति** ॥ अभावस्यैवसत्यत्वमंगीकृत्याभावप्रतियोगित्वमात्रेणमिथ्यात्वांगीकारेबाधकमाह ॥ **अभेदस्येति** ॥ अन्योन्याभावरूपभेदप्रतियोगित्वेनेत्यर्थः । तादात्म्यप्रतियोगिकाभावस्यैवान्योन्याभावत्वादितिभावः । अभावस्यसत्यत्वांगीकारेभेदस्यसत्यत्वंसिद्ध्यती

**भावस्यापिस्वाभावाभावत्वाच्च । अभेदस्याप्यन्योन्याभावप्रतियोगित्वे**
**नतत्सत्यत्वासिद्धेश्च । भेदस्याप्यन्योन्याभावत्वेनतत्सत्यत्वापत्तेश्च ।**
**प्रध्वंसादेःप्रतियोगिनासहविरोधायस्वतुल्यसत्वप्रतियोगिसापक्षेत्वाच्च ।**

त्याह ॥ **भेदस्यापीति** ॥ अन्योन्याभावत्वेन अन्योन्याभावरूपत्वेन । अभावस्यसत्यत्वांगीकारेभावस्यापिसत्यत्वंप्राप्तमित्याह ॥ **प्रध्वंसादेरिति** ॥ अभावस्यप्रतियोगिनासहतावद्विरोधोस्ति । सचतुल्यसत्ताकयोरेव नभिन्नसत्ताकयोः तथात्वेप्रातिभासिकघटव्यावहारिकतदभावयोर्विरोधापत्तेः । तथाचप्रकृतेप्रध्वंसाद्यभावतत्प्रतियोगिनोर्विरोधायप्रतियोगिनोभावसमसत्ताकत्वमवश्यंवाच्यमेव । अतोऽभावस्यपारमार्थिकत्वेनतत्प्रतियोगिनोभावस्यापिपारमार्थिकत्वापत्तिरित्यर्थः । अभावस्यसत्यत्वां

गीकारेऽन्यदप्यनिष्टमापतितमित्याह ॥ भावत्वेति ॥ सर्वस्यापिभावस्यत्वयासत्त्वेनवाभावत्वेनवाऽन्येनवाकेनापिप्रकारेणनिर्वक्तुमशक्यत्वादेवहिअनिर्वचनीयत्वंस्वीकृतं सत्यत्वेकेनापिप्रकारेणनिर्वक्तव्यत्वापत्तेस्तच्चाशक्यं एवमेवाभावेअभावत्वानिर्वचनेतस्यानिर्वचनीयत्वप्राप्त्यापारमार्थिकसत्यत्वासंभवेनतदर्थमभावत्वादिनिर्वचनेमहाप्रयासस्तवस्यात् तच्चत्वयानिर्वक्तुमशक्यं अतस्तस्याप्यनिर्वचनीयत्वापातेनसत्यत्वंनस्यादितिभावः । अभावत्वप्रकारकप्रमांप्रतिविशेष्यत्वमभावत्वमित्यस्यात्माश्रयदुष्टत्वात् प्रतियोगिज्ञानाधीनज्ञानविषयत्वादेस्तार्किकरीत्यासमवायेऽस्मद्रीत्यासादृश्येचातिव्याप्तत्वादित्यादिद्रष्टव्यं । अभावस्य

भावत्वानिर्वचनेभावस्यैवाभावत्वानिर्वचनेऽभावस्यापिसत्वासिद्धेरभावेसत्वार्थंतवाप्यभावत्वादिनिर्वच(ने)नप्रयासापाताच्च । अभावेदृश्यत्वादेर्व्यभिचारस्य(वा)चाभाववद्भावस्यापिसत्यत्वेपिदृश्यत्वोपपत्त्याअप्रयोजकत्वस्य(वा)चापाताच्चाअभावस्यप्रतियोगिघटितत्वेनभावादपिविशिष्याद्वैतविरोधित्वाच्च।

सत्यत्वांगीकारेदृश्यत्वानुमानंचदुष्टंस्यादित्याह ॥ अभावइति ॥ नन्वभावव्यतिरिक्तत्वेसतीतिविशेषणंदीयतइतिचेत्तत्राह ॥ अभाववदिति ॥ यथाऽभावेविद्यमानोपिहेतुर्नतत्रमिथ्यात्वप्रयोजकोजातः किंतुतद्व्यतिरिक्तस्थलएवेत्युच्यते एवंपक्षेविद्यमानोपिहेतुःसाध्येप्रयोजकोनस्यादित्यप्रयोजकइत्यर्थः । यत्रव्यभिचारप्राप्तेतद्व्यतिरिक्तत्वेसतीतिविशेषणंदीयतेतत्रसर्वत्राप्यनयैवरीत्याऽप्रयोजकत्वंवदेयेतिसंप्रदायः ॥ प्रतियोगिघटितत्वेनेति ॥ प्रतियोगिनिरूप्यत्वेनेत्यर्थः । ब्रह्मव्यतिरिक्तस्यभाव

स्यसत्यत्वांगीकारेऽद्वैतविरोधस्त्वयादीयते तदपेक्षयापितवैवविशिष्याद्वैतविरोधःस्यात् ब्रह्मव्यतिरिक्तस्यद्वितीयाभावस्यसत्यत्वांगीकारेतस्यप्रतियोगिनिरूप्यत्वेनप्रतियोगिभूतभावरूपद्वितीयस्यापिसत्यत्वापत्त्याभावाभावद्वयस्यसत्यत्वांगीकारोविशिष्याद्वैतविरोधीत्याशयः ॥ **निरस्तत्वादिति** ॥ एतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वंनस्वरूपेण अनंगीकारात् नापिपारमार्थिकत्वेन । ब्रह्मवत्सत्यत्वेप्युपपत्त्यार्थांतरादितिनिरस्तमित्यर्थः । एतच्चमिथ्यात्वनिरुक्तिदूषणप्रस्तावेउक्तमपिअनुमानदूषणायात्रोच्य

**किंचात्यंताभावप्रतियोगित्वंस्वरूपेणवा पारमार्थिकत्वेनवा । नोभयमपि निरस्तत्वात् । अन्या(न्यत्रा)समवेतस्यांशित्वमेतत्तंतुसमवेतत्वंविना(ऽनुपपन्नमि)नयुक्तमितिविरुद्धश्च । कस्यचित्पटस्यसंयोगवृत्त्याएतत्तंतुषुसत्त्वादनैकांतिकश्च । समवायवृत्त्याएतत्तंतुष्वसत्त्वंतुविशेषणासत्वेनापियुक्तं । इहतंतुषुपटइतिप्रत्यक्षबाधितश्च ।**

तइत्यपौनरुक्त्यं । अंशित्वहेतोर्विरुद्धानैकांतिकबाधसत्प्रतिपक्षोपाध्याभाससाम्यानिक्रमेणदर्शयिष्यन्विरुद्धत्वंतावदाह ॥ **अन्यासमवेतस्येति** ॥ अंशित्वंतंतुरूपांशवत्त्वं तच्चाश्रयाश्रयिभावसंबंधेनैव नान्यथा एवंचान्यासमवेतत्वेनसिद्धस्यपटादेरंशित्वंएतत्तंतुसमवेतत्वंविना(ऽनुपपन्नं)नयुक्तं । तथाचांशित्वरूपहेतोरेतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वरूपसाध्येनविरोधइत्यर्थः । साध्याभावोपपादनायसंयोगवृत्त्येत्याद्युक्तं ॥ **समवायवृत्त्येति** ॥ तथाचसाध्यस्यापिसत्त्वान्नपूर्वोक्तोव्यभिचारइतिध्ये

यं ॥ विशेषणासत्त्वेनेति ॥ समवायस्यैवाप्रामाणिकत्वादितिभावः ॥ अप्रसिद्धेति ॥ एतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वाभावोह्येतत्तंतुषुसत्त्वं तच्चपक्षादन्यत्रकुत्राप्यप्रसिद्धमित्यर्थः । नचतंतुगतरूपादौविशेषणंप्रसिद्धमितिवाच्यं । अत्रहिएतत्तंतुनिष्ठैतत्पटमात्रस्यैवनपक्षत्वं किंनामैतत्तंतुनिष्ठतयासंप्रतिपन्नायेपदार्थाःपटतद्गतरूपादयस्तेसर्वेपिपक्षत्वेनाभिम(संहि)ताएवपटसमानन्यायत्वादतोनतत्रविशेषणप्रसिद्धिर्युक्तेतिहृदयं । पटमात्रपक्षीकरणंतुलाघवायेतिज्ञेयं । तथाचपटादिरित्यर्थः । सामान्यतःप्रसिद्धिरस्तीत्याह ॥ एतत्तंत्विति ॥ किंचिदिति ॥ यन्निष्ठात्यंताभावप्रतियोगितत्एतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वर

अयंपटःएतत्तंतुनिष्ठात्यंताभावप्रतियोगीन । एतत्तंत्वारब्धत्वाद्व्यतिरेकेणपटांतरवदितिसत्प्रतिपक्षश्च । नचाप्रसिद्धविशेषणता । एतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वंकिंचिन्निष्ठात्यंताभावप्रतियोगिसंसर्गाभावप्रतियोगित्वव्याप्यत्वात् ।

हितमेवाऽऽयास्यतीतिभावः ॥ संसर्गाभावेति ॥ अत्राभावप्रतियोगित्वाभावादित्युक्तेअन्योन्याभावप्रतियोगित्वदशायांघटादौव्यभिचारःस्यात् अन्योन्याभावप्रतियोगित्वदशायांअत्यंताभावप्रतियोगित्वव्यवहाराभावेनसाध्याभावात् अतःसंसर्गाभावेत्युक्तं । तावत्युक्ते(स्वरूपा)ऽसिद्धिः दृष्टांतेसाधनवैकल्यंचस्यात् । पक्षीभूतमत्यंताभावप्रतियोगित्वंदृष्टांतीकृतंप्रागभावप्रतियोगित्वंचसंसर्गाभावप्रतियोगित्वव्याप्यमेवनतुसंसर्गाभावप्रतियोगित्वरूपमेवतदुभयं । नहिनीलघटत्वंघटत्वंचैकमेवेत्यतोऽ

सिद्धिसाधनवैकल्यपरिहारायव्याप्यत्वादित्युक्तमितिद्रष्टव्यं ॥ साध्येति ॥ संयोगस्याव्याप्यवृत्तित्वेनस्वात्यंताभावसमाना धिकरणत्वादेतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वरूपंसाध्यमस्तीतिद्रष्टव्यं ॥ स्वेति ॥ यदधिकरणावच्छेदेनस्वयमस्तितदधिकर णावच्छेदेनस्वयमस्तीतितत्रसाध्यमेवनास्तीतिभावः । अव्याप्यवृत्तित्वमंगीकृत्याप्याह ॥ द्रव्यत्वेति ॥ तथाचपक्षधर्मावच्छिन्नसाध्यव्यापकोपाधिरयमितिभावः । ननुअयंपटएतत्तंतुनिष्ठात्यंताभावप्रतियोगीअंशित्वादित्यत्रएतत्तंत्वनारब्धत्वंनोपाधिः । हेतुसाध्ययोर्व्याप्यव्यापकभावग्राहकानुकूलतर्कसद्भावेनपक्षएवसाध्यव्यापकताभंगात् । यथोक्तं । " अनुकूलेनतर्केण

प्रागभावप्रतियोगित्ववदितिसामान्यतस्तत्सिद्धेः । एतत्तंत्वनारब्धत्वंचोपाधिः । नचैतत्तंत्वारब्ध

संयोगेसाध्याव्यापकं । आवयोस्संयोगःस्वात्यंताभावासमानाधिकरणइतिसंमतेः । द्रव्यत्वाव

च्छिन्नसाध्यव्यापकत्वोपपत्तेश्चउपाधिरेवप्रयोजकः । साध्यवतिब्रह्मणिउपाधिवद्धेतोरभावात् ।

सनाथेसतिसाधने । साध्यव्यापकताभंगात्पक्षेनोपाधिसंभव "इति । ततश्चानुकूलतर्कसत्त्वेसाध्येहेतुरेवप्रयोजकतयाप्राप्तोनोपाधिरित्यतआह ॥ उपाधिरेवेति ॥ साध्येउपाधिरेवप्रयोजकोनांशित्वहेतुः । कुतइत्यतआह ॥ साध्यवतीति ॥ ब्रह्मणः एतत्तंतुष्ववृत्तित्वेनैतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वरूपसाध्यवतिब्रह्मणिएतत्तंत्वनारब्धत्वरूपोपाधिवत् अंशित्वाख्यहेतोरभावेनतस्मिन्सत्यभवतोंशित्वहेतोस्तस्मिन्साध्येऽप्रयोजकत्वात् अतउपाधिरेवसाध्येप्रयोजकइतिभावः । ननुहेतुसाध्ययोर्व्याप्यव्यापकभावग्राहकानुकूलतर्कसद्भावदशायांसाध्यवतिपक्षेउपाधेरभावेन पक्षएवव्यभिचारादुपाध्यभावसाध्याभावयोर्व्याप्यभा

वात्साध्याभावाविनाभाव्यभावप्रतियोगित्वरूपोपाधिलक्षणाभावान्नास्योपाधित्वमित्यतआह ॥ अनुकूलतर्काभावेचेति ॥ व्यतिरेकहीनस्यापीति ॥ उपाधिव्यतिरेकसाध्यव्यतिरेकयोर्व्याप्तिहीनस्यापीत्यर्थः । अयमाशयः । स्यादेवंयद्यत्रानुकूलतर्कःस्यात् सचनहीतिवक्ष्यमाणरीत्यानास्त्येव तथाचैवमनुकूलतर्काभावेतुपक्षेसाध्यानिश्चयेनव्यभिचाराभावेनोपाध्यभाववतिपक्षेसाध्याभावसद्भावादुपाधित्वंयुक्तमेव । नन्वनुकूलतर्काभावदशायांपक्षएवोभयव्यतिरेकसद्भावात्कथंव्यतिरेकहीनस्यापीत्युक्तमितिचेन्न । पक्षादन्यत्रव्यतिरेकहीनस्यापीतिव्याख्यानात् । तंतुरूपादीनांचपक्षतुल्यत्वात् । एवंचयत्रैतत्तंत्वनारब्धत्वाभावः एतत्तंत्वारब्धत्वमितियावत् । तत्रैतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वाभावः एतत्तंतुषुसत्त्वमितियावत् । इत्येवमुपाधिसाध्य

**अनुकूलतर्काभावेचव्यतिरेकहीनस्याप्युपाधित्वाच्च । नह्यंशित्वंसाध्यंविनानयुक्तं । उक्तहेतुनैवैतत्पटार्थक्रियाकारित्वाद्यभावस्यापिसुसाधत्वादाभाससाम्यंच ।**

व्यतिरेकयोःपक्षेसद्भावेपितंतुरूपादीनांपक्षतुल्यतयापक्षादन्यत्रकुत्राप्यभावेनोपाधित्वमुपपद्यतएवेति । ननुकथमत्रानुकूलतर्काभावः यद्येतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वंनस्यात् तर्ह्यंशित्वंनस्यादितिहेतूच्छित्तिरूपबाधकतर्कस्यसत्त्वादित्यतआह ॥ नहीति ॥ साध्यंविनापियुक्तमेवेत्यर्थः । एतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वाभावरूपापादकस्यांशवत्त्वरूपंयदंशित्वंतदभावरूपंयदापाद्यंतदभावेनैवव्याप्ततयातर्कस्यविरुद्धत्वापत्त्याऽनुकूलतर्कस्यदुष्टत्वेनवक्तुमशक्यतयापक्षेव्यभिचाराभावेनयुक्तमेतत्तंत्वनारब्धत्वस्योपाधित्वमितिभावः ॥ उक्तहेतुनैवेति ॥ अयंपटः एतत्पटोचितार्थक्रियाकारीन । अंशित्वात्पटांतरवदित्याभासानु

मानेनसाम्यं । अत्रबाधादिकस्यत्वदुक्तानुमानेपिसाम्यादितिभावः ॥ ज्ञानेति ॥ ज्ञानंचब्रह्मैवेतिज्ञेयं ॥ सहोपलंभेति ॥ सहोपलंभनियमेत्यर्थः । यथोक्तंबौद्धेन" सहोपलंभनियमादभेदोनीलतद्धियो;" रिति । तद्विरहस्य उपलब्धिविरहस्य ॥ तद्वि रहेति ॥ ज्ञानविरहेत्यर्थः । तथाचासिद्धिरित्यर्थः । तर्ह्युपलब्धिविरहःकिंविरहप्रयुक्तइतिप्रसंगात्पृष्टवंतंप्रत्याह ॥ उपलब्धि

यतुविमतंज्ञानव्यतिरेकेणासत्ज्ञानव्यतिरेकेणानुपलभ्यमानत्वादितिविद्यासागरीयंबौद्धोक्तस होपलंभयुक्त्युद्गिरणं । तत्रज्ञानाद्भेदेनानुपलभ्यमानत्वंवाहेतुः । ज्ञानविरहप्रयुक्तोपलब्धिविर हवत्त्वंवा । आद्येऽसिद्धिः । घटस्यज्ञानमितिहिधीः नतुघटोज्ञानमिति । नांत्यः । ज्ञानस्योपल ब्धित्वेनतद्विरहस्यतद्विरहाप्रयुक्तत्वात् । उपलब्धिसामग्रीविरहप्रयुक्तत्वाच्च । यत्तुविमतंमिथ्या धीकालएवान्यथाप्रमितत्वाच्चित्रनिम्नोन्नतादिवत् । भारूपवस्तुसंलग्नत्वात्सवितृछिद्रवत् । न चासिद्धिः । इदानीमेव" इदंसर्वंयदयमात्मे "तिश्रुत्याअशेषाऽनात्मनःआत्मत्वप्रमितेः । घ टादिकंस्फुरतीतिभारूपवस्तुसंलग्नत्वाच्चेतिकौमुद्युक्तं । तत्राद्येऽन्यथेत्यस्ययद्यात्मत्वेनेत्यर्थः ।

सामग्रीति ॥ चित्रेति ॥ सभायामपिचित्रभित्तौलिखितंयन्निम्नोन्नतादिकंतत् अविद्यमानमेवलिखितमस्तीतिधीकालएवद्र ष्टुरन्यथाप्रतीयतइत्यर्थः ॥ असिद्धिरिति ॥ हेतुद्वयस्यापीत्यर्थः । पक्षेहेतुद्वयस्यापिसत्त्वंक्रमेणोपपादयति ॥ इदानीमेवे

ति ॥ धीकालएवेत्यर्थः ॥ सदात्मेति ॥ सन्योयमात्मातदात्मत्वेनेत्यर्थः ॥ असिद्धिरिति ॥ अस्माकंपक्षेऽसिद्धत्वादित्यर्थः ॥ व्यर्थेति ॥ प्रतिपन्नोपाधौनिषेधप्रतियोगित्वेनप्रतीयमानत्वादित्येतावतापूर्तौधीकालएवेतिविशेषणंव्यर्थमित्यर्थः । तत्त्यागेचसाध्याविशिष्टत्वादितिभावः । सवित्रादेरपिमिथ्यात्वान्नतत्रव्यभिचारइत्यस्वरसादुक्तमात्मनिचेति । तत्रभारूपवस्तुसंलग्नत्वरूपहेतोरेवाभावान्नव्यभिचारइत्यतआह ॥ तस्यापीति ॥ सवितुरात्मनश्चेत्यर्थः ॥ आद्यइति ॥ एतत्पटात्यंताभावए

तदासदात्मत्वेनप्रमितत्वस्यामिथ्यात्वव्यासत्वाविरुद्धोहेतुः । यदिप्रातिपन्नोपाधिस्थनिषेधप्रतियोगित्वेनेति तर्ह्यसिद्धिः । व्यर्थविशेषणताच । द्वितीयस्तुसवित्रादावात्मनिचानैकांतिकः । तस्यापिसविताप्रकाशतेआत्मास्फुरतीतिभारूपसंलग्नत्वादितिदिक् ।

एतेन नवीनानामनुमानानिनिरस्तानि । आद्येसिद्धसाध(नादि)नदोषात् । द्वितीये अव्याप्यवृत्तित्वानधिकरणशब्देनावयवावृत्तित्वोक्ताववयव्यादेरपक्षत्वापातात् ।

तत्तंतुनिष्ठः एतत्पटानाद्यभावत्वात् एतत्पटान्योन्याभाववदित्याद्यनुमानइत्यर्थः ॥ सिद्धेति ॥ कार्यकारणयोरभेदेनतंतोरेवपटत्वेनस्वस्मिन्स्वस्याभावेनपटात्यंताभावस्यतंतुनिष्ठत्वंसिद्धमेवेत्यर्थः ॥ द्वितीयइति ॥ ब्रह्मप्रमान्येनेत्यादिविप्रतिपत्तिवाक्योक्तविशेषणत्रयवत्त्वेसति अव्याप्यवृत्तित्वानधिकरणंस्वसमानाधिकरणात्यंताभावप्रतियोगि अनात्मत्वात्संयोगवदितिद्वितीयानुमानइत्यर्थः ॥ अवयवावृत्तित्वोक्ताविति ॥ कथमिदंलभ्यतइतिचेदुच्यते । संयोगादिकंअव्याप्यवृत्तीत्युक्तेआश्र

यंव्याप्यनवर्ततेकिंनामाश्रयैकदेशेतदवयवेस्तीतिलभ्यते । तथाचाव्याप्यवृत्तित्वंनामाऽवयववृत्तित्वं । अव्याप्यवृत्तित्वानधिकरणत्वंनामअवयवावृत्तित्वंलभ्यतइतिद्रष्टव्यं ॥ अवयव्यादेरिति ॥ अवयवरहितत्वेनतदवृत्तिनोगगनादेरेवपक्षत्वापत्त्यावयव्यादेरवयववृत्तिनःपक्षत्वंनस्यात् । तथाचावयव्यादेर्मिथ्यात्वंनसिद्ध्येदित्यर्थः । नन्वव्याप्यवृत्तित्वंनामस्वसमानाधिकरणात्यंताभावप्रतियोगित्वं अव्याप्यवृत्तित्वानधिकरणत्वंचस्वसमानाधिकरणात्यंताभावाप्रतियोगित्वमितिविवक्षितं नावयवावृत्तित्वं अतोऽवयव्यादेःपक्षत्वोपपत्तिरित्यतआह ॥ स्वेति ॥ बाधितत्वादिति ॥ तथाचस्वसमानाधिकरणात्यंताभावाप्रति

स्वसमानाधिकरणात्यंताभावाप्रतियोगित्वोक्तौचतदप्रतियोगिनितत्प्रतियोगित्वस्यबाधितत्वात् । अनात्मत्वस्यानिरस्तत्वाच्च । तृतीये स्वरूपेणात्यंताभावप्रतियोगित्वेसाध्येअत्यंतासत्वापातात् ।धर्मावच्छेदेनतत्प्रतियोगित्वेसाध्येअर्थांतरत्वात् । नित्यद्रव्याणामपिकालेसत्वेनदृष्टांतस्यसाध्यवैकल्याच्च । चतुर्थे

योगिनिविमतेस्वसमानाधिकरणात्यंताभावप्रतियोगित्वसाधनेबाधः ॥ निरस्तत्वादिति ॥ जडत्वभंगे "नतावदात्मत्वंजाति" रित्यादिनानिरस्तत्वादितिभावः ॥ तृतीयइति ॥ " विमतंनित्यद्रव्यान्यत् केवलान्वय्यत्यंताभावप्रतियोगि । पदार्थत्वात् नित्यद्रव्यव" दितितृतीयानुमानइत्यर्थः ॥ धर्मावच्छेदेनेति ॥ पारमार्थिकत्वाकारेणेत्यर्थः ॥ अर्थांतरत्वादिति ॥ ब्रह्मवत्सत्त्वेप्युपपत्त्यार्थांतरत्वादित्यर्थः ॥ नित्यद्रव्याणामपीति ॥ इदानीमाकाशइत्यबाधितप्रतीतेःसत्त्वादित्यर्थः ॥ चतुर्थइ

ति ॥ “ आत्मत्वावच्छिन्नधर्मिताकोभेदःआत्माअनात्मानेत्येवंरूपःनपरमार्थसत्प्रतियोगिकः । अनात्ममात्रप्रतियोगिकत्वात् शुक्तिरूप्यप्रतियोगिकभेदवदि” तिचतुर्थानुमानइत्यर्थः ॥ इत्यपीति ॥ यथानपरमार्थसत्प्रतियोगिकइतिआत्मधर्मिकभेदप्रतियोगिनोऽनात्मनःपारमार्थिकत्वाभावःसाध्यते । एवंनव्यावहारिकसप्रतियोगिकइत्यपिसुसाधत्वेनआत्मधर्मिकभेदप्रतियोगिनोव्यावहारिकसत्वमपिनस्यादित्यर्थः ॥ वक्ष्यमाणेति ॥ सन्घटइत्यादिप्रत्यक्षबाधादिरूपवक्ष्यमाणदोषेत्यर्थः ॥ ७ ॥ इत्यंशित्वहेतुभंगविवरणं ॥ ६ ॥ स्वबाधकेति ॥ दिदर्शयिषितोपाध्यधिकरणंस्वशब्दार्थः । शुक्तिरूप्येदृष्टांतेमिथ्यात्वमस्ति

नव्यावहारिकप्रतियोगिकइत्यपिसुसाधत्वेनाभाससाम्यात् । वक्ष्यमाणदूषणगणग्रासाच्च ॥७॥इत्यंशित्वादिहेतुभंगः ॥६॥ सोपाधिकाश्चदृश्यत्वादयः । स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वस्यतदबाध्यबाधकंप्रतिनिषेध्यत्वेनाविषयत्वस्यवापक्षाद्व्यावृत्तस्यसमव्याप्तिमतो

उपाधिश्चास्ति । तथाहि । स्वशब्देनशुक्तिरूप्यंतद्बाधकत्वेनाभिमतंयन्नेदंरजतमितिज्ञानंतदबाध्योयोदोषःकाचादिस्तज्जन्यभ्रमरूपज्ञानविषयत्वेनतत्प्रयुक्तभानत्वस्यसत्त्वात् । दृश्यत्ववतिपक्षेचोपाधिर्नास्ति । तथाहि । स्वशब्देनप्रपंचः तद्बाधकत्वेनाभिमतंयद्वेदांतजन्यचरमवृत्तिरूपंज्ञानं तदबाध्यदोषप्रयुक्तभानत्वंनास्ति जगद्भ्रमनिमित्तेमायाऽविद्या(दि)रूपेदोषेस्वबाधकाभिमतबाध्यत्वस्यैवसत्त्वेनविशेषणाभावप्रयुक्तविशिष्टाभावस्यैवसत्त्वात्साधनाव्यापकइतिभवत्युपाधिः । दोषप्रयुक्तभानत्वमात्रोक्तौसाधनव्यापकतास्यादतःस्वबाधकाभिमताबाध्येतिदोषविशेषणं ॥ तदबाध्येति ॥ स्वबाधकाभिमताबाध्येत्यर्थः । तथा

चमिथ्यात्ववतिरूप्येऽउपाधिरस्ति । तथाहि । स्वबाधकाभिमतंयन्नेदंरूप्यमितिज्ञानंतदबाध्यंयद्बाधकज्ञानंस्वयमेव स्वेनैवस्वस्याबाध्यत्वात् तत्प्रतिनिषेध्यत्वेनविषयत्वमस्ति । साधनवतिचपक्षेनास्ति । स्वबाधकाभिमतंयद्बाधकज्ञानंचरमवृत्तिरूपंतद्बाध्यबाधकंप्रत्येवनिषेध्यत्वेनविषयत्वमस्ति नतुतदबाध्यबाधकंप्रतिनिषेध्यत्वेनविषयत्वं । जगद्बाधकस्यवेदांतजन्यचरमवृत्तिरूपज्ञानस्यकतकरजोवद्वेणुसंघर्षजाग्निवच्चस्वेनैवबाध्यत्वात् । यथोक्तं । " वेणुसंघर्षजोवह्निर्दग्ध्वाशाम्यतितद्वनं । एवंगुणव्यत्ययजोवेदःशाम्यतितद्यथे "ति । वेदोवृत्तिज्ञानमित्यर्थः । एवंचपक्षेस्वबाधकाभिमताबाध्यबाधकंप्रतिनिषेध्यत्वेनविषयत्वंना

व्यतिरेकव्याप्तिमतश्चोपाधित्वात् । नचपर्वतावयववृत्त्यन्यत्वापर्वतीयव
ह्निसामग्रीयुक्तत्वादेरिवपक्षमात्रव्यावर्तकविशेषणवत्त्वात्पक्षेतरत्वं ।

स्तीतिविशेषणाभावप्रयुक्तविशिष्टाभावस्यसत्त्वात्साधनाव्यापकत्वमित्यर्थः । पक्षेसाधनाव्यापकतालाभायस्वबाधकाभिमताबाध्येतिबाधकज्ञानविशेषणोपादानं ॥ व्यतिरेकेति ॥ साध्याभावाविनाभाव्यभावप्रतियोगित्वस्योपाधित्वेनउपाध्यभाववतिब्रह्मणिसाध्याभावसत्त्वादित्यर्थः ॥ पर्वतेति ॥ अन्यत्वस्यकेवलान्वयित्वेनसाधनव्यापकत्वात्साधनाव्यापकत्वार्थंपर्वतावयववृत्तीत्युक्तं । नन्वथापिसाधनव्यापकत्वमेवपर्वतेपर्वतावयववृत्तिरूपाद्यन्यत्वसद्भावादितिचेन्न । अन्योन्याभावस्यप्रतियोगितावच्छेदकव्यधिकरणत्वेनपर्वतावयववृत्तित्वरूपप्रतियोगितावच्छेदकवतिपर्वतेतदन्यत्वप्रतीतेर्विरुद्धत्वेनसाधनाव्यापकत्वमेवे

त्यवधेयं । वह्निसामग्रीयुक्तत्वस्यापिसाधनव्यापकत्वात्साधनाव्यापकत्वलाभायापर्वतीयेत्युक्तं । ननुपर्वतावयववृत्तीत्यस्यनप क्षमात्रव्यावर्तकत्वं पर्वतावयवगतरूपादिव्यावर्तकत्वात् । तथाचकथंपर्वतावयववृत्त्यन्यत्वस्यपर्वतेतरत्वमितिचेत् सत्यं । पक्ष मात्रव्यावर्तकविशेषणवत्त्वादित्यापाततः वस्तुतस्तुहेतुसाध्ययोर्व्याप्तिग्राहकानुकूलतर्कसद्भावेनसाध्यस्यपक्षेनिश्चितत्वादुपाधेः साध्यव्यापकताग्राहकानुकूलतर्काभावेपक्षएवसाध्यव्यापकताभंगात्पर्वतावयववृत्त्यन्यत्वादेर्नोपाधित्वंयथातथाप्रकृतयोरप्युपा ध्योर्मिथ्यात्वव्यापकताग्राहकानुकूलतर्काभावान्नोपाधित्वमितिशंकितुरभिप्रायः । अतएववक्ष्यमाणानुकूलतर्कैःसाध्यव्यापक

वह्निनाधूमेसाध्येआर्द्रेंधनप्रभववह्निमत्त्वादेरिववक्ष्यमाणानुकूलतर्कै स्साध्यव्यापकत्वनिश्चयात् । बाधितेपक्षेतरत्वस्याप्युपाधित्वाच्च ।

तानिश्चयादित्यनुकूलतर्केणसाध्यव्यापकतानिश्चयंवक्ष्यतीतिद्रष्टव्यं । प्रकृतोपाध्योःपक्षेतरत्वतुल्यत्वंपरिहर्तुंअनुकूलतर्करूपा धेःसाध्यव्यापकतानिश्चयोस्तीत्याह ॥ वह्निनेति ॥ आर्द्रेंधनप्रभववह्निमत्त्वोपाधेःसाध्येनधूमेनव्यापकत्वग्राहक आर्द्रेंधनोत्क र्षेणधूमोत्कर्षरूपानुकूलतर्कोस्ति । एवंप्रकृतोपाध्योरपिसाध्यभूतभ्रमविषयत्वरूपमिथ्यात्वव्यापकताग्राहकोदोषोत्कर्षेणभ्रमो त्कर्षरूपानुकूलतर्कोस्ति । अतःसाध्यव्यापकत्वनिश्चयादुपाधित्वंयुक्तमित्यर्थः । साध्यव्यापकताग्राहकानुकूलतर्काभावात्पक्षेतर त्वस्योपाधित्वंनास्तीत्यंगीकृत्यानुकूलतर्कोपपादनंकृतं । वस्तुतस्तुक्वचित्पक्षेतरत्वमप्युपाधिरेवेत्याह ॥ बाधितइति ॥ तर्हिप्र

कृतानुमानेकथंबाधितत्वमित्यतआह ॥ इहचेति ॥ यथावह्निरनुष्णःपदार्थत्वादित्यत्रबाधेनहेतुसाध्ययोर्व्याप्तिग्राहकानुकूलतर्काभावेनपक्षेसाध्यव्यापकताभंगा(योगे)भावेनतत्रवह्नीतरत्वमुपाधिरेव तद्वदत्रापिसन्घटइत्यादिप्रत्यक्षबाधेनहेतुसाध्ययोर्व्याप्तिग्राहकानुकूलतर्काभावात्पक्षेसाध्यव्यापकत्वभंगाभावेनोक्तोपाध्योः पक्षमात्रव्यावर्तकविशेषणवत्त्वेनपक्षेतरत्वेप्युपाधित्वंयुक्तमित्यर्थः । पक्षमात्रव्यावर्तकविशेषणवत्त्वरूपपक्षेतरत्वशंकायाअविषयमुपाधिमाह ॥ यद्वेति ॥ ननुविपरीतप्रमाविषयत्वरूपोपाधेरपिदृश्यत्वहेतुनापक्षेसाध्यमानत्वेनसाधनव्यापकत्वान्नोपाधित्वमित्यतउक्तं तस्मिन्साध्यइति । नचैतददृष्टचरमित्यतो

**इहचवक्ष्यमाणप्रत्यक्षादिबाधात् । यद्वायथानुकूलतर्काभावान्मित्रातनयत्वेनश्यामत्वे**
**साध्येशाकपाकजत्वं तस्मिन्साध्येश्यामत्वमुपाधि स्तथेहापिबाध्यत्वादिरूपेमिथ्यात्वे**
**साध्येविपरीतप्रमाविषयत्वदोषप्रयुक्तभाज्ञानत्वादिकं तस्मिन्साध्येमिथ्यात्वमुपाधिरस्तु ।**

यथेत्युक्तं । हेतुसाध्ययोर्व्याप्तिग्राहकानुकूलतर्काभावादित्यर्थः । मित्रातनयत्वेनैवहेतुनागर्भस्थस्यशाकपाकजत्वमपिसाध्यतेऽतःसाधनव्यापकत्वमित्यतउक्तंतस्मिन्निति ॥ इहापीति ॥ दृश्यत्वमिथ्यात्वयोरपिव्याप्तिग्राहकानुकूलतर्काभावादित्यर्थः । ननुविपरीतप्रमाविषयत्वदोषप्रयुक्तभानत्वयोरेवमिथ्यात्वेनकथमुपाधित्वमित्यतउक्तंबाध्यत्वादीति । यदानयोरुपाधित्वंतदामिथ्यात्वंबाध्यत्वादिरूपमन्यदेवोच्यतइत्यर्थः । ननुतत्रमित्रातनयत्वेनैवहेतुनायुगपदेवगर्भस्थःशामःशाकपाकजश्चेत्येवंशामत्व

शाकपाकजत्वयोरुभयोरपिसाधनंक्रियते । ततश्चनपरस्परोपाधित्वंयुक्तं । एवंदृश्यत्वेनहेतुनापक्षेमिथ्यात्वविपरीतप्रमाविषयत्वयोर्मिथ्यात्वदोषप्रयुक्तभानत्वयोर्वायुगपदेवसाधनंक्रियतेऽतोनपरस्परोपाधिग्रस्तत्वमित्यतआह ॥ युगपदिति ॥ कथमित्यतआह ॥ मिथ्यात्वएवेति ॥ ननुबाध्यत्वरूपेमिथ्यात्वेपि कथंविपरीतप्रमाविषयत्वस्योपाधित्वं विपरीतप्रमाविषयत्वस्यैवबाध्यरूपत्वेनतयोरेकत्वादित्यतआह ॥ बाधइति ॥ यत्रेदंरजतमितिभ्रांतिपूर्वकंनेदंरजतमितिज्ञानंजायतेतद्बाधइत्युच्यते । अतएव" पूर्वप्रसंजितान्यथाकारविलोडकंज्ञानंबाध "इतिबाधलक्षणमाहुः । विपरीतप्रमातुनभ्रांतिपूर्विका यथामार्गेगच्छतःपुरु

**युगपदुभयसाधनेत्वर्थांतरं । मिथ्यात्वएवविप्रतिपत्तेः। बाधो**
**भ्रांतिपूर्वकःविपरीतप्रमातुनेतितयोर्भेदः । यद्वाअधिष्ठा**
**नाभिमतसमसत्ताकदोषवद्धेतुजन्यज्ञानविषयत्वमुपाधिः ।**

षस्यइदंरजतमितिभ्रमप्रसक्त्यभावेपिशुक्तिंदृष्ट्वाझडितिइदंरूप्यंनभवतीतिज्ञानंजायतेसाविपरीतप्रमेतितयोर्भेदइत्यर्थः । प्रमायाविपरीतत्वंचनिषेधविषयकत्वादित्यवगंतव्यं ॥ अधिष्ठानेत्यादि ॥ मिथ्यात्ववतिरूप्येऽधिष्ठानाभिमतशुक्तिसमसत्ताककाचादिदोषवदिंद्रियादिजन्यज्ञानविषयत्वमस्तीतिसाध्यव्यापकः दृश्यत्ववतिपक्षेउपाधिर्नास्ति प्रपंचविषयकज्ञानजनकेमायाविद्यारूपदोषेप्रपंचारोपाधिष्ठानभूतब्रह्मसमसत्ताकत्वाभावेनविशेषणाभावप्रयुक्तविशिष्टाभावस्यसत्त्वात्साधनाव्यापकत्वमित्यर्थः ।

अस्योपाधेः पक्षमात्रव्यावर्तकविशेषणवत्त्वेनपक्षेतरत्वमितिशंकावारणायउपाधौविशेषणकृत्यंदर्शयति ॥ ब्रह्मणइति ॥ बौद्ध कल्पितायेदोषाः यदनृतंतदप्रमाणंदृष्टंयथोन्मत्तवाक्यं । अनृतंचपुत्रकामःपुत्रकामेष्ट्यायजेतेत्यादिवेदवाक्यं कृतायामपीष्टौपु त्रजन्मानुपलंभादित्येवमनृतव्याघाताद्यास्तद्वान्योहेतुर्वेदरूपकरणंतज्जन्यज्ञानविषयत्वेपिमिथ्यात्वाभावेनव्यभिचारात्समव्या प्त्यभावादित्यर्थः । विशेषणं दोषाणांविशेषणमित्यर्थः । तथाचवेदेदोषाणांबौद्धेनकल्पि(तया)तानांप्रातिभासिकत्वेनाधिष्ठाना

ब्रह्मणोपिबौद्धकल्पितदोषवद्वेदजन्यज्ञानविषयत्वात् । समव्याप्त्यर्थमधिष्ठानसमस
त्ताकेतिविशेषणं । ननुपक्षव्यावृत्त्यर्थं । येनपक्षेतरत्वंस्यात् । यद्वावेदतात्पर्यविष
याद्धर्माधर्मादिरूपात्साक्षिवेद्यात्सुखदुःखादिरूपाद्वापक्षैकदेशाद्व्यावृत्तंश्रुतितात्पर्या
विषयत्वंदोषजन्यधीविषयत्वंवापक्षमात्राद्व्यावृत्तंप्रातिभासमात्रशरीरत्वंवोपाधिः ।

भिमतब्रह्मसमसत्ताकत्वाभावेनतादृशदोषवद्धेतुजन्यज्ञानविषयत्वरूपोपाधेरेवाभावेनोपाधिपुरस्सरव्याप्तौनव्यभिचारइतिभा वः । पक्षव्यावृत्त्यर्थं पक्षमात्रव्यावृत्त्यर्थं । समग्रपक्षव्यावृत्तोपाधिमुक्त्वापक्षैकदेशव्यावृत्तोपाधिद्वयमाह ॥ यद्वेति ॥ श्रुति तात्पर्याविषयत्वस्यघटादिप्रपंचेसत्त्वेपिधर्माधर्मादिरूपपक्षैकदेशव्यावृत्त्युपपादनायवेदतात्पर्यविषयादित्युक्तं । धर्मादेःश्रुतिता त्पर्याविषयत्वाभावादितिभावः । दोषजन्यधीविषयत्वस्यपरमतेघटादौसत्त्वेपिसुखदुःखादिरूपपक्षैकदेशव्यावृत्त्युपपादनायसा

क्षीत्युक्तं । साक्षिरूपज्ञानस्यदोषजन्यत्वाभावादितिभावः । ननुदृष्टिसृष्टिपक्षेसर्वस्यापिजगतःप्रतिभासमात्रशरीरत्वेनप्रातिभासिकत्वात् साधनव्यापकउपाधिरित्यतआह ॥ **नचेति** ॥ **तवापीति** ॥ तवमतेपीत्यर्थः । कुतोनेत्यतआह ॥ **प्रतिकर्मेति** ॥ देवदत्तज्ञानस्यैवायंविषयइत्येवमादिरूपव्यवस्थेत्यर्थः । परेणहिब्रह्मरूपेज्ञानेघटादीनामध्यासाद्युगपत्सर्वेषांप्रकाशप्रसक्तौयदिंद्रियसन्निकर्षजन्यांतःकरणवृत्त्यायदवच्छिन्नचैतन्यावरणाज्ञानशक्त्यपगमस्तंप्रत्येवतच्चैतन्यरूपज्ञानेनप्रकाशतइत्येवंव्यवस्थांगीक्रियते साद्दृष्टिसृष्टिपक्षेनयुज्यते अन्योन्याश्रयात् । सतिचैतन्यरूपेज्ञानेतन्मात्रशरीरघटादिस्वरूपसिद्धिः तत्स्वरूपेचसतितेनेंद्रियसन्निकर्षेजातेतदवच्छिन्नचैतन्यावरकाज्ञानशक्त्यपगमानंतरंचैतन्यरूपज्ञानसिद्धिरिति । घटादेःप्रतिभासमात्रशरीरत्वे

**नचतवापिजगत्प्रतिभासमात्रशरीरंप्रतिकर्मव्यवस्थाद्ययोगादितिदिक् ॥ ७ ॥**

नसन्निकर्षात्पूर्वंसत्त्वाभावादितिचद्रष्टव्यं । (सर्वंमिथ्येत्यंगीकारेचलाघवं) तस्मात्प्रतिकर्मव्यवस्थानुपपत्त्याद्दृष्टिसृष्टिपक्षस्याप्रामाणिकत्वेननजगत्प्रतिभासमात्रशरीरमितिसाधनवतःपक्षाद्व्यावृत्तत्वेनोपाधित्वंयुक्तमितिभावः । संप्रदायस्तुशुक्तिरूप्यस्यदृष्टांतत्वमुपलक्षणत्वेन वस्तुतस्तुप्रातिभासिकत्वेनतत्समानानांसुखादीनामपिदृष्टांतत्वेनव्यावहारिकपक्षमात्राद्व्यावृत्तत्वेनसमग्रपक्षव्यावृत्तत्वमेवेत्याशयात् । ननुप्रातिभासिकत्वस्यापिसुखदुःखादौपक्षैकदेशेसत्त्वेनवियदादावसत्त्वेनास्यापिपक्षैकदेशव्यावृत्तत्वमेवनपक्षमात्रव्यावृत्तत्वमितिचेत् पक्षमात्रव्यावृत्तत्वमापाततएव वस्तुतस्तुपक्षैकदेशव्यावृत्तत्वमेवेत्याहुः ॥ ७ ॥ **दृश्यत्वादे**

रूपाधिविवरणं ॥ ७ ॥ ननुजगतःप्रातिभासिकत्वेतदप्रातिभासिकत्वग्राहिसन्घटइत्यादिप्रत्यक्षविरोधः । ब्रह्मणश्चमिथ्यात्वे तत्सत्यत्वग्राहिश्रुतिविरोधइत्यतआह ॥ जगतइति ॥ अत्राप्रयोजकतापरिहारायानुकूलतर्कमाह ॥ विपक्षेचेति ॥ जगतो दृश्यत्वमंगीकृत्यप्रातिभासिकत्वानंगीकारेजगतःपारमार्थिकत्वप्राप्त्याजगद्ब्रह्मरूपसत्यद्वयांगीकारापत्त्यागौरवंस्यात् । व्यावहा रिकत्वांगीकारेपिब्रह्मजगद्रूप्यादीनांत्रिविधसत्त्वांगीकारेत्रैरूप्यापत्त्यागौरवं । ब्रह्मणएकस्यैवसत्यत्वंतदितरस्यसर्वस्यप्रातिभासि

**इतिदृश्यत्वादेरुपाधिविवरणं ॥ ७ ॥ विमतंप्रातिभासिकं दृश्यत्वाच्छुक्तिरूप्यवत् । ब्रह्ममिथ्या व्यवहारविषयत्वादसद्विलक्षणत्वाद्वाशुक्तिरूप्यवदित्याभाससाम्यंच । जगतोप्रातिभासिक त्वग्राहिप्रत्यक्षंब्रह्मणस्सत्यत्वश्रुतिश्चानुमानविरोधादप्रमाणं । विपक्षेचगौरवं । व्यवहृतिव्य वहार्ययोःसंबंधांतराभावा त्सर्वंव्यवहार्यंव्यवहृतावध्यस्तमित्यादिचबाधकमितिसुवचत्वात् ॥**

कत्वांगीकारेलाघवं । तथाब्रह्मणोपिव्यवहारविषयत्वमंगीकृत्यमिथ्यात्वानंगीकारेसत्यत्वप्राप्त्याब्रह्मसत्यंजगन्मिथ्येतिद्वैरूप्यांगी कारापत्त्यागौरवंविपक्षेबाधकं सर्वंमिथ्येत्यंगीकारेचलाघवमित्यर्थः । द्वितीयानुमानाप्रयोजकतापरिहारायहेतूच्छित्तिरूपंबाध कांतरमाह ॥ व्यवहृतीति ॥ बाधकं अप्रयोजकताशंकायांबाधकं । ब्रह्मणोव्यवहारविषयत्वमंगीकृत्यमिथ्यात्वानंगीकारेस त्यत्वप्राप्त्यासत्यभूतब्रह्मव्यवहारयोःसंबंधांतरायोगात्सर्वंव्यवहार्यंब्रह्मादिव्यवहृतावध्यस्तमित्याध्यासिकसंबंधएववक्तव्यः । त

थाचब्रह्मणोव्यवहृतावध्यस्तत्वप्राप्त्यामिथ्यात्वसिद्धिरित्यर्थः । एवमेवदृश्यत्वमंगीकृत्यप्रातिभासिकत्वानंगीकारेदृग्दृश्ययोःसंबंधोनस्यादित्याध्यासिकएवसंबंधोवाच्यस्तथाचजगतोज्ञानेऽध्यस्ततयाप्रातिभासिकत्वसिद्धिरितिहेतूच्छित्तिरूपंबाधकंचद्रष्टव्यं ॥ ७ ॥ दृश्यत्वादेराभाससाम्यविवरणं ॥ ८ ॥ प्रतिज्ञाश्रयंप्रबलप्रमाणविरोधाख्यंदोषंविवक्षुःप्रमाणज्येष्ठप्रत्यक्षविरोधं तावदाह ॥ सन्घटइतीति ॥ प्रत्यक्षगृहीतसत्त्वविरोधिमिथ्यात्वसाधकमनुमानंप्रत्यक्षबाधितमग्न्यनौष्ण्यानुमानवदित्यर्थः । ननुनमिथ्यात्वानुमानस्यप्रत्यक्षबाधः प्रत्यक्षगृहीतव्यावहारिकसत्त्वस्यानुमानगृहीतपारमार्थिकसत्त्वनिषेधरूपमिथ्यात्वाविरोधि

॥ ७ ॥ इतिदृश्यत्वादेराभाससाम्यविवरणं ॥ ८ ॥ सन्घटइत्यादिप्रत्यक्षबाधिताश्चदृश्यत्वादयः । ननुकिमिदंसत्त्वंयत्प्रत्यक्षसिद्धं परजातिर्वा असद्वैलक्षण्यंवा अर्थक्रियाकारित्वंवा प्रमाविषयत्वंवा तद्योग्यत्वंवा भ्रमाऽविषयत्वंवा स्वसमानाधिकरणस्वसमानकालीननिषेधाप्रतियोगित्वंवा अबाध्यत्वंवा ।

त्वात् । अनुमानगृहीतमिथ्यात्वविरोधिसत्त्वस्यचप्रत्यक्षेणाग्रहणादित्यभिप्रायेणसत्त्वंपृच्छति ॥ नन्विति ॥ असंगतिपरिहारायाह ॥ यदिति ॥ घटादौयत्प्रत्यक्षसिद्धमनुमानगृहीतमिथ्यात्वविरोधीतिशेषः ॥ परजातिरिति ॥ द्रव्यत्वगुणत्वकर्मत्वव्यापिकासत्ताजातिरित्यर्थः ॥ तद्योग्यत्वमिति ॥ प्रमाविषयत्वयोग्यत्वमित्यर्थः ॥ स्वेति ॥ स्वाधिकरणाधिकरणकोयःस्वसमानकालीनोनिषेधस्तदप्रतियोगित्वमित्यर्थः । निषेधाप्रतियोगित्वमित्युक्तेघटादेःकालांतरीयनिषेधप्रतियोगित्वादसंभवोऽतः

स्वसमानकालीनेति । तस्यघटादिसमानकालीनत्वाभावेनतादृशनिषेधाप्रतियोगित्वसत्त्वेननासंभवः । तावत्युक्तेस्वसमानकालीनदेशांतरीयनिषेधप्रतियोगित्वात्पुनरसंभवःस्यादतःस्वसमानाधिकरणेत्युक्तं । देशांतरीयनिषेधस्यस्वाधिकरणाधिकरणकत्वाभावान्नासंभवः ॥ नाद्याइति ॥ चतुर्थापेक्षयाआद्याः । प्रथमद्वितीयतृतीयाइत्यर्थः ॥ **सिद्धसाधनादिति** ॥ ननुइदमयुक्तं सिद्धसाधनतायाअनुमानएववक्तव्य(तयाप्र)त्वात्प्रत्यक्षेणैतादृशसत्त्वंविषयीक्रियतइत्युक्तेसिद्धसाधनोद्भावनस्याकौशलव्यंजकत्वमितिचेत्सत्यं । सिद्धसाधनात्सिद्धार्थावगाहित्वादित्यर्थः । परजात्यादिरूपस्यसत्त्वस्य मिथ्यात्ववादिनामयापिप्रत्यक्षविषय

**नाद्याः । सिद्धसाधनात् । नचतुर्थः । असतिप्रमाणाप्रवृत्त्या**
**तद्विषयत्वात्प्राक्सत्वस्यवक्तव्यतयातस्यसत्वादन्यत्वात् ।**

त्वांगीकारादनुमाननिषेध्यपारमार्थिकसत्त्वावगाहित्वाभावान्नतेनबाधइतिभावइत्याहुः । वस्तुतस्तुपरजात्यादिरूपसत्त्वस्यमिथ्यात्ववादिनामयापिप्रत्यक्षविषयत्वांगीकारादेतादृशसत्त्वंप्रत्यक्षविषयइतिभवदीयवचनंमांप्रतिसिद्धसाधनंसिद्धार्थसाधकंसिद्धार्थबोधकंअसंगतमित्यर्थः । तथाचानुमाननिषेध्यपारमार्थिकसत्वावगाहित्वाभावेनभिन्नविषयत्वान्नानुमानस्यतेनबाधइतिभावः ॥ **असतीति** ॥ सत्येवप्रमाणंप्रवर्ततेनासतीतितावत्सिद्धं तत्कुतइतिपृष्टेप्रमाणप्रवृत्तिप्रयोजकीभूतंसत्त्वंसतिवर्ततेऽसतिचनास्तीतिवक्तव्यं । एवंचप्रमाणप्रवृत्तिप्रयोजकतयाप्रमितिविषयत्वात्प्राक्सत्त्वस्यावश्यंवक्तव्यत्वेनप्रमितिविषयत्वस्यसत्त्वादन्यत्वे

ननतदेवसत्त्वंनेत्यर्थः । किंचप्रमाविषयत्वंपरंपरयावा साक्षाद्वा । नाद्यः । शुक्तिरजतमहं(असत्परोक्षतो)जानामीतिव्यवसायद्वाराऽसतोप्यनुव्यवसायविषयत्वात्असत्यतिव्याप्तिः । नद्वितीयः । इदंरजतमसदितिअसत्त्वप्रकारकप्रमांप्रतिअसतोपिसाक्षाद्विषयत्वेनासत्येवातिव्याप्तिरित्याह ॥ असतोपीति ॥ आत्माश्रयादिति ॥ सत्त्वलक्षणेसत्त्वप्रवेशादित्यर्थः ॥ अन्योन्याश्रयादिति ॥ सत्त्वज्ञानेप्रतियोगि(गिज्ञानप्राप्त्या)नःप्राप्त्याऽसत्त्वज्ञानंतज्ज्ञानेतद्घटितसत्त्वज्ञानमित्यन्योन्याश्रयइत्यर्थः ॥ अ

असतोपिव्यवसायद्वारासाक्षाच्चासत्वप्रकारकप्रमाविषयत्वाच्च । सत्वप्रकारकप्रमाविषयत्वेचात्माश्रयात् । असत्वाप्रकारकप्रमाविषयत्वेचासत्वस्यसत्वनिरूप्यत्वेनान्योन्याश्रयात् । अतएवनपंचमः । नषष्ठः । सतोप्यसत्त्वप्रकारकभ्रमविषयत्वात् । सत्वप्रकारकभ्रमाविषयत्वेचात्माश्रयात् । असत्वाप्रकारकभ्रमाविषयत्वेचान्योन्याश्रयात् । नसप्तमः । संयोगादावव्याप्तेः ।

तएवेति ॥ सत्त्वस्यप्रमाविषयत्वयोग्यत्वप्रयोजकत्वेनतस्यसत्त्वादन्यत्वादेवेत्यर्थः ॥ सतोपीति ॥ घटोऽसन्नितिभ्रमसंभवेन तत्रलक्षणाभावादसंभवइतिभावः ॥ असत्त्वाप्रकारकेति ॥ असत्त्वप्रकारकभ्रमविषयत्वंतदप्रकारकभ्रमाविषयत्वंचनास्तीत्येवंसर्वथाभ्रमाविषयत्वेनैवपर्यवसानंनतुअसत्त्वप्रकारकभ्रमविषयत्वेनेतिध्येयं ॥ अन्योन्येति ॥ पूर्ववदसत्त्वस्यसत्त्वनिरूप्यत्वेनाऽन्योन्याश्रयादितिभावः ॥ संयोगादाविति ॥ संयोगस्याव्याप्यवृत्तित्वेनसंयोगाधिकरणाधिकरणकोयःस्वसमा

नकालीनोनिषेधः संयोगात्यंताभावएवतदप्रतियोगित्वाभावेनाव्याप्तिरित्यर्थः ॥ शुक्तीति ॥ रूप्यस्यासतोऽधिकरणस्यैवाभावेनस्वसमानाधिकरणस्वसमानकालीननिषेधस्यैवाभावेनतदप्रतियोगित्वंविशेषणाभावप्रयुक्तविशिष्टाभावमादायास्तीत्यर्थः ॥ अन्योन्येति ॥ बाध्यत्वज्ञानेऽबाध्यत्वज्ञानं । तत्रतस्यप्रतियोगित्वात् । अबाध्यत्वज्ञानेचबाध्यत्वज्ञानं बाध्यत्वस्याऽबाध्यत्वरूपसत्त्वघटितत्वादित्यन्योन्याश्रयादित्यर्थः । इह जगति । तत्र ब्रह्मणि । तत् सत्त्वं । अनिर्वाच्यं निर्वक्तुमशक्यमित्यर्थः ॥

शुक्तिरूप्यादेरधिकरणाद्यभावेनातिव्याप्तेश्च ।नाप्यष्टमः ।बाधस्यप्रतिपन्नोपाधौत्रैकालिकसत्वनिषेधत्वेनान्योन्याश्रयात् ।उच्यते । तवात्मनियत्सत्वंतदेवेहमम ।उक्तंहि "यादृशंब्रह्मणःसत्वंतादृशंस्याज्जगत्यपी "ति । तत्रतदनिर्वाच्यंचेदिहापितथास्तु । सत्वानिर्वचनेपितद्वदेवस्वरूपपारमार्थ्योपपत्तेः । यदिचतत्रानृतव्यावृत्तिमात्रंअबाधितस्वरूपंवासत्वं । बाधश्चप्रतिपन्नोपाधौत्रैकालिकनिषेधः । ज्ञानेननिवृत्तिर्वेतिनान्योन्याश्रयः । तर्हीहापितथास्तु

इहापीति ॥ जगत्यपिनिर्वक्तुमशक्यमित्यर्थः । दूषणांतरमाह ॥ सत्त्वेति ॥ ब्रह्मणिसत्त्वस्यानिर्वक्तुमशक्यत्वेपियथातत्परमार्थसद्रूपंएवंजगन्निष्ठसत्त्वस्यापिनिर्वक्तुमशक्यत्वेपिब्रह्मवदेवपरमार्थसद्रूपमस्त्वित्यर्थः । तत्र ब्रह्मणि ॥ अनृतेति ॥ अपोहवादाश्रयणेनेत्यर्थः । "अनृतजडविरोधिरूप "मित्यादितद्वचनात् । नन्वबाधितस्वरूपंसत्त्वंचेद्बाधस्यत्रैकालिकसत्त्वनिषेधरूपत्वेनपूर्वोक्तरीत्यान्योन्याश्रयइत्यतआह ॥ बाधश्चेति ॥ निषेधःस्वरूपनिषेधः । तथाचबाधोनसत्त्वघटितइत्यर्थः । ननु

ब्रह्मजगतोरेकप्रकारसत्ताकत्वेजगतोब्रह्मसाम्यापत्तिरित्यतआह ॥ ब्रह्मसाम्यस्यैवेति ॥ पारमार्थिकसत्त्वरूपधर्मेणेत्यर्थः । ननु " यादृशंब्रह्मणस्सत्त्वंतादृशंस्याज्जगत्यपी "त्ययुक्तं । कुतइत्यतआह ॥ अपरिच्छिन्नत्वमिति ॥ तत्र ब्रह्मणि । नहिजगत्येतादृशंसत्त्वंवक्तुंयुक्तमित्याशयः ॥ शुक्तिरूप्ययोरित्यादि ॥ अयमत्रोत्तरक्रमः । यथाऽपरिच्छिन्नत्वंसत्वमंगीकृत्यजगतितदभावात्सत्त्वंनास्तीत्युच्यते एवंवयमपिवदामः । परिच्छिन्नत्वमेवसत्त्वंब्रह्मणितुतदभावात्तत्रापिसत्त्वंनास्तीति । ननुपरिच्छिन्नत्वंसत्त्वंनभवतिशुक्तिवद्रूप्यस्यापिपरिच्छिन्नत्वेनतत्रातिव्याप्तेरितिचेत्तर्ह्यपरिच्छिन्नत्वमपिनसत्त्वं शून्यवादिनाशून्यस्या

ब्रह्मसाम्यस्यैवापेक्षितत्वात् । अपरिच्छिन्नत्वंतत्रसत्वमितिचेन्न । शुक्तिरूप्ययोः परिच्छिन्नत्वेब्रह्मशून्ययोश्चापरिच्छिन्नत्वेतुल्येपिसत्वासत्वयोर्व्यवस्थितत्वेनजगत्युक्तपारिभाषिकसत्वाभावस्यब्रह्मणिपरिच्छिन्नत्वरूपसत्वाभावस्येवेष्टत्वात् ।

प्यपरिच्छिन्नत्वांगीकारेणशून्येऽतिव्याप्तेः । एवंचापरिच्छिन्नत्वंसत्त्वमितिस्वीकुर्वतात्वयाब्रह्मशून्ययोरपरिच्छिन्नत्वेतुल्येपिब्रह्मण्येवसत्त्वमस्तिनशून्यइतियथासत्त्वासत्त्वयोर्व्यवस्थितत्वंस्वीकृतं एवंपरिच्छिन्नत्वंसत्त्वमितिस्वीकुर्वतामयापिशुक्तिरूप्ययोः परिच्छिन्नत्वेसमानेपिशुक्तावेवसत्त्वंनरूप्यइत्यपिसत्त्वासत्त्वयोर्व्यवस्थितत्वमेवस्वीकृतं । सतिचैवंब्रह्मणिमदभिप्रेतपारिभाषिकपरिच्छिन्नत्वरूपसत्त्वाभावेप्यपरिच्छिन्नसद्रूपंब्रह्मभवति । एवंजगत्यपित्वदभिप्रेतपारिभाषिकापरिच्छिन्नत्वरूपसत्त्वाभावेपिप

रिच्छिन्नसद्रूपत्वेनैवोपपत्तेःअपरिच्छिन्नत्वंसत्त्वमित्यंगीकृत्यजगतितदभावेनासत्त्वंनवक्तव्यमिति । प्रतिबंद्याअनुत्तरत्वादाह ॥ **सौहार्दंत्विति** ॥ सुहृद्भावेनविचारेत्वित्यर्थः। तंप्रति त्रिकालसर्वदेशीयनिषेधंप्रति । श्लोकंव्याचष्टे ॥ **सर्वेति** ॥ ननुवृक्षकपिसंयोगस्तावदितरत्रकुत्रापिनास्ति । स्वयंयत्रास्तितत्रापितदत्यंताभावोस्त्येव संयोगस्याव्याप्यवृत्तित्वेनस्वात्यंताभावसमानाधिकरणत्वादतःसार्वदैशिकनिषेधप्रतियोगित्वसद्भावेनतदप्रतियोगित्वाभावादव्याप्तिरित्यतआह ॥ **यदवच्छिन्नइति** ॥ भावेक्तःयदवच्छेदेनेत्यर्थः । आवयोर्मतेसंयोगस्यस्वात्यंताभावसामानाधिकरण्यरूपाव्याप्यवृत्तित्वस्यासंमतत्वेनयत्प्रदेशावच्छेदेनसं

**सौहार्दंतु । "त्रिकालसर्वदेशीयानिषेधाप्रतियोगिता । सत्तोच्यतेऽध्यस्ततुच्छेतंप्रतिप्रतियोगिनी ।" सर्वदेशकालसंबंधिनिषेधाप्रतियोगित्वंसत्वं । यदवच्छिन्नेसंयोगस्तदवच्छिन्नेतदत्यंताभावोनेतिनतत्राव्याप्तिः। गगनादेरप्यत्यंताभावःकेवलान्वयीनेत्युक्तत्वान्नगगनादावव्याप्तिः ।**

योगस्तत्प्रदेशावच्छेदेनैवतदत्यंताभावाभावान्नसार्वदैशिकनिषेधप्रतियोगित्वमितिनाव्याप्तिः । नन्वथापिगगनादिनित्यद्रव्यात्यंताभावस्यकेवलान्वयित्वेनसार्वदैशिकत्वाद्गगनादौसार्वदैशिकनिषेधप्रतियोगित्वस्यैवसद्भावेनाव्याप्तिरित्यतआह ॥ **गगनादेरपीति** ॥ उक्तत्वादिति ॥ देशकालावपिसदासर्वत्रदेशकालावित्यबाधितप्रतीत्याप्रमेयत्वाभिधेयत्ववत्स्ववृत्तीअन्योन्यवृत्तीचेत्युक्तत्वेनदेशकालयोर्देशकालयोरेवसत्त्वेननसार्वदैशिकनिषेधप्रतियोगित्वंअतोनाव्याप्तिरित्यर्थः । तुच्छेऽध्यस्तेचातिव्याप्तिं

परिहरति ॥ तुच्छमिति ॥ उक्तत्वादिति ॥ अध्यस्ततुच्छेतंप्रतिप्रतियोगिनीइतिकारिकायामुक्तत्वादित्यर्थः । मन्मतेध्यस्तस्यतुच्छत्वेपिपररीत्येयमुक्तिरितिज्ञातव्यं । सत्वस्यलक्षणेकृत्यंपदानांतुविचार्यते । विद्वत्प्रमोदकःसस्यात्दयया श्रीपतेर्गुरोः॥१॥ तथाहि । अत्रलक्षणेविद्वत्प्रमोदार्थंपदकृत्यादिविचारःक्रियते । तथाहि । सार्वदैशिकसार्वकालिकनिषेधाप्रतियोगित्वंसत्त्वमित्यत्रसार्वदैशिकनिषेधाप्रतियोगित्वंसत्त्वमित्येवोक्तेसमवायिकारणनाशजन्यनाशप्रतियोगिनिकिंचित्कालमनाश्रिततयाविद्यमानेपटेऽव्याप्तिःस्यात् । तस्यपटस्यकपालादिदेशेष्वभावस्यसर्वसंमतत्वेनस्वसमवायिदेशेऽवस्थानेनभाव्यं । समवायिकार(णनाशेतु तत्रा)णाभावात्तत्रावस्थानासंभवेनसार्वदैशिकनिषेधप्रतियोगित्वसद्भावेनतदप्रतियोगित्वाभावादव्याप्तिःस्यादतःसार्वकालिकेत्यु

तुच्छमध्यस्तंचउक्तप्रतिषेधप्रतियोगीत्युक्तत्वान्नातिव्याप्तिरपि ।

क्तं । तथाचतस्यपटस्यसमवायिकारणनाशात्पूर्वंस्वसमवायिकारणेस्थितत्वेनत्रैकालिकनिषेधाप्रतियोगित्वसद्भावान्नाव्याप्तिः । नन्वत्रनिषेधपदस्यात्यंताभावपरत्वात्समवायिकारणनाशजन्यनाशप्रतियोगिपटेकथमव्याप्तिः । नाशस्यात्यंताभावत्वाभावेननाशप्रतियोगित्वादेवतत्रात्यंताभावाप्रतियोगित्वमस्तीतिकथमव्याप्तिः । अतःसार्वकालिकपदंव्यर्थमितिचेन्न । निषेधपदस्यसंसर्गाभावपरत्वांगीकारात् । तथाचनाशप्रतियोगिनिसंसर्गाभावप्रतियोगित्वसद्भावादव्याप्तिःस्यादेवेत्यतःसार्वकालिकपदंसार्थकमेव। सार्वकालिकनिषेधाप्रतियोगित्वमित्येवोक्तौअश्वेगोत्वंकदापिनास्तीतिप्रतीत्याश्वनिष्ठगोत्वात्यंताभावप्रतियोगिनिगोत्वेसार्वकालि

कनिषेधप्रतियोगित्वस्यैवसत्त्वेनतदप्रतियोगित्वाभावादव्याप्तिःस्यादतःसार्वदैशिकेत्युक्तं । तथाचगोत्वस्याश्वादिदेशेऽभावेपिग विसत्त्वेनसार्वदैशिकनिषेधप्रतियोगित्वाभावान्नाव्याप्तिः । ननुगोत्वस्यप्रामाणिकतयानिषेधप्रतियोगित्वासंभवाद्गोत्वसंसर्गएव निषिध्यतइतिमतेगोत्वेऽश्वनिष्ठसार्वकालिकनिषेधाप्रतियोगित्वसद्भावेनअव्याप्तेरेवाभावात्सार्वदैशिकपदंव्यर्थमितिचेत्सत्यमेवे तिवदामः । तदिदमाह ॥ अश्वेगोत्वमिति ॥ निषेधपदस्यात्यंताभावपरत्वेतुसमवायिकारणनाशजन्यनाशप्रतियोगिनिपटेऽ व्याप्त्यभावात्सार्वकालिकपदमप्यनपेक्षितमित्यपिद्रष्टव्यं । ननुतर्हिअश्वेगोत्वसंसर्गःकदापिनास्तीतिप्रतीत्याऽश्वनिष्ठात्यंताभा

अश्वेगोत्वंकदाचिदपिनास्तीत्यादौतत्संसर्गएवनिषिध्यतइतिमतेदेशपदमनपेक्षि
तं । केचित्तुपराभिप्रेतमिथ्यात्वाभावोवा ऽसद्विलक्षणत्वेसत्यनारोपितत्वंवा

वप्रतियोगिनिगोत्वसंसर्गएवाव्याप्तिरितिचेन्न । भ्रांतोसि । अश्वेगोत्वसंसर्गस्यारोपितत्वेनात्यंतासत्त्वादलक्ष्यत्वमेवेतितत्रलक्ष णाभावोनदोषाय । अतएवोक्तं" अध्यस्ततुच्छेतंप्रतिप्रतियोगिनी "इति । ननुकथमस्मदनुमानानांप्रत्यक्षबाधः । सत्वग्राहि त्वादितिचेन्न । चक्षुराद्ययोग्यातीतवर्तमानैष्यत्कालदेशाद्यनेकपदार्थघटितसत्त्वस्यकथंप्रत्यक्षसिद्धत्वं चक्षुरादेरेतादृशसत्त्वग्र हणेऽसामर्थ्यादितिचेत् उच्यते । देशकालयोश्चक्षुराद्ययोग्यत्वेपिसाक्ष्युपनीतयोश्चाक्षुषप्रत्यक्षेभानंसंभवत्येव । कथमन्यथाअ त्रेदानींघटइत्यत्रापितयोर्भानमिति । पुनःप्रकारांतरंचात्रोपदिशंति । तथाहि । सार्वदैशिकसार्वकालिकनिषेधाप्रतियोगित्वंनाम

सार्वदैशिकसार्वकालिकनिषेधप्रतियोगित्वा भावः । सचप्रत्यक्षयोग्यएव । कथमितिचेदुच्यते । अत्रादावभावस्यप्रत्यक्षयोग्यतायांतंत्रंकिमितिप्रष्टव्यं । प्रतियोगियोग्यत्वमितिचेन्न । तथात्वेजलपरमाणौपृथिवीत्वाभावःप्रत्यक्षःस्यात् । पृथिवीत्वस्यघटादौप्रत्यक्षयोग्यत्वात् अतोनप्रतियोगियोग्यत्वंतंत्रं किंनाम मणिकारोक्तरीत्यायोग्यानुपलब्धिरेव । ननुतथापियोग्यस्यानुपलब्धिर्योग्यानुपलब्धिः । तथाचपृथिवीत्व स्यघटादौयोग्यस्यानुपलब्धेःसत्त्वात्तदभावोजलपरमाणौप्रत्यक्षःस्यादित्यतिप्रसंगानिस्तारएवेतिचेन्न । योग्यस्यानुपलब्धिर्योग्या नुपलब्धिरितिनार्थः । किंनाम । तर्कितप्रतियोगिसत्त्वप्रसंजितोपलब्धिप्रतियोगिकाभावएवहियोग्यानुपलब्धिः । तथाहि । यद्यत्रभूतलेघटःस्यात्तर्ह्युपलभ्येत । घटस्यमहत्त्वसमानाधिकरणोद्भूतरूपवत्त्वेनयोग्यत्वात् नोपलभ्यते तस्मान्नास्तीत्येवंरूपा । एवंचजलपरमाणौपृथिवीत्वाभावोनप्रत्यक्षः । तत्रोक्तरूपयोग्यानुपलब्धेरभावात् । तत्रहियदिजलपरमाणौपृथिवीत्वंस्यात्तर्ह्युपलभ्येत योग्यव्यक्तिवृत्तिजातेर्योग्यत्वादित्यापादनंकर्तुमशक्यं । जलपरमाणोःपृथिवीत्वजातिंप्रत्ययोग्यव्यक्तित्वेनपृथिवीत्वस्ययोग्यव्यक्तिवृत्तित्वाभावात् । अतएवमापादनासंभवेनतत्रोक्तरूपयोग्यानुपलब्धेरभावेनपृथिवीत्वाभावोनप्रत्यक्षः । प्रकृते चास्त्युक्तरूपायोग्यानुपलब्धिःसार्वदैशिकसार्वकालिकनिषेधप्रतियोगित्वाभावग्राहिका । तथाहि । यद्यत्रघटादौसार्वदैशिकसार्वकालिकनिषेधप्रतियोगित्वंस्यात्तर्ह्युपलभ्येत । योग्यव्यक्तिवृत्तिधर्मत्वात् नह्युपलभ्यतेऽतोत्रनास्तीत्यापादनसंभवेनोक्तरूपयोग्यानुपलब्धेःसंभवादुक्तनिषेधप्रतियोगित्वाभावस्यप्रत्यक्षयोग्यत्वंयुक्तमिति । अत्रपुनर्निष्कर्षमुपदिशंति । निषेधाप्रतियोगित्वमित्यत्रान्योन्याभावएवनञर्थतयाविवक्षितः । तथाचसार्वदैशिकसार्वकालिकनि

षेधप्रतियोगिभिन्नत्वमित्यर्थः । इदंच प्रत्यक्षयोग्यमेव । तथाहि । अन्योन्याभावप्रत्यक्षेऽधिकरणयोग्यत्वमेवतंत्रंनप्रतियोगि योग्यत्वं । स्तंभेपिशाचान्योन्याभावस्यप्रत्यक्षत्वात् । यथोक्तंगंगेशेन । "स्तंभेपिशाचान्योन्याभावःप्रत्यक्षएव अधिकरणस्य प्रत्यक्षत्वा" दिति । एवंचप्रकृतेऽन्योन्याभावाधिकरणस्यघटादिजगतोयोग्यत्वात्तन्निष्ठंसार्वदैशिकसार्वकालिकनिषेधप्रतियोगि भिन्नत्वरूपंसत्वंप्रत्यक्षयोग्यमेवेतिनकोपिदोषः । अतएतादृशसत्त्वग्राहिप्रत्यक्षविरोधोनुमानस्यसुस्थइतिसर्वमवदातं । स्वोत्प्रे क्षितान्पक्षानेवकेचित्स्वित्याहेतिसंप्रदायः । परैरिति । परैर्मिथ्यात्वंयत्किंचिदेवोच्यतांनास्माकंतत्रनिर्बंधः । तथाचसामान्यतः पराभिप्रेतंयन्मिथ्यात्वंतदभावइत्यर्थः । असद्विशेषस्यकूर्मरोमादेःप्रधानाभावेनकुत्राऽप्यऽनारोपात्तत्राऽतिव्याप्तिवारणायअस

अस्तित्वप्रकारकप्रमांप्रतिकदाचित्साक्षाद्विषयत्वंवा कालसंबंधित्वंवासत्वं । अस्तित्वंचवर्तमानत्वं ।

द्वैलक्षण्येसतीत्युक्तं । पररीत्याशुक्तिरूप्येऽतिव्याप्तिवारणायविशेष्यं ॥ अस्तित्वेति ॥ प्रमाविषयत्वमात्रोक्तौइदंरजतमिति ज्ञानवानहमित्यनुव्यवसायेव्यवसायद्वाररजतस्यापिविषयत्वेनभानादतिव्याप्तिःस्यादतःसाक्षादित्युक्तं । नेदंरजतमितिबाधक प्रमांप्रतिनिषेध्यत्वेनसाक्षाद्विषयेरजतेऽतिव्याप्तिवारणायअस्तित्वप्रकारकेत्युक्तं । तावत्युक्तेऽतीतादावसंभवःस्यादतःकदाचिदि त्युक्तं । स्वसत्तादशायांपूर्वमेतल्लक्षणमस्तीतिनदोषः। नन्वस्तित्वंनामसत्त्वमेव । तथाचात्माश्रयइत्यतआह ॥ अस्तित्वंचेति ॥ वर्तमानत्वमिति ॥ घटादेर्वर्तमानत्वंनामस्वप्रागभावविरहरूपत्वं प्रतियोग्यापत्तेरेवाभावविपत्तित्वात् । यथोक्तंशिवादित्ये

न । "तच्चप्राक्संबद्धस्वाभावविरहस्वरूपत्व"मिति । नन्वतीतादौवर्तमानत्वप्रकारकप्रमाविषयत्वाभावादव्याप्तिःस्यादित्यत आह ॥ अतीतादिरपीति ॥ कदाचित् स्वसत्तादशायां । अनेनकदाचिदितिविशेषणकृत्य(मपि)मुपदर्शितं । ननुकालसंबंधित्वरूपंसत्त्वंशुक्तिरूप्येऽतिव्याप्तं । तस्यप्रातिभासिकत्वेनप्रतिभासकालसंबंधित्वादित्यतआह ॥ आरोपितंत्विति ॥ बाधबोधितमिति ॥ नास्तिनासीन्नभविष्यतीतित्रैकालिकनिषेधरूपे(ण)बाधेनकालत्रयासंबंधित्वेनारोपितस्यबोधिततयाप्रातिभा

अतीतादिरपिकदाचिद्वर्तत एव । आरोपितंतुकालत्रयासंबंधित्वेनबाधबोधितमितिनदोषइत्याहुः ॥ ७ ॥ इतिसत्वनिरुक्तिः ॥ ९ ॥ नन्विदंरूप्यमित्यत्रेदमितिवत्सन्घटइत्यत्रापिसन्नित्यधिष्ठानब्रह्मानुवेधएवेतिचेन्न । चाक्षुषादिज्ञानेरूपादिहीनब्रह्मास्फुरणादित्युक्तत्वात् ।

सिकस्यकालासंबंधित्वेनकालसंबंधित्वलक्षणस्यारोपितेनातिव्याप्तिरित्यर्थः ॥ ७ ॥ इतिसत्त्वनिरुक्तिविवरणं ॥ ९ ॥ सन्घटइत्यादिप्रत्यक्षस्यघटादौस(त्ता)त्त्वग्राहकत्वेननतद्विरोधोनुमानस्येत्याशंकते ॥ नन्विति ॥ यथाइदंरूप्यमित्यत्ररूप्येइदंताविरहात्अधिष्ठानभूतशुक्तिकायांइदंत्वेनगृह्यमाणायांतत्रारोपितंरजतमपीदमितिभ्रमेनिर्दिश्यते तथासद्रूपेब्रह्मणिघटादेरध्यस्तत्वेनतद्गतमेवसत्त्वंघटादौव्यवह्रियते । तथाचनघटादौसत्त्वंप्रत्यक्षविषयइत्यर्थः ॥ उक्तत्वादिति ॥ परिच्छिन्नत्वहेतुभंगइति

शेषः ॥ अन्योन्याश्रयादिति ॥ घटादेरारोपितत्वसिद्धौसत्त्वाभावसिद्धिः तत्सिद्धौचाधिष्ठानगतमेवसत्त्वंप्रतीयतेनवस्तुतइत्येतत्प्रमेयसिद्ध्याआरोपितत्वसिद्धिरित्यन्योन्याश्रयादित्यर्थः । प्रतिबंदींगृह्णाति ॥ अन्यथेति ॥ सदित्यधिष्ठानगतमेवसत्त्वंप्रतीयतइत्यंगीकारइत्यर्थः । ननुसत्यंज्ञानमित्यत्रसदित्यधिष्ठानानुवेधोनभवति । ब्रह्मणःसद्रूपत्वात् घटादौत्वधिष्ठानानुवेधएव तस्यमिथ्यात्वादित्यतआह ॥ नहीति ॥ तथाचब्रह्मैवसद्रूपमन्यन्मिथ्येतिविभागसिद्धौसत्यंज्ञानमित्यत्रसत्यमितिनाधिष्ठा

नीलोघटःमिथ्यारूप्यंअसन्नृशृंगमित्यादावपिनीलइत्यादिरधिष्ठानानुवेधइत्यापाता
च्च । नैल्यादिकंघटेऽस्तिसत्वंतुनेतिचेन्न । अस्यारोपितत्वसिद्ध्यधीनत्वेनान्योन्या
श्रयात् । अन्यथासत्यंज्ञानमित्यत्रापिसत्यमित्यधिष्ठानानुवेधइतिस्यात् । नह्यद्यापि
ब्रह्मैवसद्रूपमन्यन्मिथ्येतिसिद्धं । ननुतथापिकथंप्रत्यक्षमात्यंतिकाबाध्यत्वग्राहि ।

नानुवेधः । सन्घटइत्यत्रतुतदनुवेधइतिप्रमेयद्वयसिद्धिस्तत्सिद्धौचोक्तविभागसिद्धिरित्यन्योन्याश्रयइत्यर्थः । एवंचयथासत्यंब्रह्मेत्यत्रब्रह्मगतमेवसत्त्वंप्रतीयते नत्वधिष्ठानगतं(तथा) एवंसन्घटइत्यत्रापिघटगतमेवसत्त्वंप्रतीयतइत्यंगीकार्यमितिभावः । प्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वसाधकानुमानस्यप्रत्यक्षविरोधोनास्तीत्याशंकते ॥ नन्विति ॥ आत्यंतिकाबाध्यत्वं कालत्रयेपिसत्त्वं । तथाचग्राह्याभावानवगाहित्वान्नविरोधइतिभावः । ननुवर्तमानकालीनबाधाभावग्राहकत्वमात्रे

णैवविरोधोस्त्वित्यतआह ॥ तात्कालिकेति ॥ तात्कालिकबाधाभावश्चनवस्तुसत्त्वसाधकः । तथात्वेरूप्यादेरपितदापातादि तिभावः । आद्यपक्षस्यत्रेधाविकल्पि तत्वान्नाद्यावित्युक्तं । तयोः अनुमानागमयोः ॥ मानेति ॥ प्रत्यक्षरूपप्रमाणाविरोधेने त्यर्थः । ननुभवत्पक्षेप्यन्योन्याश्रयः । प्रत्यक्षस्यप्रामाण्येतद्विरोधादनुमानादेरप्रामाण्यं तयोरप्रामाण्येतद्विरोधाभावात्प्रत्यक्ष

तात्कालिकाबाधस्तुरूप्यादेरिवेष्टइतिचेत्किंप्रत्यक्षमप्रमाणमेवउतप्रमाणमपिवर्तमान मात्रग्राहित्वात्त्रिकालाबाधग्रहाक्षमं । आद्येपिस्वतःप्राप्तस्यतत्वावेदनरूपप्रामाण्यस्य त्यागःकिमनुमानविरोधादागमविरोधाद्वाभाविबाधकशंकामात्रेणवा । नाद्यौ । तयोः प्रामाण्येतद्विरोधेनाक्षस्याप्रामाण्यंसतिचतस्मिन्मानाविरोधेनतयोःप्रामाण्यमित्यन्यो न्याश्रयात् । अक्षस्यतुप्रबलस्यप्रामाण्यम(नुमितिशब्दाविरो)नुमानागमाविरोधापे क्षंनेतिनान्योन्याश्रयः । नहिसिंहःशशशावकाभा(वंप्रतीक्ष्य)वमपेक्ष्यवनंगाहते ।

स्यप्रामाण्यमितीतिचेन्न । प्रत्यक्षप्रामाण्यसिद्धेरनुमानादिविरोधाभावानपेक्षत्वान्नान्योन्याश्रयइत्याह ॥ अक्षस्यत्विति ॥ प्र बलस्यदुर्बलविरोधाभावापेक्षानास्तीत्यत्रदृष्टांतमाह ॥ नहीति ॥ “ पोतस्तोकोर्भकोडिंभःपृथुकःशावकःशिशु ”रित्यभिधानं । स्यादयमन्योन्याश्रयपरिहारः यदिप्रत्यक्षस्यानुमानादितःप्राबल्यंस्यात्तदेवकुतइत्यतः तस्यानुमानादितोजात्याप्राबल्यंसमर्थय

ते ॥ प्रत्यक्षस्येति ॥ प्रत्यक्षस्यानुमानादितःप्राबल्यंचतदसाध्यकार्यकारित्वेन । तच्चकार्यंद्विविधं । तदगृहीतार्थविषयकत्वं तदनिवर्त्यनिवर्तकत्वंचेत्यभिप्रेत्योक्तं ॥ तदगृहीतेत्यादि ॥ अनुमित्याद्यगृहीतव(ह्निगत)स्तुगतरेखोपरेखादिग्राहकत्वादित्यर्थः ॥ दिङ्मोहादीति ॥ प्रतीच्यांप्राचीत्वारोपेनेयंप्राचीत्याद्याप्तवाक्यजन्यज्ञानेनेयंप्राचीसूर्योदयशून्यत्वादित्याद्यानुमानिकज्ञानेचसत्यपियावत्प्रत्यक्षेणसूर्योदयादिकंनपश्यतितावत्सभ्रमोनानिवर्ततइत्यर्थः । ननुधर्मिप्रतियोग्यादिग्राहकत्वेनोपजीव्यतयैवप्राबल्यंलोकेदृष्टं तदतिरिक्तंजात्याप्राबल्यंनामकीदृशमित्यतस्तद्दर्शयति ॥ दृष्टंहीति ॥ वह्निःशीतइत्यनुमानेस्पार्शनप्र

प्रत्यक्षस्यानुमित्यादितःप्राबल्यंचतदगृहीतरेखोपरेखादिविशेषग्राहित्वादनुमित्याद्यनिवर्तितदिङ्मोहादिनिवर्तकत्वाच्चजात्यैव । दृष्टंहिवह्निशैत्यानुमाने धर्म्यादेश्चक्षुरादिनापिसिद्धानुपजीव्यत्वेपिऔष्ण्यप्रत्यक्षस्यजात्यैवप्राबल्यं ।

त्यक्षस्यप्राबल्येनबाधकत्वंतावदस्ति । तत्रप्राबल्यंकथमितिप्रष्टव्यं । धर्मिग्राहकत्वेनोपजीव्यत्वादितिचेन्न । चक्षुरादिनाधर्मिभूतवह्नेःसिद्धत्वात् नाप्यनौष्ण्यप्रतियोग्यौष्ण्यग्राहकत्वेनोपजीव्यत्वंसंभवति । स्यादेतदेवंयद्यनौष्ण्यंसाध्यंस्यात् । नचैवंभावरूपस्यशैत्यस्यसाध्यत्वात् । तदिदमुक्तंवह्निशैत्येति । तथाचएतादृशस्थलेधर्मिप्रतियोगिग्राहकत्वादिनाप्रत्यक्षस्योपजीव्यत्वाद्यभावेपिकेवलंजात्यैवप्राबल्यंदृष्टमित्यर्थः । नन्वेवंप्रत्यक्षस्यैवानुमानागमाभ्यांजात्याप्राबल्ये“ प्राबल्यमागमस्यैवजात्यातेषुत्रिषु

स्मृत "मितिब्रह्मतर्कवचनविरोधइत्यतआह ॥ प्राबल्यमिति ॥ वैदिकपरब्रह्मादिरूपार्थनिर्णयविषयेआगमस्यैवजात्याप्राबल्यं । अत्रतुघटादिप्रपंचरूपलौकिकार्थस्यप्रस्तुतत्वात्तद्विषयेजात्याप्रत्यक्षस्यप्राबल्याभिधानेनतद्विरोधइत्यर्थः ॥ अतएवेति ॥ एवंलौकिकार्थविषयेप्रत्यक्षस्यैवजात्याप्राबल्यदर्शनादेवेत्यर्थः । उक्तं भगवत्पादैः । एवंजात्याप्राबल्यमुपपाद्याऽनुपसंजातविरोधित्वाच्चप्रत्यक्षस्यप्राबल्यमित्याह ॥ उपक्रमाधिकरणन्यायेनेति ॥ तृतीयाध्यायेतृतीयपादेचिंतितं । "श्रुतेर्जाताधिकारः स्या "दित्यत्र ज्योतिष्टोमेश्रूयते" प्रजापतिरकामयतप्रजाःसृजेयेतिसतपोतप्यततस्मात्तेपानात्त्रयोदेवाअसृज्यंतअग्निर्वायुरादित्य

प्राबल्यमागमस्यैवजात्यातेषुत्रिषुस्मृतमितितुवैदिकार्थविषयं । अतएवोक्तं । "क्वचप्रत्यक्षतःप्राप्त मनुमागमबाधितं"मिति। उपक्रमाधिकरणन्यायेनोपसंहाराद्रुपक्रमस्यैवानुपसंजातविरोधित्वाच्च । उक्तंहि । "असंजातविरोधित्वादर्थवादोयथाश्रुतः ।व्याख्येयस्तद्धिरुद्धस्याविध्युद्देशस्यलक्षणे"ति।

स्तेतपोतप्यंततेभ्यस्तेपानेभ्यस्त्रयोवेदाअसृज्यंतअग्नेर्ऋग्वेदोवायोर्यजुर्वेदआदित्यात्सामवेद" इत्युपक्रम्यश्रूयते "उच्चैर्ऋचाक्रियतेउपांशुयजुषाउच्चैःसाम्ने" ति । तत्रसंदेहः किमुच्चैष्ट्वादयोऋगादिधर्माः ऋचामंत्रेणयत्क्रियतेतदुच्चैःकर्तव्यमिति । किंवाऋग्वेदादिधर्माः ऋग्वेदेनोच्चैरिति । तत्रक्रियतइतिलकारव्यत्ययेनकुर्यादितिविधेरभिप्रेततयोपसंहारगतेषुविध्युद्देशेषुऋगादिशब्दश्रवणादुपक्रमगतार्थवादेऋग्वेदादिशब्दसत्त्वेपिअर्थवादस्यविधिबोधितार्थप्राशस्त्यमात्रप्रतिपादकस्यविधिशेषत्वेनगुणप्रधानयो

विंरोधेप्रधानस्यविध्युद्देशस्यैवानुसरणीयत्वादृगादिधर्माउच्चैष्ट्वादयः । तथाचार्थवादगतऋग्वेदादिपदंलक्षणयास्वार्थत्यागेनविध्युद्देशानुसारेणऋगादिमात्रपरमेव । एवंचयजुर्वेदेपिऋग्वेदस्यर्चासत्त्वाद्यजुर्वेदादिगतेष्वप्यृगादिषुउच्चैष्ट्वादयःकर्तव्याइतिपूर्वपक्षः । सिद्धांतस्तुलब्धात्मनएवप्रधानस्यगुणाद्बलीयस्त्वंवाच्यं । नचेहविध्युद्देशानांऋगादिविषयतयालब्धात्मता । उपक्रमेवेदशब्दसंकीर्तनेनवेदानामतःपरंकिंचित्विधास्यतइत्याकांक्षायांअनंतरंविधास्यमानस्योच्चैष्ट्वादेर्वेदधर्मत्वावगमात्तदेकवाक्यतयापश्चादापततउपसंहारस्यतद्विरुद्धार्थबोधकत्वासंभवात् असंजातविरोध्युपक्रमगतार्थवादानुसारेणपश्चादापततस्तद्विरुद्धस्योपसंहारस्थविध्युद्देशस्यलक्षणैवकार्या । तथाचऋक्शब्दस्यऋग्वेदलक्षकत्वेनोच्चैष्ट्वादयऋग्वेदधर्माएवेति । एवंचऋग्वेदेनयत्क्रिय

लिंगाच्छ्रुतेरिवशीघ्रगामित्वाच्च । उक्तंच ।

तेतदेवोच्चैःकर्तव्यं अतोयजुर्वेदादिगतेष्वप्यृगादिषुउच्चैष्ट्वादिकंनकर्तव्यंकिंतूपांशुत्वादिकमेवेति । एवंचयथाऽसंजातविरोधित्वादुपक्रमस्योपसंहारापेक्षयाप्राबल्यंतथाप्रत्यक्षसिद्धान्पदार्थान्पक्षीकृत्यानुमानंप्रयोक्तव्यं । एवंचसन्घटइत्यादिप्रत्यक्षस्याप्यसंजातविरोधित्वेनप्रबलत्वादद्वैतागमाद्यपेक्षयाप्राबल्यमित्यर्थः । विध्युद्देशस्य विधिर्विधानमेवोद्देशोयस्येतिविध्युद्देशोविधिप्रतिपादकंवाक्यंतस्येत्यर्थः । लिंगाद्यपेक्षयाशीघ्रगामित्वाच्चप्रत्यक्षस्यप्राबल्यमित्याह ॥ लिंगाच्छ्रुतेरिवेति ॥ तृतीयाध्याये तृतीयपादे "श्रुतिलिंगवाक्यप्रकरणस्थान (जै० अ० ३. पा. ३ अधि. ७ सूत्र. १४) समाख्यानांसमवायेपरदौर्बल्यमर्थविप्र

कर्षात् "इतिबलाबलाधिकरणसूत्रं। तत्रश्रुतिलिंगयोर्विरोधेइदमुदाहरणं । अग्निचयनेश्रूयते "ऐंद्र्यागार्हपत्यमुपतिष्ठत "इति । अत्रलकारव्यत्ययेनगार्हपत्योपस्थानंकुर्यादित्यर्थः । तत्र "प्रवक्षणाअभिनत्पर्वतानांवज्रंजघन्वान्नेंद्रसश्चिदि" त्याद्यैंद्र्याइंद्रप्रकाशिकयाऋचाइंद्रस्योपस्थानंकर्तव्यं उतगार्हपत्यस्याग्नेरितिसंशये "वस्तुशक्त्यनुसारीहिशब्दःसर्वःप्रवर्तत" इतिन्यायेनअशक्यार्थेवस्तुनःकेनापिविनियोक्तुमशक्यत्वादैंद्र्येतितृतीयाश्रुत्याऐंद्रीशक्यएवविनियोक्तव्या । तस्याश्चशक्तिरिंद्रप्रकाशनएवेतितस्यैवोपस्थानंकर्तव्यं। गार्हपत्यशब्दस्तुयज्ञसाधनत्वसाधर्म्यादिनाइंद्रेप्रवर्तयितव्यइतिपूर्वपक्षः । सिद्धांतस्तुयत्रवस्तुनःसर्वथाऽसामर्थ्यंतत्रैवविनियोगोनसंभवति अस्तित्विंद्रशब्दस्यगार्हपत्येगौणंतत् यथोक्तं "गार्हपत्येतुसामर्थ्यंगौणंमंत्रस्यवि

"प्रत्यक्षेचानुमानेचयथालोकेबलाबलं। शीघ्रमंथरगामित्वात्तथेहश्रुतिलिंगयो" रिति।

द्यत "इति । अवश्यंचमंत्रस्थेंद्रशब्दस्यवाविनियोजकवाक्यपरब्राह्मणस्थगार्हपत्यशब्दस्यवाकस्यचिदमुख्यार्थत्वंकल्पनीयं । तच्चमंत्रस्थेंद्रशब्दएवयुक्तं विधौलक्षणायाअन्याय्यत्वात् । नचविध्यनुसारेणऐंद्र्याऋचोलक्षणयागार्हपत्योपस्थानेविनियोगेपिइंद्रप्रकाशनशक्तिरूपयामुख्यवृत्त्यालिंगात्मिकयाइंद्रोपस्थानेविनियोगोस्त्वितिवाच्यं । गार्हपत्यमुपतिष्ठतइतिप्रत्यक्षश्रुत्याशीघ्रंमंत्रेविनियुक्तेसतितावतैवमंत्राम्नानस्यचरितार्थतयामंथरगामिलैंगिकविनियोगकल्पनाऽयोगात् । तस्माद्गार्हपत्यस्यैवोपस्थानंकर्तव्यमिति। एवंचप्रकृतेव्याप्त्यादिसापेक्षतयामंथरगाम्यनुमानाद्यपेक्षयाप्रत्यक्षस्यझडित्यर्थावगाहित्वात्प्राबल्यमित्यर्थः ॥ प्रत्यक्षइति ॥ यथालोकेप्रत्यक्षेचानुमानेचशीघ्रमंथरगामित्वात्बलाबलंदृष्टं तथेहश्रुतिलिंगयोरित्यर्थः । एवंचश्रुतिलिंगयोःशीघ्र

मंथरगामित्वेनबलाबलचिंतायां उदाहरणतयाप्रत्यक्षानुमानयोर्गृहीतत्वात्प्रत्यक्षस्यानुमानापेक्षयाप्राबल्यंनिश्चितमस्तीत्याशयः । विशेषविषयत्वाच्चप्रत्यक्षस्यप्राबल्यमुपपादयति ॥ यदाहवनीयइत्यादिना ॥ दशमेध्यायेऽष्टमपादेचिंतितं "अविशेषेणयच्छास्त्रमन्याय्यत्वाद्विकल्पस्यतत्संदिग्धमाराद्विशेषशिष्टंस्या" दित्यत्रज्योतिष्टोमे "अरुणयैकहायिन्यापिंगाक्ष्यागवासोमंक्रीणाती" त्यत्रसोमक्रयणकाले "पदेजुहोतिवर्त्मनिजुहोती" तिश्रूयते । गवांपदसंबंधोयत्रतत्रहोमादिकंकार्यमित्युक्तेऽतिप्रसंगप्राप्तौ गौर्येनवर्त्मनासोमक्रयणार्थंनीयतेतद्वर्त्मनिविद्यमानेपदेहोमःकर्तव्यइतितदर्थः । "गार्हपत्येपत्नीसंयाजान्यजती" त्यादिचश्रूयते तथा "यदाहवनीयेजुहोती" तिच । तत्रहोमसामान्येऽधिकरणतयाश्रुतस्याहवनीयस्यहोमविशेषेऽधिकरणत्वेनविहितवर्त्म

यदाहवनीयेजुहोतीत्यस्मात्पदेजुहोतीत्यस्येवविशेषविषयत्वाच्च ।

पदगार्हपत्यादिनाविकल्पोबाधोवेतिसंशयेसामान्यविशेषशास्त्रयोर्द्वयोरपिप्रत्यक्षत्वेनक्लृप्ततयाबलाबलानवधारणात्विकल्पइति पूर्वपक्षः । सिद्धांतस्तुसामान्यविशेषशास्त्रयोःक्लृप्तत्वेपिविशेषशास्त्रतःसोमक्रयणार्थंनीयमानावस्थाविशेषकालीनहोमविशेषेपत्नीसंयाजादिहोमविशेषेचाधिकरणतयावर्त्मपदगार्हपत्यादेःस्पष्टश्रुत्यैवप्राप्तिः । "यदाहवनीय" इतिसामान्यशास्त्रतस्तु आहवनीयादेःहोमसामान्याधिकरणताविधानात्क्लृप्तहोमसामान्यमुखेनतद्विशेषेलक्षणयाप्राप्तिरित्येवंसन्निकर्षविप्रकर्षसद्भावाद्विशेषविषयैर्वर्त्मपदगार्हपत्यादिभिःसामान्यतोविहिताहवनीयस्यबाधएवेति । एवंचप्रकृतेपिप्रत्यक्षस्यविशेषविषयत्वात्तेनसामान्यविष

थिण्याः श्रुतेरेवबाधइत्यर्थः । कथंप्रत्यक्षश्रुत्योःसामान्यविशेषविषयकत्वमित्यतआह ॥ प्रत्यक्षंहीति ॥ किंचप्रत्यक्षस्यनिरवकाशत्वात्सावकाशश्रुतेःप्राबल्यमित्याह ॥ किंचयथायत्किंचित्प्राचीनमिति ॥ नवमेध्यायेप्रथमपादेचिंतितं "देशबद्धमुपांशुत्वं तेषांस्याच्छ्रुतिनिर्देशात्तस्यचतत्राभावादि "त्यत्र ज्योतिष्टोमेश्रूयते" यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशुचरतीति" । तत्राग्नीषोमीयपश्वालंभनात्पूर्वंयत्किंचित्कर्तव्यंदीक्षाकालमारभ्यक्रियमाणदीक्षणीयेष्टियूपावटबर्हिरास्तरणऋत्विग्वरणादितत्समस्तमपिकर्मकिमुपांशुमंत्रोच्चारणपूर्वकंकर्तव्यमुतनेतिसंशयेऽग्नीषोमीयात्पूर्वतनंसमस्तमप्युपांश्वेवकर्तव्यं समस्तव्यक्तिवाचिया

**प्रत्यक्षंहिविशिष्यघटसत्वग्राहि । श्रुतिस्तुसामान्येनद्वितीयनिषेधिका । किंचयथा "यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशुचरती" त्यत्रत्यस्ययत्किंचिच्छब्दस्यप्रकृतविशेषवाचित्वेनसामान्याविषयत्वेपि**

वदर्थकयत्किंचिच्छब्दश्रवणात् । अन्यथायत्किंचिच्छब्दोव्यर्थःस्यात् इतिपूर्वपक्षेप्राप्तेसिद्धांतितं । नाग्नीषोमीयात्प्राचीनंसमस्तमुपांशुकर्तव्यं तत्साधकाभावात् । नचयत्किंचिच्छब्दोस्तीतिवाक्यं । तस्यप्रकृताग्नीषोमीयपूर्वकालीनदीक्षणीयादिसमस्तविशेषवाचित्वेनसामान्याविषयत्वेपिदीक्षणीयाव्यतिरिक्तेतस्यसावकाशत्वेनसंकोचकरणात् । कुतइतिचेत् "यावत्यावाचाकामयीत तावत्यादीक्षणीयायामनुब्रूयादि" तिनिरवकाशवाक्यसद्भावात् । अतोग्नीषोमीयात्प्राक्दीक्षणीयेष्टिव्यतिरिक्तमेवोपांशुकर्तव्यमिति ॥ प्रकृतेति ॥ प्रकृताग्नीषोमीयपश्वालंभपूर्वकालीनदीक्षणीयेष्टिऋत्विग्वरणयूपावटादिसमस्तविशेषवाचित्वेनेत्य

र्थः ॥ दीक्षणीयेति ॥ प्रकृतविशेषेष्वपीतिशेषः । ननुतर्हिप्रकृतेश्रुतिप्रत्यक्षयोःकथंसावकाशत्वनिरवकाशत्वेइत्यतस्तदुपपादयति ॥ तथावृत्त्यंतरेणेत्यादिना ॥ "तत्त्वमसीत्यादौ" वृत्त्यंतरेणलक्षणया "ब्रह्मैवसन्ब्रह्माप्येती" त्यादौब्रह्मशब्दस्यानेकार्थत्वेन "सर्वएकीभवंती" त्यादौस्थानैक्यादिरूपविषयांतरपरत्वेनवाऽद्वैतश्रुतेःसावकाशत्वमित्यर्थः ॥ निरवकाशेनेति ॥ वृत्त्यंतरादिनावकाशानर्हेणेत्यर्थः । पूर्वंसामान्यविशेषभावेनबाधेतात्पर्यं अत्रतुसावकाशत्वादिनासंकोचेइतिभेदः । यद्यपिसा

दीक्षणीयाव्यतिरिक्तेसावकाशत्वात् "यावत्यावाचाकामयीततावत्यादीक्षणीयाया मनुब्रूया" दित्यनेननिरवकाशेनसंकोचः । तथावृत्त्यंतरेणवाअनेकार्थत्वेनवाविषयांतर परत्वेनवासावकाशायाःश्रुतेर्निरवकाशेनाक्षेणसंकोचःकिंनस्यात् । किंचपंचदशरा त्रेप्रथमेहनिअग्निष्टुन्नामकेनामातिदेशेनएकाहाग्निष्टुद्धर्मभूतासुब्रह्मण्याग्नेयीप्रासा ।

मान्यविशेषभावस्थलेपिसावकाशत्वादिनासंकोचएवक्रियते तथाप्युदाहरणभेदेनशब्दभेदेनचोपपादनमात्रमितिद्रष्टव्यं । किंच "बहुबाधस्यान्याय्यत्वादि" तिन्यायेनद्वैतग्राहिप्रत्यक्षादिबहुप्रमाणाऽबाधायाऽद्वैतवाक्यस्यप्रतीतार्थबाधएवकार्यइत्याशयेनाह ॥ किंचपंचदशरात्रइत्यादिना ॥ द्वादशाध्यायेद्वितीयपादेचिंतितं । "जै. अ. १२. पा. २. अधि. ७ सू. २२ विप्रतिषिद्धधर्माणांसमवायेभूयसांस्यात्सधर्मत्व" मित्यत्र । अयमत्राधिकरणनिष्कर्षः । अस्तिपंचदशरात्राख्यंसत्रंपंचदशसुत्यात्मकं

तस्यप्रथमंसौत्यंअहरग्निष्टुन्नामकं ततःपराणित्रीण्यहानि ज्योतिर्गौरायुरित्येतन्नामकानि अग्निष्टुत्ज्योतिर्गौरायुरित्येतन्नामकाऐ काहिकाःप्रसिद्धाः । अपरेपिक्रतवोवर्तंते तेषांनामान्यग्निष्टुदादीनि तदीयेतिकर्तव्यताप्राप्त्यर्थंपंचदशरात्रस्यप्रथमदिवसचतुष्टये स्थाप्यंते । ततःपराण्येकादशाहानिद्वादशाहक्रतुप्रकृतिकानि । तत्रपंचदशस्वप्यहस्सुउपसदःसंति । आज्यहविष्काइष्टयोह्युप सदइत्युच्यंते । तत्रसुब्रह्मण्यानामकायजुर्वेदीयनिगदविशेषाःसंति। तत्र" यदस्यकर्मणोत्यरीरिचंयद्वान्यूनमिहाकरं । अग्निष्ट त्स्विष्टकृद्विद्वान्सर्वंस्विष्टंसुहुतंकरोत्वि" त्याग्नेयीसुब्रह्मण्या । "गौरावस्कंदिन्मेधातिथेमेषवृषाणअहल्यायैजारे" त्यैंद्रीसुब्रह्म ण्या । इत्येवंसुब्रह्मण्याद्वयमस्ति । तेनाग्नींद्रयोराह्वानंतत्रोपसत्कालेकार्यं । तत्रपंचदशरात्रस्ययत्प्रथममहरग्निष्टुन्नामकंतत्रोपस त्कालेएकाहाग्निष्टुन्नामधेयसाम्येन आग्नेयीसुब्रह्मण्याप्राप्ता । एकाहाग्निष्टुतिउपसत्कालेआग्नेय्याःसुब्रह्मण्यायाःसत्त्वात् । ज्यो तिर्गौरायुरित्येतत्संज्ञकेषुत्रिष्वहस्सुक्रियमाणोपसत्कालेज्योतिर्गौरायुरित्येतत्संज्ञकैकाहनामधेयसाम्येनैंद्रीसुब्रह्मण्याप्राप्ता । ऐ काहिकज्योतिरादिदिवसेउपसत्कालेऐंद्र्याःसुब्रह्मण्यायाःसत्त्वात् । परिशिष्टेष्वेकादशाहस्सुक्रियमाणोपसत्कालेऐंद्र्येवसुब्रह्मण्या चोदकेनप्राप्ता । एतत्प्रकृतिभूतेद्वादशाहक्रतौक्रियमाणोपसत्कालेऐंद्र्याःसुब्रह्मण्यायाःसत्त्वात् । एवंचपंचदशरात्रेआद्याहीयो पसदःआग्नेयीसुब्रह्मण्याअंगं । परिशिष्टानांचतुर्दशानामह्नांऐंद्रीअंगं । तत्रचैंद्रीत्रिषूपसत्कालेनामधेयेनप्राप्नोति । एकादशाह स्सुचचोदकेनेतिविवेकइतिवस्तुगतिः । तत्राग्निष्टुन्नामकेप्रथमेह्नि उपसत्कालीनसुब्रह्मण्यायांसंदेहः किमाग्नेयीआह्वातव्याऐंद्री ति । ननुप्रथमेह्नि उपसत्कालेऐंद्र्याःप्राप्तेरेवाभावात्संदेहएवानुपपन्नइतिचेत् संप्रदायानभिज्ञोसि । याउपसदस्ताऐंद्र्यइतिसामा

न्यश्रुत्याउपसन्मात्रस्यइंद्रदेवताकत्वावगमेनऐंद्र्याःसुब्रह्मण्यायाअग्निष्टुन्नामकप्रथमाहःसंबंध्युपसत्कालेपिप्राप्त्यासंशयसंभवात् । तत्रैकाहाग्निष्टुदुपसदःआग्नेयीसुब्रह्मण्यांगत्वेनतन्नामसाम्येनप्रथमोपस्थितत्वेनमुख्यत्वात् । असंजातविरोधित्वेनचाग्नेय्येवआह्वातव्या । नत्वैंद्री चरमोपस्थितत्वेनसंजातविरोधित्वेनचामुख्यत्वात् । तथाचैतदनुसारेणचतुर्दशाहस्स्वप्याग्नेय्येवाह्वातव्येतिपूर्वपक्षः । सिद्धांतस्तुऐंद्र्येवाह्वातव्येति । चतुर्दशस्स्वहस्सु उपसत्कालेऐंद्र्याआहूयमानत्वात् । भूयसांसाधर्म्यायात्रापिऐंद्र्येवाह्वातव्या । बहुबाधस्यान्याय्यत्वात् । "त्यजेदेकंकुलस्यार्थे" इतिन्यायादिति । प्रथमेह्नीत्यनंतरंउपसत्कालइतिशेषः ॥ अ

तस्याअल्पविषयायाश्चतुर्दशाहस्सुचोदकेनप्राप्तयाऐंद्र्याबहुविषययाबाधः । बहुबाधस्यान्याय्यत्वात् । तथाद्वैतग्राहिप्रत्यक्षतदुपजीव्यनुमानकर्मकांडसृष्ट्यादिवाक्यसगुणोपासनावाक्यादिरूपबहुप्रमाणाबाधायाद्वैतवाक्यस्यप्रतीतार्थबाधःकिंनस्यात् ।

ल्पविषयायाइति ॥ अग्निष्टुन्नामकप्रथमाहस्संबंध्युपसन्मात्रविषयत्वादित्यर्थः । ननुचतुर्दशाहस्सुचोदकप्राप्तयेत्यनुपपन्नं । उक्तरीत्याएकादशस्वेवाहस्सुचोदकेनप्राप्तेःत्रिष्वहस्सुचनामधेयेनैवप्राप्तेर्निर्णीतत्वादितिचेत्सत्यं । चोदकेनेत्यनंतरंनामधेयसहितेनेतिशेषः । तथाचनामधेयसहितेनचोदकेनप्राप्तयाऐंद्र्येत्यर्थोद्रष्टव्यः । तत्रत्रिषुनामधेयेनएकादशसुचोदकेनेतिविवेकः । ननुकथमत्रद्वैतग्राहिप्रमाणानांबहुत्वमित्यतआह ॥ तथाद्वैतग्राहीति ॥ द्वैतग्राहिबहुप्रमाणविरोधादेवाद्वैतवाक्यस्यप्रतीता

र्थेऽप्रामाण्यमित्यत्रभगवत्पादवाक्यंसंवादयति ॥ तदुक्तमिति ॥ ७ ॥ प्रत्यक्षस्यजात्योपक्रमादिन्यायैश्चप्राबल्यविव रणं ॥ १० ॥ श्रुतेःस्मृतितइति ॥ स्मृतीनांश्रुतिमूलकत्वेनोपजीव्यत्वाद्यथाश्रुतेःस्मृतितःप्राबल्यंतथाद्वैतग्राहिप्रत्यक्षस्याप्य द्वैतश्रुत्यपेक्षयाप्राबल्यमित्यर्थः । तदुपपादयति ॥ तच्चेति ॥ तच्चोपजीव्यत्वेनप्राबल्यं अक्षेणचाक्षुषप्रत्यक्षेण ग्राह्यत्वाद्धेतो रित्यन्वयः ॥ अनुमितिकारणस्येति ॥ स्वरूपसतःपक्षादेरनुमितिकारणत्वाभावात्कथमेतत् । नचपक्षशब्देनतज्ज्ञानग्रहणं

तदुक्तं "बहुप्रमाणविरोधेचैकस्याप्रामाण्यंदृष्टंशुक्तिरजतादावि" ति ॥ ७ ॥ इतिप्रत्यक्षस्यजा त्योपक्रमादिन्यायैश्चप्राबल्यं ॥ १० ॥ किंचोपजीव्यत्वात्प्राबल्यमक्षस्य श्रुतेःस्मृतितइव । तच्चाक्षेणानुमितिकारणस्यपक्षसाध्यहेतुव्याप्त्यादेःशाब्दधीहेतोःशब्दस्वरूपस्यतद्धर्मस्ययोग्य तादेःउपक्रमोपसंहारैकरूप्यादेःअनुमितिशाब्दधीस्वरूपतत्प्रामाण्यादेश्चग्राह्यत्वात् । यदाहि घटोव्यापकःसत्वादित्यत्राक्षंधर्मिमात्रग्राहित्वेनशुचिनराशिरःकपालंप्राण्यंगत्वादित्यत्रशब्दः

तथात्वेऽक्षेणपक्षस्यग्राह्यत्वादित्युक्त्ययोगात् । उच्यते । अनुमितिकारणस्येत्येतत् अनुमितिप्रयोजकस्येतिव्याख्येयं । पक्षादी नांचज्ञानद्वाराप्रयोजकत्वंत्वस्तीतिध्येयं ॥ शब्दस्वरूपस्येति ॥ तस्यज्ञानकरणत्वादितिभावः । उपक्रमोपसंहारयोर्यदैकरूप्यं तदादेः ॥ धर्मिमात्रग्राहित्वेनेति ॥ एतदनुमानबाधकंयदक्षंतस्यव्यापकत्वविरोधिपरिच्छिन्नपरिमाणग्राहकस्यपक्षीभूतघट

ग्राहकत्वेनैवोपजीव्यत्वं । यदिचसत्त्वरूपहेतुग्राहकत्वेनाप्युपजीव्यत्वंब्रूयास्तर्हिसिद्धांतेऽतिरिक्तसत्तायाअभावात्तस्याअपिपक्ष कोटावेवनिवेशइत्यवधेयं । प्राण्यंगत्वादित्यनंतरंशंखवदितिशेषः ॥ साध्यमात्रग्राहित्वेनेति ॥ दृष्टांतेसाध्यग्राहकागमजा तीयत्वमात्रेणेतिव्याख्येयं । अयमभिप्रायः । नरशिरःकपालंशुचिप्राण्यंगत्वाच्छंखवदितिनरशिरःकपालशुचित्वानुमानस्य बाधकतयाऽभिप्रेतोयो "नारंस्पृष्ट्वास्थिसस्नायुसवासाजलमाविशे" दित्यशुचित्वागमस्तस्यदृष्टांतेशंखेशुचित्वग्राहकोयः "त्रैलो क्येयानितीर्थानिवासुदेवस्यचाज्ञया । शंखेतिष्ठंतिविप्रेंद्रतस्माच्छंखंप्रपूजये" दित्याद्यागमस्तज्जातीयत्वमात्रेणप्राबल्यमितिसंप्र

साध्यमात्रग्राहित्वेनमनोविभुज्ञानासमवाय्याधारत्वा
दित्यत्रानुमानंहेतुमात्रग्राहित्वेनाऽनुमानस्योपजीव्यं ।

दायः ॥ ज्ञानासमवायीति ॥ ज्ञानासमवायिकार(णभूतात्म)णात्ममनस्संयोगाधारत्वादात्मवदित्यर्थः ॥ हेतुमात्रेति ॥ "युगपज्ज्ञानानुत्पत्तिर्मनसोलिंग" मित्युक्तत्वेनयत्संयोगवशाज्ज्ञानेक्रमःप्रक्रमते । तदेकंक्रमिकज्ञानासमवायिकारण(भूतसं)सं योगाधारभूतंकिंचिद्द्रव्यमणुभूतमंगीकार्यं । तथाचमनोविभुत्वानुमानस्यबाधकीभूतंयत् "सुखादिप्रतीतिःक्रमिकसंयोगवत्क रणसाध्याक्रियात्वाच्छिदिक्रियावदि" त्येवमाद्यनुमानं तत्हेतुमात्रग्राहकत्वेनोपजीव्यमित्यर्थः । यद्यपीदंपक्षीभूतमनोग्राहक मपीतिनहेतुमात्रग्राहकं तथापिज्ञानासमवाय्याधारत्वेनैवमनोग्राहकं । नमनस्त्वेनकेवलंमनःस्वरूपमात्रग्राहकमितिसंप्रदायः ॥

सर्वेति ॥ व्याख्याद्यशेषेत्यर्थः । ननुयुष्माभिःसन्घटइत्यादिचाक्षुषप्रत्यक्षविरोधोऽभिहितस्तस्यदृश्यत्वादिलिंगापेक्षितग्राहित्वे नोपजीव्यत्वेपि "नेहनाने" त्यादिशब्दस्वरूपादिग्राहकत्वाभावाच्छब्दापेक्षितसर्वग्राहित्वेनकथमुपजीव्यत्वं येनप्राबल्यंस्यादि त्यतआह ॥ चक्षुरादेरिति ॥ सन्घटइत्यादिसत्त्वग्राहिणइत्यर्थः ॥ तद्ग्राहीति ॥ शब्दस्वरूपग्राहिश्रोत्रं तज्जन्यज्ञानप्रामाण्यादि ग्राहीसाक्षीतिध्येयं ॥ रूपादीति ॥ रूपादीनामपिपक्षत्वात्रूपादिरूपधर्म्यंशइतिवारूपादिमद्घटादिप्रपंचरूपधर्म्यंशइतिवार्थः ।

तदेहप्रत्यक्षंलिंगशब्दापेक्षितसर्वग्राहीतिकथंनोपजीव्यं । चक्षुरादेःशब्दतज्ज न्यज्ञानप्रामाण्याद्यग्राहित्वेपितद्ग्राहिश्रोत्रसाक्ष्यादिसजातीयत्वात् । रूपा दिधर्म्यंशेसाक्षादुपजीव्यत्वाच्चप्राबल्यं । दृष्टंचनरशिरःकपालाशुचित्वागम स्यतच्छुचित्वानुमानादुपजीव्यशुचित्वग्राहिशब्दसाजात्यमात्रेणप्राबल्यं ।

ननुसाक्षादनुपजीव्यस्यउपजीव्यसजातीयत्वमात्रेणप्राबल्यमदृष्टचरमित्यतआह ॥ दृष्टंचेति ॥ अशुचित्वागमस्य "नारंस्पृष्ट्वे" त्यादेरित्यर्थः ॥ तदिति ॥ नरशिरःकपालेत्यर्थः ॥ उपजीव्यशुचित्वेति ॥ दृष्टांतीभूतेशंखेशुचित्वग्राहितयोपजीव्य भूत "त्रैलोक्येयानी" त्यादिशब्देत्यर्थः । नन्वथापिअनुमानंप्रतिप्रत्यक्षंयथोपजीव्यं तथाप्रत्यक्षंप्रत्यनुमानमप्युपजीव्यं ज्ञाते नहिचक्षुरादिनाघटादिसत्त्वंगृह्यतइतिवक्तव्यं । तत्स्वरूपज्ञानंचरूपादिज्ञानजन्यं । तथाचानुमानस्ययथाव्याख्याद्यंशेप्रत्यक्षा

पेक्षा तथाप्रत्यक्षस्यापिस्वस्वरूपसिद्धिंप्रत्यनुमानापेक्षातुल्येत्याशंक्यनिराकरोति ॥ यद्यपीति ॥ तथापीति ॥ इंद्रियस्याऽज्ञातकरणत्वाज्ज्ञानजननार्थं नस्वस्वरूपज्ञानापेक्षा । अनुमानादीनांतुज्ञानजननार्थमेवप्रत्यक्षापेक्षेतिविशेषसद्भावान्नानुमाप्रत्यक्षंप्रत्युपजीव्येत्यर्थः । नन्वनुमानविरुद्धत्वात्प्रत्यक्षस्यैवाप्रामाण्यंकिंनस्यादित्यतआह ॥ अक्षेति ॥ तदिति ॥ चक्षुस्साक्ष्यादीत्यर्थः । अनुमाननिष्ठव्याप्त्यादेःशब्दनिष्ठयोग्यतादेरितिविवेकः । व्याप्त्यादेर्बाधेऽनुमेयस्ययोग्यतादेर्बाधेशब्दार्थस्यचकुतो

यद्यपींद्रियमनुमेयं तथापितस्याज्ञातकरणत्वान्नानुमोपजीव्या । अक्षाप्रामाण्येहितत्सिद्धस्य व्याप्त्यादेर्योग्यतादेश्चबाधेनानुमेयस्यशब्दार्थस्यचबाधःस्यात् । अनुमेयस्यव्याप्त्यादिनानुमितिप्रामाण्यादिनाशब्दार्थस्यचयोग्यतादिनाशाब्दधीप्रामाण्यादिनाचतुल्ययोगक्षेमत्वात् ।

बाधइत्यतस्तदुपपादयति ॥ अनुमेयस्येत्यादिना ॥ तुल्येति ॥ समसत्ताकत्वादित्यर्थः । नन्विदमयुक्तंअनुमेयस्यव्याप्त्यादिसमसत्ताकत्वनियमाभावात् धूलीपटलेधूमभ्रमादिनानुमितिर्जायते । तत्रदैवाद्वह्निरप्यस्ति तथाचतत्रानुमेयस्यव्यावहारिकत्वेनव्याप्त्यादेःप्रातिभासिकतयाऽनुमेयस्यव्याप्त्यादिनासमसत्ताकत्वाभावाद्व्यभिचारइतिचेत् । अत्रवदंति । अत्रव्याप्त्यादीत्यादिपदेनचित्रगुमानयेत्यादिवदतद्गुणसंविज्ञानबहुव्रीहिणापंचरूपमध्येऽबाधितत्वाख्यंरूपंग्राह्यं । तथाचानुमेयस्याबाधितत्व

१ पक्षवृत्तित्वसपक्षवृत्तित्वविपक्षावृत्तित्वाबाधितत्वासत्प्रतिपक्षत्वानिपंचरूपाणि ।

रूपेणसमसत्ताकत्वनियमोभिप्रेतः । एवंचाक्षाप्रामाण्ये तद्गृहीतस्यसाध्याभा(वप्रमाभावरू)वाप्रमारूपाबाधितत्वस्यापिबाधेनानुमेयस्यापिबाधोनियतएवेति । गुरुचरणास्तु याद्दच्छिकस्थलेऽनुमेयस्यस्वतःसिद्धत्वेनव्याप्त्यादिबलसिद्धसिद्धिकत्वाभावात् । तथात्वेवह्निरहितस्थलेपिकदाचिद्धूलीपटलेधूमभ्रमेणापिवह्निसिद्ध्यापत्तेः (अतो)ततोव्याप्त्यादिबलसिद्धसिद्धिकंयदनुमेयंतद्व्याप्त्यादिसमसत्ताकं यथाधूमानुमानेव(ह्न्यादीति)ह्निरितिव्याप्तेरत्राभिप्रेतत्वात् । अस्याश्चव्यभिचाराभावाद्व्याप्त्यादीत्येतद्यथा

अन्यथाप्रातिभासिकव्याप्त्यादिमताबाष्पाध्यस्तधूमेनतात्विकोव्यावहारिको(वह्निः)वाग्निःव्यावहारिकव्याप्त्यादिमताचधूमेनतात्विकोऽग्निःव्यावहारिकेणाबाधेनाविरुद्धधर्माधिकरणत्वेनचविश्वस्यजीवेशभेदस्यचतात्विक(स)त्वंसिध्येत् । प्रातिभासिकयोग्यतादिमताऽनाप्तवाक्येनचतात्विकोव्यावहारिकोवार्थःव्यावहारिकयोग्यतादिमताचलौकिकवाक्येनाग्निहोत्रादिवाक्येनचतात्विकोर्थःसिध्येत् ।

स्थितमेवेत्युपदिशंति । अतएवोक्तंसुधायां "याद्दच्छिकस्थलेव्याप्त्यादिबलसिद्धसिद्धिकत्वाभावादनुमेयस्ये"ति ॥ अन्यथेति॥ अनुमेयस्यव्याप्त्यादिसमसत्ताकत्वाभावइत्यर्थः । वह्निः ह्रदे व्यावहारिकव्याप्त्यादिमतेत्येतत्व्यावहारिकाबाधितत्ववतेति व्याख्येयमित्याहुः । व्यावहारिकेणाबाधेनविश्वस्यतात्विकत्वंव्यावहारिकेणविरुद्धधर्माधिकरणत्वेनजीवेशभेदस्यचतात्विकत्वं सिध्येदित्यन्वयः । शब्दार्थस्ययोग्यतादिनासमसत्ताकत्वाभावेऽतिप्रसंगमाह ॥ प्रातिभासिकेति ॥ नन्वयंप्रदेशोबिंबवान्

प्रतिबिंबवत्त्वादितिप्रतिबिंबेनाबिंबानुमानंक्रियते तत्राबिंबस्यसत्यत्वात्प्रतिबिंबस्यप्रातिभासिकतयामिथ्यात्वेनतत्रसामानाधिकरण्यगर्भव्याप्तेरेवाभावात्कथंसत्यभूतबिंबरूपाऽनुमेयस्यव्याप्त्यादिसमसत्ताकत्वमित्यतआह ॥ प्रतिबिंबस्येति ॥ प्रतिबिंबस्यमिथ्यात्वेनसाध्यसामानाधिकरण्यरूपव्याप्त्यभावेपिबिंबरहितस्थलेऽवृत्तित्वंवाबिंबराहित्येनावृत्तित्वंवाव्याप्तिरस्त्येव । तथाचप्रतिबिंबस्यसत्यत्ववादिमतेपिबिंबरहितावृत्तित्वमस्त्येव । प्रतिबिंबस्यमिथ्यात्ववादिमतेपिप्रतिबिंबस्यसत्यत्वाभावादेवप्रतिबिंबर

प्रतिबिंबस्यमिथ्यात्वेपिबिंबरहितावृत्तित्वरूपाव्याप्तिरस्त्येव । नचधूमस्यता
त्विकाग्निनानव्याप्तिःदृश्यत्वस्यतुतात्विकमिथ्यात्वेनव्याप्तिरित्यास्ति । न(चा)
द्यापिमिथ्यात्वप्रमाणंतत्वावेदकमन्यदतत्वावेदकमितिव्यवस्थासिद्धा ।
येनक्लृप्तनियमत्यागः । अकस्मात्त्यागेचदृश्यत्वस्यामिथ्यात्वनियमोपित्याज्यः ।

हितावृत्तित्वमस्त्येव । अविनाभावरूपव्याप्तिरस्त्येवेत्यर्थः । ननुधूमाद्यनुमानस्यातत्वावेदकत्वेनतन्निष्ठव्याप्त्यादेरपिव्यावहारिकत्वेनाग्नेरपिव्यावहारिकतयातात्विकत्वाभावेनानुमेयस्यव्याप्त्यादिसमसत्ताकत्वमस्ति । दृश्यत्वानुमानस्यतुतत्वावेदकतयाव्याप्त्यादिसमसत्ताकत्वाभावेपिनदोषइत्यप्रयोजकतायामाह ॥ नचेति ॥ कुतोनचेत्यतआह ॥ नहीति ॥ कारणंविनापिक्लृप्तनियमत्यागेबाधकमाह ॥ अकस्मादिति ॥ एवमनुमेयस्यव्याप्त्यादिसमसत्ताकत्वमुपपाद्यानुमितिप्रामाण्यादिनापिसमसत्ताकत्वमुपपादयि

तुमुत्तरोग्रंथः । तत्रेदमाशंकते ॥ नन्विति ॥ तथापीति ॥ अनुमेयस्यव्याप्याद्यादिसमसत्ताकत्वेसत्यपीत्यर्थः ॥ कथमिति ॥ येना नुमितिप्रामाण्यस्यसत्यत्वेऽनुमेयस्यसत्यत्वंस्यादितिभावः । अप्रमाणत्वेन अतत्वावेदकप्रमाणत्वेन । तद्विषयस्यअतत्वावेदकप्रमा णविषयस्य । तथाचानुमित्यादिप्रामाण्यग्राहकस्यप्रत्यक्षस्याप्रामाण्येऽनुमितिप्रामाण्यस्यापिमिथ्यात्वापत्त्याविषयस्यानुमेयस्यापि मिथ्यात्वमेव। प्रमाणांतरेणतत्सि(द्धेरसं)द्ध्यसंभवात् प्रत्यक्षस्यचाप्रमाणत्वात्। अद्वैतश्रुतिजन्यज्ञानप्रामाण्यग्राहकस्यप्रत्यक्षस्याप्र

ननुतथापिकथंप्रामाण्यमिथ्यात्वेविषयमिथ्यात्वं । प्रत्यक्षस्याप्रमाणत्वेनतद्विषयस्यश्रौ तधीप्रामाण्यस्यमिथ्यात्वेपिश्रुतेःप्रमाणत्वात्तद्बोध्याद्वैतस्यसत्यत्वोपपत्तेरितिचेन्न । रूप्यादिज्ञानेषुप्रामाण्यमिथ्यात्वेविषयमिथ्यात्वदर्शनात् । अर्थाबाधरूपप्रामाण्य स्यातात्विकत्वेऽर्थस्यतात्विकत्वायोगाच्च । यत्तूक्तंवाचस्पतिना "उपजीव्यविरोधे नश्रुत्यप्रामाण्येइदंरूप्यमितिपूर्वधीविरोधान्नेदंरूप्यमितिधीरप्रमास्यादि" ति तन्न ।

माणत्वेन तद्विषयस्यश्रौतधीप्रामाण्यस्यमिथ्यात्वेपिश्रुतिबोध्याद्वैतस्यसत्यत्वमुपपद्यते । श्रुतेःप्रमाणत्वेनतयैवतत्सिद्धिसंभवादि त्यर्थः ॥ अर्थाबाधेति ॥ अर्थाबाधरूपप्रामाण्यस्यार्थसत्त्व(घटिततया)पर्यवसन्नतयाप्रामाण्यबाधेऽर्थबाधएवेतिभावः । ननुश्रुतेः प्रमाणत्वात्तद्बोध्याद्वैतस्यसत्त्वमुपपद्यतइतिचेन्न । श्रुतेरन्यार्थत्वेनस्वार्थेतात्पर्याभावादित्याशयात् ॥ उक्तमिति ॥ किंचोपजी

व्यत्वात्प्राबल्यमक्षस्येत्येतदुपरिसमाधानमुक्तमित्यर्थः। पूर्वधीत्युक्त्याउपजीव्यत्वमुक्तंभवति। नेदंरूप्यमितिधीरेव ॥ यत्प्रामाण्यमिति ॥ अनुमित्यादिप्रामाण्यंस्वस्वरूपसिद्ध्यर्थंसाक्षिप्रामाण्यायत्तंव्याप्त्यादिज्ञानप्रामाण्यायत्तंचभवतीतितत्तस्योपजीव्यं। नन्वेवमनुमितिप्रामाण्यस्यस्वरूपसिद्ध्यर्थंस्वोत्पत्त्यर्थंव्याप्त्यादिज्ञानप्रामाण्या(धीनत्वे)यत्तत्वेप्रामाण्यस्यगुणजन्यत्वापत्त्यापरतस्त्वापत्तिरित्यतउक्तं ॥ अपवादनिरासार्थंवेति ॥ तथाचानुमित्यादिप्रामाण्यंतार्किकमतेउत्पत्तौव्याप्त्यादिज्ञानप्रामाण्या

यत्प्रामाण्यंस्वरूपसिध्यर्थंअपवादनिरासार्थंवायत्प्रामाण्यायत्तंतत्तस्योपजीव्यं । इहनचव्याप्त्यादिज्ञानाप्रामाण्येनुमित्याद्यप्रामाण्यवत्सर्वज्ञ(त्वनिर्दुःख)त्वादिरूपब्रह्मबुध्यप्रामाण्येब्रह्मात्मैक्यबुध्यप्रामाण्यवच्चप्रतिषेध्यज्ञानाप्रामाण्येप्रतिषेधकज्ञानाप्रामाण्यं। येनतदुपजीव्यंस्यात्। यद्वायेनाविनायस्यानुत्थानंतत्तस्योपजीव्यं। इदंरूप्यमितिधीश्चप्रतिषेध्यार्पकतयाधर्म्यर्पकतयाचोपजीव्यैव।

यत्तं। अस्मन्मतेत्वपवादनिरासार्थंबुद्धिदोषनिरासार्थंयत्प्रामाण्यायत्तंतत्तस्योपजीव्यमित्यर्थः । यत्प्रामाण्याधीनसिद्धिकंयत्प्रामाण्यंतत्तस्योपजीव्यमित्यर्थो(बोद्धव्यः)द्रष्टव्यः। एवंसतिपूर्वस्येदंरूप्यमितिज्ञानस्योपजीव्यत्वमेवनास्तीत्याह ॥ नचेति ॥ सर्वज्ञत्वादीति ॥ ब्रह्मात्मैक्यबोधनेस्वरूपमात्रस्यनोपजीव्यत्वं । तथात्वेचैतन्यंचैतन्याभिन्नमितिबोधनापत्त्यासिद्धार्थबोधनापत्तेः। तथाचसर्वज्ञत्वादिविशिष्टंचैतन्यंआत्माभिन्नमितिबोधनीयं । तथाचसर्वज्ञत्वादिविशिष्टब्रह्मबुद्धेरुपजीव्यत्वात्तदप्रा

माण्येतदुपजीविब्रह्मात्मैक्यबुद्धेरप्यप्रामाण्यमेवेत्यर्थः । प्रतिषेध्यज्ञानं इदंरूप्यमितिज्ञानं ॥ नदोषइति ॥ उपजीव्यत्वेकथं बाध्यत्वमितिदोषोनेत्यर्थः ॥ तंत्रमिति ॥ येनइदंरूप्यमितिज्ञानमुपजीव्यंस्यादित्यर्थः ॥ परीक्षितत्वेति ॥ इदंरूप्यमिति ज्ञानंचापरीक्षितमितिभावः । येनविनेत्यादिरूपंपूर्वमुक्तमुपजीव्यत्वंपरीक्षितत्वविशेषितमेवप्राबल्येतंत्रमित्येवंनास्माकमेवपरी क्षितत्वविशेषणमावश्यकं किंनामभट्टोक्तंपश्चात्तनत्वापरपर्यायंपरत्वंप्राबल्येप्रयोजकमित्यंगीकुर्वतस्तवाप्यावश्यकमित्याह ॥

तथापिनदोषः । नह्युपजीव्यत्वमेवप्राबल्येतंत्रं । किंतुपरीक्षितत्वविशिष्टं । उक्तंहि "यावच्छ क्तिपरीक्षायामुपजीव्यस्यबाधने । दोषोनाशोधितेदोषउपजीव्यत्वमस्त्वल" मिति । नहिपर त्वंप्राबल्येतंत्रमितित्वन्मतेपिपरत्वमात्रंतंत्रं । किंतुपरीक्षितत्वविशिष्टं । अन्यथाप्रमानंतरभ्र मस्यवेदात्परस्यबाह्यागमस्यचतत्त्वंस्यात् । परीक्षितत्वंचनतावत्प्रतिषेध्यार्पकेशुक्तिरूप्या

नहीति ॥ इति भट्टेनांगीकृतत्वाद्धेतोः । त्वन्मतेपि व्यवहारेभट्टनयइत्यंगीकुर्वतस्तवमतेपि । परत्वमात्रमेवकुतोनप्राबल्येतं त्रमित्यतआह ॥ अन्यथेति ॥ बाह्येति ॥ वेदस्यापौरुषेयत्वेनपूर्वत्वात्बाह्यागमस्यबौद्धागमस्यपौरुषेयत्वेनपश्चात्तनत्वादिति भावः । तत्त्वंस्यात् प्राबल्यंस्यात् । ततश्चभ्रमबाह्यागमाभ्यांप्रमावेदयोरेवबाधापत्तिरितिभावः । एवंसतिपरीक्षितत्वस्यतवा प्यावश्यकत्वात्परीक्षितत्वविशिष्टमेवोपजीव्यत्वंप्राबल्येतंत्रं । इदंचइदंरजतमितिज्ञानेनास्तीत्याह ॥ परीक्षितत्वंचेति ॥ अ

भेदज्ञानांशइति ॥ तादा(त्म्यरूपांशे)त्म्यारोपांशइत्यर्थः । इदमंशेत्वस्त्येवपरीक्षितत्वं । तदंशेउपजीव्यत्वमप्यस्त्येवेतिभावः । कुतोनोपजीव्यत्वंतादात्म्यरूपांशइत्यतआह ॥ सजातीयेति ॥ इदंरजतंइदंरजतमितिज्ञानद्वयंजातं तत्रापिस्वसमानविषयकभ्रमरूपज्ञानांतरसंवादसत्त्वेनतस्यापिसजातीयसंवादत्वापत्तिरतउक्तं । विशेषदर्शनजन्येतिज्ञानांतरविशेषणं । तादृशंचज्ञानं प्रमारूपमेवभवति । अतएवसाक्षात्स्वविषयविषयकमानांतरसंवादोहिसजातीयसंवादइतिप्रवादः ॥ रूप्यार्थक्रियेति ॥

भेदज्ञानांशोस्ति । सजातीयविजातीयसंवादविसंवादभावाभावौहिपरीक्षा ।
नचात्रविशेषदर्शनजन्यस्वसमानविषयकज्ञानांतररूपःसजातीयसंवादोवारू
प्यार्थक्रियादिरूपोविजातीयसंवादोवास्ति प्रत्युततद्विसंवादएव । दृश्यतेचो
त्तरस्यैवसंवादादिकमितिपूर्वधीर्बाध्या । जगत्सत्यत्वप्रत्यक्षेतुविशेषदर्शनजन्यं
सन्घटइतिज्ञानांतरं घटार्थक्रियाप्रत्यक्षेक्लृप्तदूरादिदोषाभावश्चास्तीतिनतद्बाध्यं।

ज्ञाननिष्ठप्रामाण्यव्यवस्थापनद्वाराज्ञानविषयविषयकरूप्योचितार्थक्रियाकारित्वरूपोविजातीयसंवादइत्यर्थः । नन्वेतादृशसंवादादिकंपूर्वज्ञानस्यचेत्स्यात्तदातस्यापिपरीक्षितत्वमेवस्यादितिचेत्तत्राह ॥ दृश्यतेचेति ॥ प्रकृतेचजगत्सत्यत्वग्राहिप्रत्यक्षंतुपरीक्षितमित्याह ॥ जगत्सत्यत्वेति ॥ नन्वेवंप्रतिषेध्यसमर्पकस्योपजीव्यस्योपजीवकेनबाधांगीकारेऽभेदश्रुतिंप्रतिप्रतिषेध्या

र्पकभेदश्रुतिरेवबाध्यास्यादितिचेत्तत्राह ॥ जीवेशाभेदश्रुतौचेति ॥ तथाचनिषेध्यार्पकतयोपजीव्यमपियदिपरीक्षितंतर्ह्युप जीवकस्यैवबाधकमितिभावः । ननुपरीक्षितत्वमप्यप्रयोजकमेवपरीक्षायाअपिदोषाभावादिज्ञानरूपत्वेनतत्राप्यनाश्वासएवेत्यत आह ॥ इत्थमेवेति ॥ अपौरुषेयत्वेनहेतुना तज्ज्ञानेदोषाभावज्ञानेतद्रूपपरीक्षायामित्यर्थः ॥ त्वदुक्तेत्यादि ॥ दृश्यत्वाद्यनु मानंहेत्वाभासादिदोषरहितंअनुमानयोग्यानांदोषाणामनुपलंभात्इत्येवंहेत्वाभासादिराहित्यरूपपरीक्षायामित्यर्थः । आनुगुण्य

जीवेशाभेदश्रुतौचनिषेध्यार्पिकाभेदश्रुतिःसाक्षिप्रत्यक्षंचादोषत्वात्परीक्षितामितिननतदपिबा
ध्यं। इत्थमेवचदोषाभावादिज्ञानरूपपरीक्षायामनाश्वासेवेदस्यापौरुषेयत्वेनतज्ज्ञानेत्वदुक्तानु
मानेचयोग्यानुपलंभादिनाहेत्वाभासादिराहित्यज्ञानेब्रह्ममीमांसायांचप्रत्यधिकरणंसिद्धांत्य
भिप्रेतार्थेउपक्रमाद्यानुगुण्यज्ञानेचानाश्वासःस्यादितिप्रमाणतदाभासादिव्यवस्थानस्यात् ।
यद्यपिधर्म्यर्पकेइदंज्ञानांशेपरीक्षितत्वविशिष्टमुपजीव्यत्वमस्ति । तथापितन्नबाध्यते ।

ज्ञानरूपपरीक्षायां । नन्विदंरूप्यमितिज्ञानेपिपरीक्षितत्वविशिष्टमुपजीव्यत्वमस्तीत्याशंक्यनिषेधति ॥ यद्यपीति ॥ नेदंरजत मितिज्ञानेधर्मिभूतोयइदमंशःतदर्पकइत्यर्थः ॥ तथापीति ॥ नेदंरजतमित्यत्रइदमंशमात्रंधर्मि नतुरजतत्वविशिष्टं इदमंशमा त्रेरूप्यनिषेधेनैवेष्टसिद्धेः । एवंचयदुपजीव्यंतन्नबाध्यं इदमंशमात्रस्याबाधात् । य(च्चबा)द्बाध्यंरजतत्वविशिष्टं नतदुपजीव्यं

रजतत्वविशिष्टस्याधर्मित्वादित्यर्थः । नन्वेवमैक्यबोधनेपिब्रह्मस्वरूपमात्रमेवधर्मि नतुसार्वज्ञादिविशिष्टंब्रह्मस्वरूपं । एवंचयदुपजीव्यंतन्नबाध्यं य(च्चबा)द्बाध्यंनतदुपजीव्यमितिनैक्यश्रुतेरुपजीव्यविरोधइत्यतआह ॥ शिष्टमिति ॥ ऐक्यवाक्येसार्वज्ञादिनाभावरूपेणनिर्दुःखत्वादिनाऽभावरूपेणवाऽसाधारणधर्मेणैवब्रह्मोद्देष्टव्यं उतचित्त्वादिनासाधारणधर्मेण । द्वितीयेचितएवजीवैक्यंसिद्ध्येन्नब्रह्मणः जीवचितोजीवैक्यस्यममापिसिद्धत्वात् । तस्मादाद्यएवांगीकार्यः । तथाचोपजीव्यविरोधःसुस्थइत्याद्यैक्यभंगेवक्ष्यतइत्यर्थः ॥७॥ प्रत्यक्षस्योपजीव्यत्वेनप्राबल्यविवरणं ॥११॥ औदुंबरीमिति ॥ प्रमाणलक्षणेस्मृतिपादे

शिष्टमैक्यभंगेवक्ष्यते ॥ प्रत्यक्षस्योपजीव्यत्वेनप्राबल्यविवरणं
॥ ११ ॥ यदितुप्रत्यक्षंलिंगबाध्यंतर्हि "औदुंबरींस्पृष्ट्वोद्गायेत्"

चिंतितं । "विरोधेत्वनपेक्षंस्यादसतिह्यनुमान"मित्यत्र ज्योतिष्टोमे"औदुंबरींस्पृष्ट्वोद्गाये"दितिश्रुत्याउदुंबरमयींयज्ञसदस्स्थूणांस्पृष्ट्वाउद्गात्राउद्गानंकर्तव्यमितिविहितं । स्मृतिकारास्तुतत्स्पर्शनविरुद्धंतस्याःकार्त्स्न्येनवाससावेष्टनंस्मरंति । "औदुंबरीवाससर्वावेष्टयितव्ये"ति । तत्स्मरणंप्रमाणं (अप्रमाणंवेति)नवेतिसंशयेस्मृत्यधिकरणेस्मृतीनांमूलश्रुत्यनुमापकतयाश्रुतिमूलकत्वेनप्रामाण्यसमर्थनादियमपिस्मृतिर्मूलश्रुतिमनुमापयंतीप्रमाणमितिपूर्वपक्षः । स्पर्शनवेष्टनयोर्विरुद्धत्वेनतत्कर्तव्यताबोधकयोरपिऔष्ण्यशैत्यवद्विरुद्धत्वाद्वह्नावौष्ण्यप्रत्यक्षेणशैत्यानुमानस्येवप्रत्यक्षसिद्धस्पर्शनश्रुत्यासर्ववेष्टनश्रुत्यनुमानस्यबाधान्मूलश्रुत्यभा

वेनाप्रमाणंस्मरणमितिसिद्धांतः ॥ ऐंद्र्येति ॥ गार्हपत्यमितिप्रत्यक्षश्रुत्याबाधादिंद्रप्रकाशकत्वेनेंद्रशेषत्वानुमानंअप्रमाणमिति सिद्धांतितं । एतदधिकरणंचपूर्वमुपन्यस्तं ॥ शरमयमिति ॥ दशमाध्यायेचतुर्थपादेचिंतितं । "चोदनालिंगसंयोगेतद्विकारःप्रतीयेतप्रकृतिसंनिधानात्" इत्यत्रसोमारौद्रचरौश्रूयते "शरमयंबर्हिर्भवती" ति । तत्रकिंदर्शपौर्णमासिकाःकुशाननिवर्तंते निवर्तंतेवेतिसंशयेउपदेशेनशराणां "प्रकृतिवद्विकृतिःकर्तव्ये" त्यतिदेशेनकुशानांचावगतत्वेनद्वयोरपिप्रमाणत्वात्समुच्चयइति पूर्वपक्षः । सिद्धांतस्तुबर्हिश्शब्दलक्षितेबर्हिःकार्येशराणांविधायकस्यवचनस्यप्रत्यक्षत्वात्तैरेवकृतस्वका(कर्मणां)र्याणांकुशानां

"ऐंद्र्यागार्हपत्यमुपतिष्ठते" "शरमयंबर्हिर्भवति" इतिश्रुतित्रयग्राह्यप्रत्यक्षंचयथाक्रमंऔदुंबरीवा सर्वावेष्टयितव्येतिस्मृतिरूपेणसर्ववेष्टनश्रुत्यनुमानेन "नेंद्रसश्चाभिदाशुष" इतिमंत्रसामर्थ्यरूपेणइंद्र शेषत्वश्रुत्यनुमानेनचोदनालिंगसारूप्येणकुशश्रुत्यनुमानेनबाध्येतेतिसर्वैवमीमांसोन्मूलितास्यात् ।

प्रापकस्यकुशसाधारणस्यातिदेशवाक्यस्यकल्पनंनप्रवर्तते । किंतुकुशव्यतिरिक्तांगप्रापकएवससाधारणोतिदेशइत्यनुमीयते । अतःप्रापकाभावात्कुशानिवर्तंतइतिसिद्धांतितं ॥ स्मृतिरूपेणेति ॥ स्मृत्याख्यलिंगेनेत्यर्थः ॥ चोदनालिंगसारूप्येणेति ॥ चोदनाविधिवाक्यंतत्सारूप्यरूपलिंगेनेत्यर्थइतिव्याख्येयं । यथाप्रकृतिवद्विकृतिःकर्तव्येतिचोदनयाइतरांगानांप्राप्तिः तथात त्सारूप्येणकुशरूपांगस्यापिप्राप्त्यनुमानमित्यर्थः । अत्रसर्वत्राप्यनुमानप्रकारस्त्वित्थं । औदुंबरीश्रुत्युक्तसर्ववेष्टनयुक्ता । बाध

काभावेसतिसर्ववेष्टनप्रतिपादकस्मृतियुक्तत्वात् । यत्यदर्थप्रतिपादकस्मृतियुक्तं तत्तच्छ्रुत्युक्ततदर्थयुक्तं यथासंमतमितिसामान्यव्याप्तिः । कदाचनस्तरीरसिनेंद्रसश्चसिदाशुषइतिमंत्रःइंद्रशेषत्वप्रतिपादकश्रुतियुक्तः बाधकाभावेसतींद्रप्रकाशनसामर्थ्योपेतत्वात् यद्यत्प्रकाशनसमर्थं तत्तस्यशेषत्वप्रतिपादकश्रुतियुक्तं यथासंमतं । सोमारौद्रश्चरुःकुशबर्हिःप्रतिपादकश्रुतियुक्तः कुशश्रुतियुक्तदर्शपौर्णमासचोदनासदृशनिर्वापशब्दाष्टाकपालादिसंख्याद्विदेवतादियुक्तचोदनायुक्तत्वात् यद्यत्सदृशचोदनोपेतंतत्तदीयधर्मप्रतिपादकश्रुतियुक्तं यथासंमतमिति । नन्विदमापादनंमीमांसकमतविरुद्धं । औदुंबर्याद्युदाहरणेषुप्रत्यक्षेणश्रु

अग्न्यौष्ण्यप्रत्यक्षंचतच्छैत्यानुमित्याविवरणोक्तंआत्मस्थायित्वप्रत्यभिज्ञानंचबौद्धोक्ततत्क्ष
णिकत्वानुमित्याबाध्येतेतिकालात्ययापदिष्टोच्छेदःस्यात् । तथाचशृंगित्वेपशुत्वंतंत्रंनतुत
द्विशेषोगोत्वादीत्यादितर्कानुगृहीतेनपशुत्वादिनाशशादेस्तात्विकंव्यावहारिकंवाशृंगं ।

तिरेवबाध्यतइत्येवप्रतिपादितमस्ति । नतुश्रुत्याऽनुमानंबाध्यतइति । अतःप्रत्यक्षस्यशब्दबाध्यत्वांगीकारएवेदमापादनीयं नतुप्रत्यक्षस्यलिंगबाध्यत्वांगीकारे । अतइदमापादनमयुक्तमित्यस्वरसाद्दूषणांतरमाह ॥ अग्न्यौष्ण्येति ॥ आत्मस्थायित्वप्रत्यभिज्ञानमस्माभिर्नोक्तमित्यनुक्तोपालंभइतिशंकापरिहारायोक्तं ॥ विवरणोक्तमिति ॥ तत्क्षणिकत्वेति ॥ आत्मक्षणिकत्वेत्यर्थः । प्रत्यक्षस्यानुमानबाध्यत्वेऽतिप्रसंगांतराण्याह ॥ तथाचेत्यादिना ॥ शशःशृंगीपशुत्वादित्यत्रशृंगित्वेपशुत्वंनतंत्रंकिंतुगोत्वादिरूपःपशुत्वविशेषएवेत्यप्रयोजकतापरिहारायातिप्रसंगंतर्कानुसारेणोपपादयति ॥ शृंगित्वइति ॥ पशुत्वादिनेत्यत्रादि

काभावेसतिसर्ववेष्टनप्रतिपादकस्मृतियुक्तत्वात् । यत्यदर्थप्रतिपादकस्मृतियुक्तं तत्तच्छ्रुत्युक्ततदर्थयुक्तं यथासंमतमितिसामा न्यव्याप्तिः । कदाचनस्तरीरसिनेंद्रसश्चसिदाशुषइतिमंत्रःइंद्रशेषत्वप्रतिपादकश्रुतियुक्तः बाधकाभावेसतींद्रप्रकाशनसाम र्थ्योपेतत्वात् यद्यत्प्रकाशनसमर्थं तत्तस्यशेषत्वप्रतिपादकश्रुतियुक्तं यथासंमतं । सोमारौद्रश्चरुःकुशबर्हिःप्रतिपादकश्रुतियुक्तः कुशश्रुतियुक्तदर्शपौर्णमासचोदनासदृशनिर्वापशब्दाष्टाकपालादिसंख्याद्विदेवतादियुक्तचोदनायुक्तत्वात् यद्यत्सदृशचोदनोपे तंतत्तदीयधर्मप्रतिपादकश्रुतियुक्तं यथासंमतमिति । नन्विदमापादनंमीमांसकमतविरुद्धं । औदुंबर्याद्युदाहरणेषुप्रत्यक्षेणश्रु

अग्न्यौष्ण्यप्रत्यक्षंचतच्छैत्यानुमित्याविवरणोक्तंआत्मस्थायित्वप्रत्यभिज्ञानंचबौद्धोक्ततत्क्ष

णिकत्वानुमित्याबाध्येतेतिकालात्ययापदिष्टोच्छेदःस्यात् । तथाचशृंगित्वेपशुत्वंतंत्रंनतुत

द्विशेषोगोत्वादीत्यादितर्कानुगृहीतेनपशुत्वादिनाशशादेस्तात्विकंव्यावहारिकंवाशृंगं ।

तिरेवबाध्यतइत्येवप्रतिपादितमस्ति । नतुश्रुत्याऽनुमानंबाध्यतइति । अतःप्रत्यक्षस्यशब्दबाध्यत्वांगीकारएवेदमापादनीयं नतुप्र त्यक्षस्यलिंगबाध्यत्वांगीकारे । अतइदमापादनमयुक्तमित्यस्वरसाद्दूषणांतरमाह ॥ अग्न्यौष्ण्येति ॥ आत्मस्थायित्वप्रत्यभि ज्ञानमस्माभिर्नोक्तमित्यनुक्तोपालंभइतिशंकापरिहारायोक्तं ॥ विवरणोक्तमिति ॥ तत्क्षणिकत्वेति ॥ आत्मक्षणिकत्वेत्य र्थः । प्रत्यक्षस्यानुमानबाध्यत्वेऽतिप्रसंगांतराण्याह ॥ तथाचेत्यादिना ॥ शशःशृंगीपशुत्वादित्यत्रशृंगित्वेपशुत्वंनतंत्रंकिंतु गोत्वादिरूपःपशुत्वविशेषएवेत्यप्रयोजकतापरिहारायातिप्रसंगंतर्कानुसारेणोपपादयति ॥ शृंगित्वइति ॥ पशुत्वादिनेत्यत्रादि

र्थवादयोर्दिवाप्यर्चिर्दर्शनान्नक्तमपिधूमदर्शनात्दृ(ष्टिवि)ष्टविरोधेनाप्रामाण्यं "शास्त्रदृष्टविरोधाच्चे" तिसूत्रेणपूर्वपक्षयित्वादि
वानक्तंचार्चिर्धूमयोर्दर्शनशब्दोगौणइति "गुणवादस्त्वि" तिसिद्धांतसूत्रेणदृष्टविरोधःसमाहितः । गौणतानिमित्तंच "दूरभूय
स्त्वादि" तिसूत्रेणोक्तंयथादिवाधूमोदूरस्थैर्भूम्नादृश्यतेनतथार्चिः रात्रौचयथाआर्चिर्दूरस्थैर्भूम्नादृश्यतेनतथाधूमः । अतोनदृष्ट
विरोधादप्रामाण्यमिति ॥ अदितिर्द्यौरिति ॥ प्रमाणलक्षणेमंत्राधिकरणे "अदितिर्द्यौरदितिरंतरिक्षमदितिर्मातासपितास
पुत्र" इतिमंत्रस्यएकस्याअदितेःपरस्परभिन्नद्युगगनाद्यनेकात्मकत्वस्यदृष्टविरोधेनार्थविवक्षायाअयोगादप्रामाण्यमिति "विप्रति

अदितिर्द्यौरित्यादिमंत्रस्यचदृष्टविरोधेनाप्रामाण्येप्राप्तेतदविरोधाय "गुण
वादस्तुगुणादविप्रतिषेधःस्यादि" त्यादिनागौणार्थतानोच्येत । तत्सिद्धि
रित्यादितत्सिद्धिपेटिकयाच "यजमानःप्रस्तर" इत्यादेर्गौणार्थतानोच्येत ।

षेधादि" तिसूत्रेणपूर्वपक्षयित्वा "गुणादविप्रतिषेधःस्यादि" तिसिद्धांतसूत्रेणद्व्यंतरिक्षादिवत्सुखकरत्वादिनाद्युशब्दादीनांगौ
णार्थत्वमंगीकृत्यदृष्टविरोधःसमाहितः । तदेतत्सर्वंशब्दस्यप्रत्यक्षबाधकत्वेविरुध्येत मुख्यार्थपरत्वमेवस्यादित्यर्थः ॥ तत्सि
द्धिरित्यादितत्सिद्धिपेटिकयेति ॥ एकार्थप्रतिपादकानेकाधिकरण(समूहः)संग्रहःपेटिकेत्युच्यते । मीमां(सकशा)साशास्त्र
प्रसिद्धोयंशब्दः । प्रमाणलक्षणेनामधेयपादे "तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिंगसमवाया" दितिसूत्रेण "यजमानःप्रस्तरः

अग्निर्वैब्राह्मणः आदित्योयूपः अपशवोवाअन्येगोअश्वेभ्य" इतिश्रुतिषुप्रस्तरस्ययज्ञसाधनभूतदर्भमुष्टिविशेषस्ययजमानत्वं ब्रा ह्मणस्याग्नित्वं यूपस्यादित्यत्वं गवाश्वव्यतिरिक्तानांअजादीनामपशुत्वं प्रत्यक्षविरुद्धमितितत्परिहारायप्रस्तरादिषुयजमानादि शब्दागौणाइति तेषांप्रवृत्तिनिमित्तभूतागुणाःप्रदर्शिताः । तत्रयजमानशब्दस्यप्रस्तरेप्रवृत्तौ(तत्सिद्धिः)तत्कार्यकरत्वंगुणः । उ भयोरपियज्ञसाधनत्वेनएककार्यकरत्वात् । ब्राह्मणेऽग्निशब्दप्रवृत्तौ(जातिः)जन्मएकप्रभवत्वंगुणः । "ब्राह्मणोस्यमुखमासीत् मुखादिंद्रश्चाग्निश्चे" तिब्राह्मणाग्न्योर्मुखजत्वश्रवणात् । यूपेआदित्यशब्दस्यप्रवृत्तौ आज्यांजननिमित्तमौज्वल्यंगुणः । तदेवसा रूप्यमित्युक्तंसूत्रे । यद्यपितत्सिद्ध्यादिकमपिसारूप्यमेव । तथापिइदंचक्षुर्ग्राह्यंसारूप्यमितिविशेषात्तथोक्तं । अपशुशब्दस्याजा

त्वयाचप्रत्यक्षाविरोधायतत्वंपदयोर्लक्षणानोच्येत । श्रुतिविरोधात्प्रत्यक्षस्यैवाप्रामाण्यसंभवात् ।

एतेनाद्वैतवाक्यमनन्यपरत्वान्नामुख्यार्थंप्रस्तरवाक्यादिकंतुअन्यपरमितिवाचस्पत्युक्तंनिरस्तं ।

दिषुप्रवृत्तौगवादीनांप्रशंसानिमित्तं । पशुशब्देनगवाश्वगतेनोपकारातिशयेनप्रशस्तत्वेलक्षितेनञातदभावःपश्वंतरेषुबोध्यते । यथोक्तं । "गवाश्वादिगतांपूर्वमुपादायप्रशस्ततां । तदभावोन्यपश्वादौनञ्समासेनबोध्यत" इति भूमलिंगसमवायोदाहरणा नितुग्रंथगौरवभयान्नप्रदर्श्यंते । एतावतैवचारितार्थ्यात् । यथोक्तं "तत्सिद्धिजातिसारूप्यप्रशंसालिंगभूमभिः । षड्भिःसर्वत्रश ब्दानांगौणीवृत्तिःप्रकल्पते" ति ॥ प्रत्यक्षाविरोधायेति ॥ सार्वज्ञादिविशिष्टदुःखादिविशिष्टयोरैक्यस्यप्रत्यक्षविरुद्धत्वात् तदविरोधायेत्यर्थः । लक्षणा सार्वज्ञादिभागत्यागेनेतिशेषः ॥ अनन्यपरत्वादिति ॥ अद्वैततात्पर्यलिंगानांसत्त्वेनाद्वैतव्य

तिरिक्तेऽर्थेतात्पर्याभावात्तत्रैवतात्पर्यं । प्रस्तरादिवाक्येतुतात्पर्यलिंगाभावेनयजमानाभेदेनतात्पर्यं । किंनामान्यत्रैवतत्कार्यकारित्वादावित्यर्थः । वाक्यस्यैकत्रतात्पर्यतदभावयोर्मानांतराविरोधतदभावयोरेवप्रयोजकत्वं नतात्पर्यलिंगसत्त्वासत्त्वयोःव्यभिचारादित्याह ॥ सत्यपीति ॥ मानांतरविरोधे प्रत्यक्षरूपमानांतरविरोधे ॥ सोमेनेति ॥ सोमेनयागेनेष्टंभावयेदितितदर्थः । एवंचसोमलतायायागाभेदःप्रत्यक्षेणविरुद्धइत्यर्थः । अनन्यपरत्वस्य प्रतीतार्थव्यतिरिक्तार्थांतरेतात्पर्याभावस्यायोगादित्यर्थः ।

**सत्यपितात्पर्यलिंगेमानांतरविरोधेप्रस्तरादिवाक्यवत्सोमेनयजेतेत्यादिवचानन्यपरत्वस्यैवायोगात् । नहिकुरूपांअशूरंचोद्दिश्यअहोदर्शनीयेतिसिंहइतिचशतकृत्वःप्रयुक्तमपिवाक्यंवाच्यार्थपरंभवति । नवातत्त्वमसिवाक्यंषड्विधतात्पर्यलिंगोपेतमपिमानांतरविरुद्धंवाच्यार्थपरं । किंचोपक्रमोपसंहारादिकंहिप्रत्येकंतात्पर्यलिंगं अस्तिचप्रस्तरादिवाक्येऽपूर्वता ।**

सत्यपितात्पर्यलिंगेमानांतरविरोधेस्वार्थेतात्पर्यनास्तीत्येतद्दृष्टांतांतरेणोपपादयति ॥ नहीति ॥ दर्शनीया सुरूपा । शतकृत्वः शतवारं । शतकृत्वइत्यभ्यासरूपतात्पर्यलिंगसद्भावोक्तिः ॥ प्रयुक्तमपीति ॥ आप्तवाक्यमपीत्यर्थः । प्रत्यक्षविरोधस्तुस्पष्टः ॥ वाच्यार्थेति ॥ विशिष्टैक्यरूपेत्यर्थः । त्वन्मतइतिशेषः । ननुप्रस्तरादिवाक्यवदितिपूर्वोक्तोदृष्टांतोनयुक्तः । तत्रतात्पर्यलिंगस्यैवाभावादित्यतआह ॥ अस्तिचेति ॥ उपक्रमादीनांषण्णामपिसंभूयैवतात्पर्यलिंगत्वान्नापूर्वतामात्रंतात्पर्यलिंगमित्यत

उक्तंउपक्रमेत्यादि । किंचोपक्रमादीनांप्रत्येकमेवतात्पर्यलिंगत्वंवक्तव्यंनतद्बाहुल्यस्यातिप्रसंगादित्याह ॥ त्वत्पक्षेचेति ॥ बहुप्रमाणसंवादस्यास्मन्मतेदार्ढ्यहेतुत्वात्त्वत्पक्षेचेत्युक्तं ॥ एकलिंगेति ॥ उपक्रमरूपेत्यर्थः । लिंगांतरं तत्रैवप्रवर्तमानमुपसंहारादिकं । तत्रदृष्टांतःप्रत्यक्षसिद्धइति । प्रत्यक्षसिद्धेभेदेप्रवर्तमानायाभेदश्रुतेर्यथानुवादकत्वमुच्यतेतथेत्यर्थः । तथाचैकलिंगसिद्धेतात्पर्येलिंगांतरस्यानुवादकत्वाभावेभेदश्रुतेरप्यनुवादकत्वंनस्यादित्याशयः ॥ अन्यशेषत्वादिति ॥ यज्ञोपयुक्तार्थप्र

त्वत्पक्षेचप्रत्यक्षसिद्धेभेदेश्रुतिरिवैकलिंगसिद्धेतात्पर्येलिंगांतरमनुवादकमेवेतिकिंतद्बाहुल्येन । यच्चोक्तंवाचस्पतिना प्रस्तरादिवाक्यमन्यशेषत्वादमुख्यार्थं अद्वैतवाक्यंतुनतथा । उक्तंहिशाबरभाष्ये "नविधौपरःशब्दार्थ" इति । तन्न । अन्यशेषेपिप्रत्यक्षाविरुद्धेलोके "इयंगौःक्रय्याबहुक्षीरे"त्यादौ

तिपादकत्वादित्यर्थः ॥ नतथेति ॥ (स्वप्राधान्येन)स्वातंत्र्येणाद्वैतप्रतिपादकत्वादनन्यशेषमित्यर्थः । विधिवाक्यरूपमितियावत् ॥ नविधाविति ॥ विधौ विधायकेप्रधानवाक्ये । परः प्रतीयमानवाक्यार्थातिरिक्तोन्योवाक्यार्थोनास्तीत्यर्थः । अमुख्यार्थत्वेऽन्यशेषत्वंनप्रयोजकं किंनाम प्रत्यक्षविरोधएव । अन्यशेषत्वेपिप्रत्यक्षविरोधाभावेलोकेवेदेचमुख्यार्थत्वस्यैवदर्शनादित्याह ॥ अन्यशेषेपीति ॥ कुतःक्रय्या यतोबहुक्षीरेत्यर्थः । इयंगौःक्रय्येत्यस्यशेषभूतेबहुक्षीरारूयपत्याऽनवद्यप्रजेत्यादि

वाक्येप्रत्यक्षविरोधाभावेनप्रतीयमानबहुक्षीरादिसंसर्गपरत्वेनमुख्यार्थत्वात् कामधेनुरितिव्यतिरेकदृष्टांतः । यथाऽयंगौःक्रय्या यतःकामधेनुरित्यत्रकामधेन्वभेदस्यप्रत्यक्षसिद्धायांगविबाधितत्वेनयथाऽमुख्यार्थत्वंकल्प्यतेतथानेत्यर्थः ॥ वेदेपीति ॥ "त स्यहिरण्यंदक्षिणे" तिहिरण्यदक्षिणाविधिशेषे "सोरोदीद्यदरोदीत्तद्रुद्रस्यरुद्रत्वं यदश्रुअशीयततद्रजतमभवत्तस्माद्रजतमद क्षिण्यमश्रुज" मित्यादिष्वपिप्रतीयमानसंसर्गेदक्षिणाभावरूपवाक्यार्थेतात्पर्यविनारजतनिंदायाअसिद्धेःप्रत्यक्षविरोधाभावात्प्र तीयमानसंसर्गपरत्वरूपमुख्यवृत्तिरेवाश्रीयतइत्यर्थः ॥ प्रस्तरादीति ॥ व्यतिरेकदृष्टांतः । यथाप्रत्यक्षविरोधात्प्रस्तरादिवा

"कामधेनु" रित्यादाविवाऽमुख्यवृत्तेर्वेदेपि "सोरोदीदि" त्यादौप्रस्तरादिवाक्यइवामुख्यवृत्तेरना श्रयणात् । अनन्यशेषेपि "सोमेनयजेते" त्यादौवैयधिकरण्येनाऽन्वयेविरुद्धत्रिकद्वयापातात्

क्येऽमुख्यवृत्तिर श्रीयतेतथानेत्यर्थः । एवमेवमुख्यार्थत्वेऽनन्यशेषत्वंनप्रयोजकं किंनाम प्रत्यक्षाविरोधएव । अनन्यशेषत्वे पिप्रत्यक्षविरोधेऽमुख्यार्थत्वस्यस्वीकारादित्याह ॥ अनन्यशेषेपीति ॥ सोमेनयजेतेति ॥ प्रमाणलक्षणेनामधेयपादेचिंति तं "सोमेनयजेते" तिश्रूयते तत्रलतारूपेणसोमेनयागंभावयेत् यागेनचेष्टंभावयेदितिवैयधिकरण्येनान्वयोवासोमेनयागेनेष्टं भावयेदितिसामानाधिकरण्येनान्वयोवेतिसंदेहेसोमलतायागयोरैक्याभावेनसामानाधिकरण्यायोगाद्वैयधिकरण्येनान्वयइतिपू र्वपक्षः । सिद्धांतस्तुवैयधिकरण्येनान्वयेपिसोमेनयागंभावयेद्यागेनेष्टंभावयेदितिवाक्यभेदापत्तेः । तथाविरुद्धत्रिकद्वयमापद्य

ते । तथाहि । सोमेनयागंभावयेदित्यत्रयागंभावयेदितियत्तत्सोमेनेतिसोमरूपगुणविधानेयागेकर्मत्वानुबंधि प्रधानत्वं अनुवाद्यत्वं उद्देश्यत्व मितित्रिकं तथासोमेकरणत्वानुबंधि गुणत्वं विधेयत्वं उपादेयत्वं चेतित्रिकमस्ति । यागेनचेष्टंभावयेदित्यत्रतु यागस्यकरणत्वेनपूर्वकर्मत्वानुबंधित्रिकवतएवतद्विरुद्धकरणत्वानुबंधित्रिकवत्त्वप्राप्तेः । अतोवैयधिकरण्येनान्वयायोगात्सामानाधिकरण्येनान्वयः । तत्रचप्रत्यक्षविरोधःसमायाति । यजेःसोमलतारूपत्वाभावात् । अतःप्रत्यक्षाविरोधायमत्वर्थलक्षणया

सामानाधिकरण्येनान्वयेप्रत्यक्षाविरोधायसोमवतायागेनेतिमत्वर्थलक्षणायाः
विचारविधायकेचजिज्ञासासूत्रेतद्धिजिज्ञासस्वेत्यादिश्रुतौचप्रत्यक्षाविरोधायजिज्ञा
साशब्देनविचारलक्षणायाःसर्वंखल्विदंब्रह्मेत्यादौअमुख्यार्थतायाश्चस्वीकृतत्वाच्च ।
सर्वस्यापिवाक्यस्यावाच्येब्रह्मणिलक्षणायाएवेष्टत्वेनामुख्यार्थत्वनिषेधायोगाच्च

सोमद्रव्यवतायागेनेष्टंभावयेदित्यर्थांगीकारेणलक्षणयाऽमुख्यार्थांगीकारादित्यर्थः ॥ श्रुतौचप्रत्यक्षाविरोधायेति ॥ इच्छायाविधेयत्वस्यानुभवरूपप्रत्यक्षविरुद्धत्वात्तदविरोधायेत्यर्थः ॥ सर्वमिति ॥ घटादेर्ब्रह्माभेदस्यबाधितत्वादित्यर्थः । अनन्यशेषत्वादमुख्यार्थब्रह्माद्वैतवाक्यंनेतिनिषेधोनयुक्तइत्याह ॥ सर्वस्यापीति ॥ मुख्यार्थत्वेवाच्यत्वापत्त्यालक्षणायाअंगीकारेणामुख्यार्थतैवांगीकृतेत्यर्थः । अद्वैतवाक्यस्यविधिवाक्यरूपत्वान्नतत्रलक्षणायुक्तेतिचेन्न । लक्षणाबीजसद्भावेविधिवाक्ये

पिलक्षणाआवश्यकीत्याह ॥ अन्वयेति ॥ गंगायांघोषइत्यत्रान्वयानुपपत्तिः । भोजनसमयेयष्टीःप्रवेशयेत्यादौतात्पर्यानुपपत्तिः । तर्हि "नविधौपरःशब्दार्थ" इतिशाबरवचनविरोधइत्यतआह ॥ शाबरेति ॥ कयोश्चिदनुवादकविधायकयोर्वाक्ययोर्मध्येअनुवादकस्यमुख्यार्थत्वायविधायकवाक्येलक्षणानन्याय्या । किंनाम । विधायकानुसारेणानुवादएवामुख्यार्थइत्येवंपरं । नतुसर्वत्रापिविधिवाक्येलक्षणैवनास्तीत्येवंपरमित्यर्थः ॥ ७ ॥ प्रत्यक्षस्यशब्दबाध्यत्वेबाधकाविवरणं ॥ १३ ॥ ७ ॥

अन्वयानुपपत्तेस्तात्पर्यानुपपत्तेर्वालक्षणाबीजस्याविध्याविधिसाधारण्याच्च । शाबरवचनं तुअनुवादमुख्यार्थत्वायविधौलक्षणानयुक्तेत्येवंपरं । तस्मान्नप्रत्यक्षंशब्दबाध्यं । तदुक्तं "यजमानप्रस्तरत्वंयथानार्थःश्रुतेर्भवेत् । ब्रह्मत्वमपिजीवस्यप्रत्यक्षस्याविशेषत "इति ॥ प्रत्यक्षस्यशब्दबाध्यत्वेबाधकं ॥ १३ ॥ यत्तूक्तंवाचस्पतिना पूर्वस्यप्रत्यक्षस्यपरेणागमेनापच्छेदन्यायेनबाधइति तन्न । नह्यस्माभिःपूर्वत्वमात्रेणप्रत्यक्षस्यबाधकतोक्ता किंतूपजीव्यत्वेन

परेणेति॥प्रत्यक्षसिद्धजीवादिधर्मिकत्वादित्यर्थः ॥ अपच्छेदन्यायेनेति ॥ षष्ठेचिंतितं । "पौर्वापर्येपूर्वदौर्बल्यंप्रकृतिवत्" । "अध्वर्युंप्रस्तोतान्वारभतेप्रस्तोतारंप्रतिहर्ताप्रतिहर्तारमुद्गाताउद्गातारंब्रह्मातंयजमान" इत्यादिश्रुत्याविहितस्यबहिष्पवमानंप्रसर्पतांप्रस्तोत्रादीनांअध्वर्य्वाद्यन्वारंभस्यविच्छेदेसतिप्रायश्चित्तविशेषाःश्रूयंते । बहिष्पवमानंप्रसर्पतांमध्ये "यदिप्रस्तोतापच्छिद्या

द्ब्राह्मणेवरंदद्याद्यजमानः॥यदिप्रतिहर्ताऽपच्छिद्यात्तर्हिसर्ववेदसंदद्यात्॥यद्युद्गाताऽपच्छिद्याददक्षिणंयज्ञमिष्ट्वातेनपुनर्यजेततत्रतद्
द्याद्यत्पूर्वस्मिन्दास्यन्स्यादि" ति । तत्रक्रमेणप्रतिहर्तुद्गात्रोरपच्छेदेकिंपूर्वनिमित्तकंसर्वस्वदक्षिणारूपंप्रायश्चित्तंकार्यंउतोत्तरनि
मित्तकोऽदक्षिणाकोयागःकार्यइतिसंशयेपूर्वस्यासंजातविरोधित्वेनप्रबलत्वात्प्रतिहर्त्रपच्छेदनिमित्तकंसर्वस्वदक्षिणारूपंप्रायश्चि
त्तंकार्यमितिपूर्वपक्षे "नानुपमृद्यपूर्वंतद्विरोध्युत्तरमुत्पत्तुमर्हती" तिन्यायेनपूर्वोपमर्देनपरप्राबल्यस्यैवन्याय्यत्वादुद्गात्रपच्छेदनि
मित्तकोऽदक्षिणाकोयागएवकार्यइतिपरेणपूर्वस्यबाधइतिसिद्धांतः ॥ नचापच्छेदइति ॥ प्रतिहर्त्रपच्छेदउद्गात्रपच्छेदस्योप

नचापच्छेदेपूर्वमुपजीव्यं । किंचप्रतिहर्तुद्गात्रोःक्रमेणापच्छेदेप्रतिहर्त्रपच्छेदनि
मित्तसर्ववेदसदानस्यपरेणोद्गात्रपच्छेदनिमित्तादाक्षिण्येनबाधेपिनात्यंतबाधः प्र
तिहर्तृमात्रापच्छेदेद्वयोरपियुगपदपच्छेदेक्रमेणापच्छेदेपिप्रतिहर्त्रपच्छेदस्यपश्चात्त्वे
च "यदिप्रतिहर्तापच्छिद्यात्तर्हिसर्ववेदसंदद्यादि" तिशास्त्रप्रामाण्यसंभवात् ।

जीव्योनैवभवति । येनपरेणोपजीवकेनपूर्वस्योपजीव्यस्यापच्छेदनयेबाधदर्शनात्प्रकृतेपितथास्यादित्युच्येतेत्यर्थः ॥ अत्यंत
बाधइति ॥ विषयांतरेप्यनवकाशेनसर्वथाऽप्रामाण्यरूपइत्यर्थः । कुतोनात्यंतबाधइत्यतआह ॥ प्रतिहर्त्रिति ॥ प्रतिहर्तृ
मात्रापच्छेदेयदिप्रतिहर्तापच्छिद्येततदासर्ववेदसंदद्यादितिशास्त्रप्रामाण्यसंभवादित्यन्वयः ॥ क्रमेणेति ॥ प्रतिहर्तुद्गात्रोःक्रमे
णापच्छेदेपियदाप्रतिहर्त्रपच्छेदःपश्चात्तनोभवतितदापरेणपूर्वबाधांगीकारात्सर्ववेदसंदद्यादितिशास्त्रस्यप्रामाण्यसंभवादित्यर्थः ।

ननुप्रतिहर्त्रुद्गात्रोर्युगपदपच्छेदेकथंसर्ववेदसंदद्यादितिशास्त्रप्रामाण्यसंभवइत्यतआह ॥ अतएवषष्ठइति ॥ यतोयुगपदपच्छे

देपिसर्ववेदसंदद्यादितिशास्त्रप्रामाण्यसंभवोऽतएवेत्यर्थः ॥ विकल्पउक्तइति ॥ नात्यंतबाधेनाप्रामाण्यमित्यर्थः । षष्ठेऽध्या

येचिंतितंतत्रविप्रतिषेधाद्विकल्पःस्यात्प्रतिहर्त्रुद्गात्रोर्युगपदपच्छेदे तन्निमित्तकंसर्वस्वदानादक्षिण्यरूपंनैमित्तिकद्वयंसमुच्चीयते

उतविकल्पइतिसंशयेपुनर्यजेतेतिप्रयोगद्वयसद्भावेनपूर्वस्मिन्प्रयोगेऽदक्षिणत्वमुत्तरस्मिन्सर्वस्वदानमित्युभयस्यापिसंभवात्समुच्च

यइतिपूर्वपक्षः । यस्मिन्प्रयोगेनिमित्तंतस्यैवांगंनैमित्तिकंनप्रयोगांतरेतस्यावकाशसंभवइति एकस्मिन्नेवप्रयोगेद्वयमापतितं ।

अतएवषष्ठे "तत्रविप्रतिषेधाद्विकल्पःस्यादि" त्यधिकरणेद्वयोर्युगपदपच्छेदेविक

ल्पउक्तः। किंच "यद्युद्गाताजघन्यःस्यात्पुनर्यज्ञेसर्ववेदसंदद्यादि" त्यधिकरणेउद्गा

त्रपच्छेदस्यप्रतिहर्त्रपच्छेदात्परत्वेउद्गात्रपच्छेदनिमित्तकेप्रथमप्रयोगंदक्षिणाही

नंसमाप्यकर्तव्येज्योतिष्टोमस्यद्वितीयप्रयोगे "तद्दद्याद्यत्पूर्वस्मिन्दास्यन्स्यादि"

तच्चविरुद्धमतोविकल्प्यतइतिसिद्धांतः । एवंप्रतिहर्त्रुद्गात्रोःक्रमेणापच्छेदेप्रतिहर्त्रपच्छेदनिमित्तस्यसर्वस्वदानस्यपरेणोद्गात्रपच्छे

देनबाधेपिनात्यंतबाधः । प्रकारत्रयेणापितच्छास्त्रप्रामाण्योपपत्तेरित्युपपाद्यइतोपिनात्यंतबाधःप्रयोगांतरेनिक्षेपोपपत्त्यातच्छा

स्त्रप्रामाण्योपपत्तेरित्याह ॥ किंचेति ॥ षष्ठेस्थितं "यद्युद्गाताजघन्यःस्यात्पुनर्यज्ञेसर्ववेदसंदद्यात्" प्रतिहर्त्रुद्गात्रोःक्रमेणापच्छे

देयदोद्गात्रपच्छेदोजघन्यःपरःपश्चात्तनोभवतितदा "यद्युद्गाताऽपच्छिद्याददक्षिणंयज्ञमिष्ट्वातेनपुनर्यजेततत्रतद्दद्याद्यत्पूर्वस्मिन्दा

स्यन्स्यादि" तिश्रूयते । तत्रोद्गात्रपच्छेदनिमित्तकेप्रथमप्रयोगंदक्षिणाहीनंसमाप्यकर्तव्येज्योतिष्टोमस्यपुनःप्रयोगेतद्द्यादितिश्रु
तादक्षिणाकिंप्रस्तोत्रादिप्रसर्पणाधिकरणीभूतपूर्वक्रतुसंकल्पकालेयादित्सितासाद्वादशशतरूपासैववा । उतप्रतिहर्त्रपच्छेदेदित्सिता
सर्वस्वरूपावेतिसंशयेपूर्वस्मिन्दास्यन्स्यादित्युक्तत्वेनयाक्रतुस्वभावतःप्राप्ताद्वादशशतरूपासैवेतिप्राप्तेप्रथमंद्वादशशतंधनंदास्य
न्नासीत्तत्परेणप्रतिहर्त्रपच्छेदनिमित्तेनसर्ववेदसेनबाधितमेवेतिपुनर्यज्ञेसर्वस्वदक्षिणैवदेया । नचसर्वस्वदक्षिणापिप्रतिहर्त्रपच्छे
दात्परेणोद्गात्रपच्छेदनिमित्तकाऽऽदक्षिण्येनबाधितेतिवाच्यं । प्रतिहर्त्रपच्छेदनिमित्तकसर्वस्वदक्षिणायाःप्रयोगांतरेनिक्षेपोपपत्ते

तियाश्रुत्युक्तादक्षिणासापूर्वभाविप्रतिहर्त्रपच्छेदनिमित्तकपूर्वप्रयोगस्यसर्वस्वदित्सायाअबाधेन
सर्वस्वरूपैव नतुयाज्योतिष्टोमेनित्याद्वादशशतरूपासा तस्मान्नप्रतिहर्त्रपच्छेदस्यसर्वथाबाधः

रदक्षिण्येननसर्वथाबाधइतिसिद्धांतितं । प्रथमप्रयोगं बहिष्पवमानप्रसर्पणाधिकरणीभूतं ॥ नत्विति ॥ येनसर्ववेदसंदद्यादि
तिशास्त्रस्यप्रयोगांतरेनिक्षेपाभावेनाप्रामाण्यंस्यादितिभावः । इतिउद्गात्रपच्छेदनिमित्तकप्रयोगांतरेसर्वस्वदानेद्वादशशतदक्षि
णायाअपिप्राप्तत्वेनतदंतर्भावादिज्ञातव्यं । यत्पूर्वस्मिन्नित्युक्तदक्षिणायाद्वादशशतरूपत्वेप्रतिहर्त्रपच्छेदनिमित्तकप्रायश्चित्ताकर
णेनप्रत्यवायप्राप्तेः । अयंचविचारउद्गात्रपच्छेदस्यप्रतिहर्त्रपच्छेदात्पाश्चात्यत्वएवसति नान्यथा । यदिचप्रतिहर्त्रपच्छेदाभावे
पिउद्गातृमात्रापच्छेदएवजातस्तदापुनर्यजेत तत्रतद्द्याद्यत्पूर्वस्मिन्दास्यन्स्यादित्युक्तादक्षिणाद्वादशशतरूपैव नसर्वस्वरूपा ।

तस्याःप्रतिहर्त्रपच्छेदमात्रनिमित्तकत्वेनतदभावेयोगादिति ॥ प्रयोगांतरइति ॥ उद्गात्रपच्छेदनिमित्तकप्रथमप्रयोगंदक्षिणाहीनंपरिसमाप्यप्रतिहर्त्रपच्छेदनिमित्तेनकर्तव्येज्योतिष्टोमस्यद्वितीयप्रयोगइत्यर्थः । इतोपिनसर्वस्वदानशास्त्रस्यबाधः । तथाहि । यथाबदरफलेश्यामरक्तरूपयोःक्रमेणोत्पत्त्यनंतरंयःपूर्वंश्यामःसएवेदानींपाकेनरक्तइतिज्ञानयोर्यथाऽविरोधेनप्रामाण्यमेवास्ति । एवमेवयोद्वादशशतदक्षिणाधिकरणक्रतुःप्रतिहर्त्रपच्छेदेननिमित्तेनसर्वस्वदानविशिष्टतयाकर्तव्योऽभूत्सएवेदानीमुद्गात्र

किंतुप्रयोगांतरेनिक्षेपइत्युक्तं । उक्तंहिटुप्टीकायां "तस्यप्रयोगांतरेनिक्षेपःक्रियत" इति । अपिचैकस्मिन्नपिप्रयोगेक्रमिकाभ्यांनिमित्ताभ्यांकृतौतत्तन्नैमित्तिककर्तव्यतयोर्बदरफलेश्यामरक्तरूपयोरिवक्रमेणोत्पत्तेरूपज्ञानद्वयवच्छास्त्रद्वयमपिप्रमाणमेव । उक्तंह्यपच्छेदाधिकरणे "नैमित्तिकशास्त्रस्यह्ययमर्थः निमित्तोपजननात्प्रागन्यथाकर्तव्योपिक्रतुर्निमित्तेसत्येवंकर्तव्य" इति ।

पच्छेदेननिमित्तेनादक्षिण्यविशिष्टतयाकर्तव्योजातइत्येवंतयोःसर्वस्वदानादक्षिण्यप्रतिपादकशास्त्रजन्यज्ञानयोःप्रामाण्यात्तज्जनकशास्त्रयोरपिप्रामाण्यमित्याह ॥ अपिचेत्यादिना ॥ क्रमिकाभ्यां प्रतिहर्त्रुद्गात्रपच्छेदरूपाभ्यां ॥ तत्तन्नैमित्तिकेति ॥ प्रतिहर्त्रपच्छेदनिमित्तकसर्वस्वदानवत्तयाकर्तव्यतायाःउद्गात्रपच्छेदनिमित्तकादक्षिण्यवत्तयाकर्तव्यतायाश्चक्रमेणोत्पत्तेरित्यर्थः ॥ अन्यथेति ॥ द्वादशशतदक्षिणावत्त्वेनेत्यर्थः ॥ निमित्तेसतीति ॥ प्रतिहर्त्राद्यपच्छेदरूपेनिमित्तेप्राप्तेसतीत्यर्थः ॥ एव

मिति ॥ सर्वस्वदक्षिणावत्त्वादिनाकर्तव्यइत्यर्थः । तथाचनसर्वथाऽप्रामाण्यमितिभावः ॥ अप्रामाण्यमिति ॥ (प्रामाण्य मेवेति) ॥ तथाचपूर्वस्मिन्नेकस्मिन्नेवक्रतौप्रकारद्वयेनकरणयोग्यतयोरुत्पन्नत्वेनतदुभयज्ञानस्यप्रामाण्यात्तज्जनकंतस्मिन्क्रतौस र्वस्वदानादक्षिण्याभ्यांकरणयोग्यताप्रतिपादकतज्ज्ञानजनकमितियावत् । शास्त्रद्वयंप्रमाणमेवेत्यर्थः । प्राक्तथाभूतस्य श्याम तयाभूतस्य पश्चादन्यथाभावात् रक्ततयाभावात् यथाश्यामरक्तरूपेणबदरफलरूपार्थस्यैवताद्दशत्वात्श्यामरक्तस्वरूपत्वात्तज्ज्ञा नयोर्नाप्रामाण्यंयथास्थितार्थावगाहित्वात् । एवंप्राक्तथाभूतस्यप्रतिहर्त्रपच्छेदनिमित्तकसर्वस्वदक्षिणावत्त्वेनकरणयोग्यत्ववतः

ततश्चार्थस्यैवबदरफलस्येवश्यामरक्तरूपेणप्राक्तथाभूतस्यपश्चादन्यथा
भावा "त्पूर्वशास्त्रस्यप्रामाण्यमेव "न्नपूर्वशास्त्रस्याप्रामाण्यं । नहि
बदरफलेश्यामत्वविज्ञानंअनंतरस्यरक्तत्वस्यावगत्यामिथ्याभवतीति ।

क्रतुरूपार्थस्यैवपश्चादन्यथाभावात्उद्गात्रपच्छेदनिमित्तकादक्षिण्येनकरणयोग्यतावत्तयाभावात्क्रतुरूपार्थस्यैवताद्दशत्वात्सर्व स्वदक्षिणादक्षिण्यांकरणयोग्यतावत्स्वरूपत्वात्नैकस्मिन्क्रतौतदुभयज्ञानयोरप्रामाण्यं यथास्थितार्थावगाहित्वात् ततश्चनतज्ज नकशास्त्रयोरप्यप्रामाण्यमितिभावः । ननुएकस्मिन्नेवक्रतौप्रतिहर्त्रपच्छेदनिमित्तकसर्वस्वदक्षिणावत्त्वेनकर्तव्यत्वज्ञानंअनंतर भाविन्योद्गात्रपच्छेदनिमित्तकादक्षिण्यवत्तयाकर्तव्यतावगत्यामिथ्याकिंनस्यादित्यतआह ॥ नहीति ॥ विज्ञानं प्रागासीदि

तिविज्ञानं । अपच्छेदन्यायवैषम्यंप्रकृतेउपपाद्यतद्विषयंसंगृह्णाति ॥ पौर्वापर्यमिति ॥ केवलमितिशेषः । यत्रेतिश्रवणात्तत्रे तिग्राह्यं । तथाचकेवलमुपजीव्योपजीवकभावरहितंपौर्वापर्यंयत्रास्ति तत्रापच्छेदनयोऽपच्छेदन्यायोभवेत् । नहिप्रतिहर्त्रुद्गात्रोःक्रमेणापच्छेदेपूर्वमुपजीव्यमित्यर्थः । प्रकृतेचप्रत्यक्षागमयोःपौर्वापर्येसत्यपिउपजीव्योपजीवकभावांगीकारात्ताभ्यांतन्न्याय वैषम्यमितिभावः । तथाविरोधश्चयत्रास्तितत्प्रयुक्तंनियमात्अत्यंतंविषयांतरेऽनवकाशरूपंपूर्वाप्रामाण्यंचयत्रनास्तितत्रापच्छेद नयोभवेत् । प्रतिहर्त्रुद्गात्रोःक्रमेणापच्छेदेतन्निमित्तकसर्वस्वदानादक्षिण्ययोर्विरोधोस्तितत्प्रयुक्तंपूर्वाप्रामाण्यंनियमान्नास्ति । स

तस्मात् पौर्वापर्यविरोधश्चपूर्वाप्रामाण्यमेवच । नियमान्नास्तियत्रासावपच्छेदन
योभवेत् । नचैवंप्रकृतेप्रत्यक्षप्रामाण्यस्यावकाशोस्तीतिनापच्छेदन्यायः । एते
नसगुणसप्रपंचश्रुत्योर्निर्गुणनिष्प्रपंचश्रुतिभ्यामपच्छेदन्यायेनबाधइतिनिरस्तं।

र्ववेदसंदद्यादितिशास्त्रस्यप्रतिहर्तृमात्रापच्छेदादौसतिसावकाशत्वात् । प्रकृतेचप्रत्यक्षागमयोर्विरोधोस्ति । तन्निमित्तकंपूर्वस्यप्र त्यक्षस्याप्रामाण्यंनियमान्नास्ति । विषयांतरेसावकाशत्वसंभवादितिवक्तव्यं । नह्येवंवक्तुंशक्यते । अनुमानविरोधेनसत्त्वग्राहि णःप्रत्यक्षस्यसत्त्वरूपार्थंविनाविषयांतरेप्रामाण्यस्यावकाशाभावान्नापच्छेदन्यायावकाशः । नचप्रकृतेपिसत्त्वग्राहिणःप्रत्यक्षस्या पिव्यावहारिकसत्त्वावगाहित्वेनसावकाशत्वमस्तीतिवाच्यं । सत्तात्रैविध्यस्योत्तरत्रदूष्यत्वादितिहृदयं ॥ एवमिति ॥ सर्ववेद सशास्त्रवदित्यर्थः ॥ एतेनेति ॥ अपच्छेदन्यायवैषम्योपपादनेनेत्यर्थः ॥ सगुणेति ॥ सगुणश्रुतेर्निर्गुणश्रुत्यापच्छेदन्याये

नबाधः । निषेधरूपत्वेननिर्गुणश्रुतेःपरत्वात् । तथासप्रपंचश्रुतेर्निष्प्रपंचश्रुत्यापरयाऽपच्छेदन्यायेनबाधइतिपरोक्तमप्येतेनैव निरस्तं । नह्यस्माभिःपूर्वत्वमात्रेणबाधकत्वमुच्यते किंतूपजीव्यत्वेन । नचापच्छेदेपूर्वमुपजीव्यमित्युक्तन्यायेनेत्यर्थः । यद्वा सर्वस्वदानशास्त्रवत्सप्रपंचादिश्रुतेरर्थांतरेऽवकाशाभावेनेत्यर्थः ॥ तत्परत्वादिति ॥ वैदिकं अद्वैतादिवाक्यं पूर्वस्य प्रत्यक्षस्य बाधकं । कुतः अद्वैतवाक्यस्यतत्परत्वात् । तस्मिन्नद्वैतेतात्पर्ययुक्तत्वात् । परत्वात् अपच्छेदन्यायेनपरत्वादित्यर्थः ॥

एतेनैव "तत्परत्वात्परत्वाच्चनिर्दोषत्वाच्चवैदिकं। पूर्वस्यबाधकंनायंसर्पइत्याप्तवाक्यवदि"
त्यानंदबोधोक्तंनिरस्तं । यतः "तत्परत्वमसिद्धत्वात्परत्वंव्यभिचारतः । निर्दोषताऽन्य
थासिद्धेःप्राबल्यंनैवसाधयेत्" । असिद्धंहिमानांतराविरोधेश्रुतेःतत्परत्वं । परत्वंतुप्रमानं
तरभ्रमेव्यभिचारि । दृश्यतेच "नक्त्वासेडि "तिपरंप्रति" मृडमृदे "त्यादिपूर्वंबाधकं ।

निर्दोषत्वाच्चेति ॥ अपौरुषेयत्वेनानाशंकितदोषत्वादित्यर्थः । आप्तवाक्यवत् यथाऽयंसर्पइतिप्रत्यक्षस्यबाधकमित्यर्थः १ अद्वैतेतात्पर्याभावेचनिर्दोषत्वंनसंभवतीतिभावः । तत्परत्वं अद्वैततात्पर्ययुक्तत्वादित्ययंहेतुः प्राबल्यंनैवसाधयेत् । कुतः असिद्धत्वात् । अद्वैतेतात्पर्ययुक्तत्वस्यासिद्धत्वादित्यर्थः । असिद्धिमेवाह ॥ असिद्धंहीति ॥ द्वितीयस्यपरत्वहेतोर्व्यभिचारस्थलमाह ॥ परत्वंत्विति ॥ पुनःपरत्वस्यव्याकरणशास्त्रीयंव्यभिचारस्थलांतरमाह ॥ दृश्यतेचेति ॥ "मृडमृदगुधकुषक्लि

शवद्वसःक्त्वा" । एभ्योधातुभ्यःपरःक्त्वाकित्स्यादितिक्त्वाप्रत्ययस्यकित्त्वंककारेत्संज्ञकत्वंविहितं। इदंचसूत्रंपूर्वं नक्त्वासेडिति परंपश्चात्तनंसूत्रं । सेड्धातवोऽनिड्धातवइतिद्विविधाधातवःसंति । तत्रसेट्क्त्वा सेड्धातोःपुरतःप्राप्तःक्त्वाप्रत्ययः कित्न इडागमोपेतःक्त्वाककारेत्संज्ञकोनस्यात् इत्येवंसेटःक्त्वाप्रत्ययस्यकित्त्वनिषेधःकृतइतिस्थितिः । तत्रमृडमृदेत्यादिनायत्क्त्वाप्रत्ययस्याकित्त्वंविहितंतदनुपपन्नं। क्त्वाप्रत्ययस्यकित्त्वंस्वभावतएवसिद्धमितितद्विधानंवैयर्थ्यात् असिद्धस्यैवविधेयत्वात् अतो "व्यर्थंसत्किंचिदिष्टंज्ञापयती" तिन्यायेन "नक्त्वासेडि" तिसेटःक्त्वाप्रत्ययस्ययःकित्त्वनिषेधःकृतस्तन्निषेधार्थत्वंमृडेत्यादिविधानस्यांगीकृतं। तथाचशास्त्रेपिपूर्वमेवपरस्यबाधकंदृष्टमितिपरत्वहेतोर्व्यभिचारित्वात्नप्राबल्यसाधकत्वमितिभावः । यथोक्तंवैयाकरणैः "स्वत एवकितःक्त्वायाःकिद्वाचोऽनर्थकत्वतः । सेटःक्त्वायाःकिन्निषेधनिषेधार्थत्वमास्थितमिति"। स्वतएव स्वभावतएव कितःककारेत्संज्ञकस्य क्त्वायाःक्त्वाप्रत्ययस्य किद्वाचः मृडेत्यादिसूत्रेणकित्त्वविधानस्य अनर्थकत्वतः व्यर्थत्वात् सेटःक्त्वायाःयःकिन्निषेधः कित्वनिषेधःनक्त्वासेडितिसूत्रेणकृतस्तन्निषेधार्थत्वमास्थितमंगीकृतंपाणिनिनेत्यर्थः । अयमेवाऽर्थःपुनःकारिकांतरेणसंगृहीतः । "कित्त्वंहिक्त्वोनिजंयन्नक्त्वासेडितिनिराकृतं । मृडेत्यादिविधानंतुपुनरुज्जीवयत्यद" इति । क्त्वःक्त्वाप्रत्ययस्य कित्त्वं निजं स्वाभाविकं अतोनविधेयमितिमृडेत्यादिसूत्रेणतद्विधानंतुकर्तृ नक्त्वासेडितिसूत्रेणयत्सेटःक्त्वायाःकित्त्वंनिराकृतं अदःकित्त्वं पुनरुज्जीवयति सेटःक्त्वायाःकित्त्वनिषेधनिषेधेनकित्त्वमेवपुनर्विधत्तइत्यर्थः।निर्दोषत्वाच्चेतिहेतोःनिर्दोषतान्यथासिद्धेरित्यन्यथा

सिद्धिरुक्ता तामुपपादयति ॥ निर्दोषत्वंत्विति ॥ अद्वैतादिवाक्यस्यस्वार्थेतात्पर्याभावेपिअर्थांतरेप्रामाण्येननिर्दोषत्वमन्यथा
सिद्धमितिनतस्यप्राबल्यहेतुत्वमित्यर्थः ॥ ७ ॥ इत्यपच्छेदन्यायवैषम्यविवरणं ॥ १४ ॥ व्यवस्थापकंवेति ॥ एतादृ
शस्थलेअक्षस्यालिंगबाध्यत्वं एतादृशस्थलेनेतिव्यवस्थापकंवक्तव्यमित्यर्थः । उक्तं व्यवस्थापकमुक्तमित्यर्थः ॥ लिंगेति ॥ स
र्ववेष्टनस्मृत्याश्रुतिरनुमीयतेयतोऽतोलिंगग्राह्यासर्ववेष्टनश्रुतिः । पदार्थत्वादिलिंगग्राह्यमनुष्णत्वं । "यजमानःप्रस्तर" इति

निर्दोषत्वंतुअर्थांतरेप्रामाण्येनान्यथासिद्धमिति ॥ ७ ॥ अपच्छेदन्यायवैषम्यं ॥ १४ ॥ एवंचाक्षस्य
लिंगादिबाध्यत्वेकालात्ययापदिष्टादेर्दोषतावात्याज्याव्यवस्थापकंवावक्तव्यं । अत्रोक्तंखंडने ।
तत्राक्षसिद्धस्पर्शनश्रुत्युष्णत्वायजमानत्वादिवल्लिंगशब्दग्राह्यसर्ववेष्टनश्रुत्यनुष्णत्वयजमानत्वा
दिकमपिव्यावहारिकं । इहत्वक्षसिद्धंसत्यत्वंव्यावहारिकं । लिंगशब्दग्राह्यंमिथ्यात्वंतुतात्विकं ।

शब्दग्राह्यंयजमानत्वमितिविवेकः । तथाचोष्णत्वप्रत्यक्षेणानौष्ण्यानुमानंबाध्यते । उभयोरपिव्यावहारिकत्वेनाक्षसिद्धव्यावहा
रिकौष्ण्यनिषेधरूपत्वादनुमानस्य । अतोनुमानमेवाक्षबाध्यं । समानविषयकत्वात् । समानविषयकत्वंनामतत्सिद्धसाध्यसमा
नसत्ताकवस्तुविषयकत्वंविवक्षितं । प्रकृतेचाक्षग्राह्यसत्त्वस्यव्यावहारिकतयाऽनुमानविषयस्यसत्त्वनिषेधरूपमिथ्यात्वस्यता
त्विकतयाभिन्नविषयकत्वादनुमानेनैवात्र(सन्घटइत्यादि)प्रत्यक्षंबाध्यं अतःसमानविषयकत्वेबाध्यबाधकभावः । भिन्नविषयत्वे

तुनेत्येवंव्यवस्थापकमस्तीत्यर्थः । अद्वैतं द्वितीयनिषेधरूपंमिथ्यात्वं ॥ शरणमिति ॥ तत्प्रतिपादकत्वादितियावत् । श्रुतिः नेहनानेत्यादिका । अनुमानंचग्राह्यं । व्यावहारिकसत्त्वग्राहिणोपजीव्यप्रत्यक्षेणविरोधान्नबिभेतीत्यर्थः ॥ किंवेति ॥ बाध्य बाधकभावमंगीकृत्यमिथ्यात्वग्राहिप्रमाणंतात्विकविषयकत्वाद्बाधकमेव नतुबाध्यं । बाध्यंतुप्रत्यक्षमेवेतिभावइत्यर्थः । अनु

एवंच "पारमार्थिकमद्वैतंप्रविश्यशरणंश्रुतिः । विरोधादुपजीव्येननबिभेतिकदाचने" ति । तत्र किंसत्यत्वमिथ्यात्वग्राहिणोर्व्यावहारिकतात्विकविषयकत्वाद्बाध्यबाधक(भावोन)तैवनेतिभावः किंवामिथ्यात्वग्राहितात्विकविषयकत्वाद्बाधकमेवनतुबाध्यमिति । आद्येप्यनुमित्यादिकंकिमक्ष सिद्धव्यावहारिकसत्वस्याभावमगृहीत्वैवतदसिद्धस्यतात्विकसत्यत्वस्यैवाभावंगृह्णाति किंवात त्सिद्धस्यैवप्रतिपन्नोपाधौतात्विकमभावं । नाद्यः मिथ्यात्वश्रु(ते)त्यादेरप्रसक्तप्रतिषेधत्वापा तात् । अक्षसिद्धस्यसत्वस्यप्रतिपन्नोपाधावभावाग्रहणेतस्यतात्विकत्वापाताच्च । नद्वितीयः ।

मित्यादिकं मिथ्यात्वावगाह्यनुमित्यादिकमित्यर्थः । तदसिद्धस्य अक्षासिद्धस्य । तत्सिद्धस्यैव प्रत्यक्षसिद्धतात्विकसत्त्वस्यैव । मिथ्यात्वश्रुतेः तात्विकसत्त्वनिषेधपरायाः ॥ अप्रसक्तेति ॥ तात्विकसत्त्वस्यप्रत्यक्षासिद्धत्वेनाप्रसक्तत्वादित्यर्थः ॥ अक्ष सिद्धस्येति ॥ अक्षसिद्धसत्त्वाभावमगृहीत्वैवतदसिद्धसत्त्वस्याभावग्रहणेऽक्षसिद्धसत्त्वाभावग्राहकत्वाभावेनतस्याबाधितत्व

प्राप्त्याऽक्षसिद्धसत्त्वस्यतात्विकत्वंस्यादित्यर्थः ॥ तात्विकतदभावेति ॥ तात्विकोयःसत्त्वाभावःतद्ग्राहिणएवेत्यर्थः । तद्बाधकत्वेन अक्षसिद्धसत्त्वबाधकत्वेन ॥ अबाधोक्तीति ॥ समानविषयकत्वप्राप्त्याऽबाधोक्त्ययोगादित्यर्थः ॥ उपजीव्येति॥ तथाच "मिथ्यात्वग्राहितात्विकविषयकत्वाद्बाधकमेव" त्ययुक्तमितिभावः ॥ योगेवेति ॥ उपजीव्यप्रत्यक्षबाधितस्यापितात्विकत्वयोगइत्यर्थः । तात्विकादित्यतां तात्विकादित्याभेदं ॥ श्रुतिरिति ॥ "आदित्योयूप" इतिश्रुतिरित्यर्थः ॥ उपजी

* प्रतिपन्नोपाधौतात्विकतदभावग्राहिणएवतद्बाधकत्वेनाबाधोक्त्ययोगात् । नांत्यः उपजीव्य प्रत्यक्षबाधितस्यामिथ्यात्वस्यतात्विकत्वायोगात् । योगेवाऽनौष्ण्यमपितात्विकंस्यात् । एवं च "आदित्योयूप" इत्यादावपि तात्विकादित्यतांयूपस्याश्रित्यशरणंश्रुतिः । विरोधादुपजीव्येननबिभेतिकदाचनेतिस्यात् । नन्विदमनौष्ण्यमतात्विकविश्वांतर्गतेनजलाद्यनौष्ण्ये नतुल्यस्वभावंचेन्नतात्विकं । नचेदद्वैतस्यैवनामांतरंस्यादितिचेत् न । विश्वमिथ्यात्वमपिघटादितुल्यतयाक्षसिद्धेनाऽतात्विकेनरूप्यादिमिथ्यात्वेनसमस्वभावंचेन्नतात्विकं ॥

व्येनेति ॥ व्यावहारिकभेदग्राह्युपजीव्यप्रत्यक्षविरोधान्नबिभेतीत्यर्थः । योगेवानौष्ण्यमपितात्विकंस्यादित्युक्तंतदयुक्तमित्याशंकते ॥ नन्विदमिति ॥ वह्नौसाध्यमानंतात्विकतयाभवद्भिरापाद्यमानंअनौष्ण्यमित्यर्थः । तुल्यस्वभावं व्यावहारिकं ॥ नचेदिति ॥ अतात्विकजलाद्यनौष्ण्येनव्यावहारिकेणसमस्वभावंनचेत्तर्ह्यौष्ण्याभावस्तात्विकःप्राप्तः । तथाचास्मदभिमतता

त्विकद्वितीयाभावएवपर्यवसन्नइतितस्यैवेदंनामांतरमित्यर्थः । तथाचेष्टापत्तिरितिभावः । विश्वमिथ्यात्वं अनुमानेनत्वयासाध्यमानं । अतात्विकेन व्यावहारिकेण । नतात्विकं तथाचमिथ्यात्वस्यतात्विकत्वाभावेजगतःपारमार्थिकत्वसिद्धिरितिभावः ॥ नचेदिति ॥ प्रपंचनिष्ठंमिथ्यात्वंअर्थक्रियानर्हरूप्यादिनिष्ठमिथ्यात्वसमस्वभावंनभवतिकिंत्वर्थक्रियाकारित्वाद्यविरोधिकिंचिदस्तीत्यंगीक्रियमाणेब्रह्मभिन्नसत्यप्रपंचप्राप्त्याद्वैतस्यैवनामांतरंस्यात् । अद्वैतस्यैवनामांतरंस्यादित्येतत्प्रतिबंदीत्वेनोक्तं । वस्तुतस्तुप्रपंचेमिथ्याभूतरूप्यादिवैलक्षण्यप्राप्त्यातत्स्वरूपोपमर्दकंनस्यात् । तथाचतत्स्वरूपसहिष्णोस्तत्प्रतिषेधत्वस्यपारिभाषिक

नचेत्द्वैतस्यैवनामांतरंस्यादितिसाम्यात् । ननुतात्विकत्वमात्रेणाविल
क्षणमपितन्मिथ्यात्वलक्षणयुक्तमितिचेदिदमपितन्मात्रेणविलक्षणमपि
स्पर्शत्वव्याप्यजातिविशेषवदाश्रयत्वरूपानौष्ण्यलक्षणयुक्तमितिसमं ।

त्वापातादित्यत्रतात्पर्यमितिज्ञेयं । साम्याभावमाशंकते ॥ नन्विति ॥ विलक्षणं व्यावहारिकात्रूप्यमिथ्यात्वात् । तत् प्रपंचनिष्ठंमिथ्यात्वं ॥ मिथ्यात्वेति ॥ प्रतिपन्नोपाधौनिषेधप्रतियोगित्वरूपमिथ्यात्वलक्षणसत्त्वमात्रेणतत्रमिथ्यात्वमितिव्यपदिश्यतइत्यर्थः । इदमपि वह्नौसाध्यमानानौष्ण्यमपि ॥ तन्मात्रेणेति ॥ तात्विकत्वमात्रेणविश्वांतर्गतव्यावहारिकजलाद्यनौष्ण्यविलक्षणमपिअनौष्ण्यलक्षणयुक्तत्वादेवानौष्ण्यमितिव्यपदिश्यतइत्यर्थः । अनौष्ण्यंलक्षयति ॥ स्पर्शत्वेति ॥ स्पर्शत्व

व्याप्योयोजातिविशेषःशीतत्वंतद्वान्शीतस्पर्शःतदाश्रयोजलादिरनुष्णइत्युच्यतेतन्निष्ठधर्मत्वमेवानौष्ण्यमित्यर्थः । पुनर्व्यव स्थापकांतरंशंकते ॥ नन्विति ॥ प्रातिभासिकस्यमिथ्यात्वं प्रातिभासिकप्रतियोगिकप्रतिपन्नोपाधिनिषेधः ॥ व्यावहारिक स्येति ॥ व्यावहारिकप्रपंचप्रतियोगिकोनिषेधस्तात्विकःअतस्तात्विकनिषेधग्राह्यनुमानमेवव्यावहारिकसत्त्वावगाहिप्रत्यक्षस्य बाधकमितिभावः । प्रातिभासिकप्रतियोगिकोनिषेधएवव्यावहारिकइत्यस्यप्रतिबंदीमाह ॥ जलादीति ॥ मिथ्यात्वंनिषेधइ

ननुप्रातिभासिकस्यैवमिथ्यात्वंव्यावहारिकं व्यावहारिकस्यतुतात्विकमितिचेन्न।जलादिस्थ स्यप्रातिभासिकौष्ण्यस्याभावएवव्यावहारिकः अग्न्यादिस्थस्यव्यावहारिकौष्ण्यस्यतुतात्वि कइत्यापातात् तस्मान्मिथ्यात्वंतात्विकंअनौष्ण्यंतुव्यावहारिकमितिव्यवस्थानयुक्ता । अ स्तुवासा तथापितात्विकमिथ्यात्वानुमितिबाधेनसत्यत्वस्यव्यावहारिकत्ववत्व्यावहारि कानुष्णत्वानुमितिबाधेनौष्ण्यंनभोनैल्यवत्स्वार्थक्रिययासहस्वप्नवत्प्रातिभासिकंस्यात् ।

त्यव्याख्यानेऔष्ण्यस्याभावइतिप्रतिबंद्ययोगइतिमंतव्यं । व्यावहारिकप्रतियोगिकनिषेधस्तात्विकइत्यस्यापिप्रतिबंदीमाह ॥ अग्न्यादिस्थस्येति ॥ औष्ण्यस्येत्यनंतरंअभावइतिवर्तते । खंडनकारोक्तांव्यवस्थांदूषयित्वोपसंहरति ॥ तस्मादिति ॥ मिथ्यात्वं लिंगशब्दग्राह्यं । व्यावहारिकं स्पर्शनश्रुत्युष्णत्वायजमानत्वादिवदित्यर्थः । सा व्यवस्था सत्यत्वस्य अक्षसिद्धस्य ॥ व्यावहारिकेति ॥ तात्विकमिथ्यात्वविषयकानुमितिबाधेनाक्षसिद्धस्यव्यावहारिकत्वेव्यावहारिकानुष्णत्वानुमितिबाधेना

क्षसिद्धमौष्ण्यंनभोनैल्यवत्प्रातिभासिकंस्यात् न्यायसाम्यादितिशेषः । नचौष्ण्यस्यप्रातिभासिकत्वेकरतलानलसंयोगाद्दाहाद्यर्थ क्रियानस्यादितिवाच्यं । अर्थक्रिययासहस्वप्नस्ययथाप्रातिभासिकत्वंतद्वत्दाहाद्यर्थक्रिययासहैवौष्ण्यंप्रातिभासिकमित्यर्थः । न चवह्नावनुमितिविषयभूतमनौष्ण्यंप्रातिभासिकमेवनव्यावहारिकमितिवाच्यं । तर्हिमिथ्यात्वानुमितिविषयभूतमिथ्यात्वमपिप्रा तिभासिकमेवनतात्विकमितिसमं । पुनर्व्यवस्थापकमाशंक्यनिषेधति ॥ तत्वेति ॥ उभयेति ॥ वादिप्रतिवादीत्यर्थः । तथा चप्रत्यक्षेणैवानुमानबाधः । सत्वबुद्धिप्रामाण्येनोभयसंमतिः । भवतांसंमतत्वेपिममासंमतेः । अतोत्रानुमानमेवप्रत्यक्षबाधक

तत्वप्रदीपिकायांतुऔष्ण्यधीप्रामाण्येउभयसंमतिः सत्वबुद्धौतुनेत्युक्तं तन्न । इहाऽसंमतौहेत्वभा वात् । तत्त्वशुद्धौतुमिथ्यात्वानुमितिःश्रुत्यनुगृहीतेतिनाक्षबाध्याइतरातुनेतितद्बाध्येत्युक्तं तन्न ।

मित्यर्थः ॥ इहेति ॥ सत्वबुद्धिप्रामाण्यइत्यर्थः । पुनर्व्यवस्थापकांतरमाशंक्यनिषेधति ॥ तत्त्वशुद्धाविति ॥ इतरा अनु ष्णत्वानुमितिः श्रुत्यनुगृहीतानेत्यक्षबाध्येत्यर्थः ॥ मिथ्यात्वेति ॥ मिथ्यात्वानुमित्यनुग्राहिकाश्रुतिरनुवादकत्वेनाप्रमाणं । नचमिथ्यात्वस्याप्राप्तत्वाच्छ्रुतेस्तदनुवादकत्वायोगः । दृश्यत्वेनानुमितासत्यमिथ्यात्वानुवादित्वसंभवात् । नचानुमानप्राप्तानु वादकत्वंश्रुतेःकथमितिवाच्यं । यथावह्नौहिमनिवारणशक्तेरतींद्रियत्वेनप्रत्यक्षसिद्धत्वाभावात्अयंवह्निर्हिमनिवारणशक्तिमान् उद्भूतोष्णस्पर्शविशेषवत्त्वादित्याद्यनुमानसिद्धहिमनिवारणशक्त्यनुवादित्वं “अग्निर्हिमस्यभेषज”मितिश्रुतेर्दृष्टंतद्वदित्यर्थः ।

पुनर्व्यवस्थापकांतरमाशंक्यनिराचष्टे ॥ मिथ्यात्वेति ॥ अतोनाक्षबाध्येत्यर्थः । इतरा अग्न्यनौष्ण्यानुमितिर्नतर्कानुगृहीता तोबाध्येत्यर्थः ॥ उक्तंचेति ॥ अक्षबाधेनात्मक्षणिकत्वतर्काणामाभासत्वमित्यर्थः । ध्रुवे सति । लिंगं क्षणिकत्वसाधकंसत्त्वं ॥ प्रत्यक्षेति ॥ यतइतिशेषः । योऽहंपाकादिकर्ताऽभवंसोहमधुनाव्याख्याताभवामितिस्थैर्यग्राहिप्रत्यभिज्ञाप्रत्यक्षसिद्धार्थविरु

मिथ्यात्वश्रुतेः(अग्निर्हिमस्यभेषज)मितिश्रुतेरनुमिताहिमनिवारणशक्त्यनुवादित्ववद नुमितासत्यमिथ्यात्वानुवादित्वोपपत्तेः॥ मिथ्यात्वानुमितिस्तर्कानुगृहीता इतरातुनेति चेन्न । तर्काणांमिथ्यात्वानुमितिवदक्षबाधेनात्मक्षणिकत्वादितर्काणामिवाभासत्वा त् । उक्तंचसुरेश्वरवार्तिकेबौद्धंप्रति । "प्रत्यभिज्ञायमानेर्थेतदेवेदमितिध्रुवे । लिंगमा भासतामेतिप्रत्यक्षार्थविरुद्धदृगि"ति । नन्वनौष्ण्यस्यौष्ण्यनिरूप्यत्वात्तस्यचाक्ष्यादा वेवग्राह्यत्वात्तत्रतदभावानुमाबाधिता मिथ्यात्वंतुनसत्यत्वाभावः । किंतुभावांतरं ।

द्धार्थज्ञानजनकमित्यर्थः । मिथ्यात्वानुमितेरग्न्यनौष्ण्यानुमितिवैषम्यमाशंकते ॥ नन्विति ॥ तस्यचेति ॥ प्रतियोगिभूतौ ष्ण्यस्य । तत्र वह्नौ तदभावानुमा अनौष्ण्यानुमा । प्रतियोगिग्राहकतयोपजीव्येनप्रत्यक्षेणबाधितेत्यर्थः ॥ मिथ्यात्वंत्वि ति ॥ येनपक्षएवसत्यत्वरूपप्रतियोगिग्राहकतयोपजीव्येनप्रत्यक्षेणबाधःस्यादित्यर्थः । अभावत्वेपि सत्यत्वाभावत्वेपि प्रतियो

गिसत्त्वं तत्प्रतियोगिभूतसत्त्वं ॥ ब्रह्मणीति ॥ तथाचौष्ण्यस्यपक्षएवग्रहणवत्नसत्यत्वरूपप्रतियोगिज्ञानंपक्षएवापेक्षितं ये नपक्षएवप्रतियोगिग्राहकतयोपजीव्यप्रत्यक्षेणबाधःस्यादित्यर्थः । औष्ण्यप्रत्यक्षानौष्ण्यानुमित्योर्भिन्नविषयत्वाद्बाध्यबाधक भावएवनास्तीत्याह ॥ औष्ण्येति ॥ इहेति ॥ पक्षएवप्रतियोगिग्राहकत्वेनोपजीव्यत्वाभावेपीत्यर्थः । किंचमिथ्यात्वंनसत्य त्वाभावःकिंतुभावांतरमभावत्वेपिप्रतियोगिसत्त्वंब्रह्मणिप्रसिद्धमित्यत्रन्यायसाम्येनदोषमाह ॥ उष्णमात्रइति ॥ अयमर्थः ।

**अभावत्वेपितत्प्रतियोगिसत्वंब्रह्मणिप्रसिद्धमितिचेन्न। औष्ण्यतदभावयोर्व्यावहारिकत्वतात्विक त्वाभ्यांप्रातिभासिकत्वव्यावहारिकत्वाभ्यांवाव्यवस्थोक्तेः। तत्रप्रतियोगिग्राहिणउपजीव्यत्वेइह चधर्म्यादिग्राहिणस्सुतरामुपजीव्यत्वाच्च। उष्णमात्रेशैत्यस्यउष्णविशेषेवानुष्णत्वस्यसाधनेऽबाधा पाताच्च। एतेनौष्ण्यात्यंताभावात्मकमनौष्ण्यंऔष्ण्यमिथ्यात्वरूपमेवेतितस्यतात्विकतेष्टेतिनिरस्तं।**

अद्वयनौष्ण्यानुमितेर्नप्रत्यक्षबाधोयुक्तः । नचप्रत्यक्षेप्रतियोग्युष्णत्वग्राहकत्वेनोपजीव्यत्वाद्युक्तइतिवाच्यं । यदाप्रत्यक्षसिद्धं तेजःपक्षीकृत्यानुष्णत्वंसाध्यते तदाबाधोनस्यादेव । प्रतियोगिभूतौष्ण्यस्यचतेजोंतरेग्रहणसंभवेनपक्षएवाग्रहणात् । अथवास र्वंतेजःपक्षीक्रियते । ननुतर्ह्युष्णत्वंप्रतियोगिभूतंपक्षएवप्रत्यक्षेणज्ञातव्यमितितद्बाधःस्यादेवेतिचेत् स्यादेतदेवं यद्यनौष्ण्यंसा ध्येत नचैवं किंतुशैत्यंसाध्यते तथाचतस्यभावरूपत्वेननतत्रप्रतियोगिग्रहापेक्षा अतःप्रतियोगिग्राहकतयोपजीव्येनप्रत्यक्षेणत

त्राबाधापातादिति । योगेवानौष्ण्यमपितात्विकंस्यादितिपूर्वमापादितं । तदुपरिकेनचिदिष्टापत्तिःस्वग्रंथेप्रतिपादितास्तितामाशंक्यदूषयति ॥ एतेनेति ॥ एतेनेत्युक्तंविवृणोति ॥ शैत्यस्येति ॥ स्यादिदंयद्यनौष्ण्यंसाध्येत नह्येवं किंनाम शैत्यंसाध्यते तदानैवंवक्तुंशक्यं । शैत्यस्यभावरूपत्वेनऔष्ण्यात्यंताभावात्मकत्वाभावात् । अस्माभिरपियोगेवाशैत्यमपितात्विकंस्यादित्येवापाद्यमानत्वान्नेष्टापत्तेरवकाशइतिभावः । संगृह्णाति ॥ तस्मादिति ॥ प्रत्यक्षोपजीविभिर्लिंगाद्यैः । स्वविरोधात् प्रत्यक्षविरो

शैत्यस्यातद्रूपत्वात् । तस्मात् " स्वतःप्रमात्वंप्रत्यक्षेलिंगाद्यैःस्वोपजीविभिः । स्वविरोधान्मृत्यवस्थामापन्नैर्नैवबाध्यते " ॥ ७ ॥ मिथ्यात्वानुमितेरग्निशैत्यानुमितिसाम्यं ॥ १५ ॥ इदंरूप्यमितिप्रत्यक्षमपिनेदंरूप्यमितिसयुक्तिकबलवत्प्रत्यक्षेणबाध्यं । नतुयुक्त्यैव । गौरोहमित्याद्यपिममशरीरमितिबलवत्प्रत्यक्षबाध्यं

धात् मृत्यवस्थामापन्नैः प्रत्यक्षेविद्यमानंयत्स्वतःप्रामाण्यंतन्नैवबाध्यतइतिकारिकार्थः ॥ ७ ॥ मिथ्यात्वानुमितेरग्निशैत्यानुमितिसाम्यविवरणं ॥ १५ ॥ नन्विदंरूप्यमितिप्रत्यक्षंइदंरूप्यंनभवतिदाहच्छेदादिमत्त्वादितियुक्तिबाध्यंदृष्टमितिचेत्तत्राह ॥ इदंरूप्यमिति ॥ ननुगौरोहमितिअहंत्वगौरत्वयोःसामानाधिकरण्यप्रतीतेरात्मनःशरीराभेदावगाहिप्रत्यक्षंआत्मानशरीरंचेतनत्वादित्यादिभेदानुमानबाध्यंदृष्टमित्यतआह ॥ गौरोहमिति ॥ किंचममशरीरमितिसर्वसिद्धभेदप्रत्ययाच्चगौरोह

मितिनैक्याध्यासः किंतूपचारइत्याह ॥ कर्दमेति ॥ गौणं उपचारः । तथाचव्यवहारमात्रमेवेदंनज्ञानमित्यर्थः । "उपचार श्चकृष्णोहमपिकर्दमलेपने । वस्त्रस्ये"त्यनुव्याख्यानोक्तेः । ननूष्णंजलमितिप्रत्यक्षंनोष्णंजलंशीतत्वादित्याद्यनुमानबाध्यमि तिचेत्तत्राह ॥ उष्णमिति ॥ गौणं उपचारः । तथाचप्रत्यक्षस्यानुमानबाध्यत्वेगौरोहमुष्णंजलमितिउदाहरणद्वयमप्यऽयुक्त मित्याशयः । प्रौढिवादोयं । संयुक्तसमवायेनउष्णंजलंकृष्णंवस्त्रमित्यनयोःप्रत्यक्षयोःप्रमाणत्वादितिध्येयं । अतएवास्वरसा

**कर्दमलिप्तेवस्त्रेकृष्णंवस्त्रमितिवद्गौणंवा उष्णंजलमित्यपिगौणमेवनतुलिंगादि**
**बाध्यं । यद्वानिश्चितद्रव्यांतरसमभिव्याहाररूपदोषेणशंकिताप्रामाण्येनउ**
**ष्णंजलमित्यनेनावकाशेदत्तेलिंगादिकंप्रवर्ततेनतुतल्लिंगादिबाध्यं । अहमिहै**
**वास्मिसदनेजानानइत्यादितुप्रमाणमेव जीवस्याणुत्वात् नतुलिंगादिबाध्यं ।**

दूषणांतरमाह ॥ यद्वेति ॥ जलेऔष्ण्याभावस्यस्पार्शनेनपूर्वमेव(सिद्धत्वात्निश्चि)निश्चितत्वात् । निश्चितंयद्द्रव्यांतरंअनुद्भू तरूपोद्भूतस्पर्शवत्तेजोरूपंतत्समभिव्याहाररूपदोषेणोष्णंजलमितिज्ञानंशंकिताप्रामाण्योपेतमेवजायते ततःपरंप्रवर्तमानंलिंगंबा धकमिवोच्यतइत्यर्थः । नन्वथापिअहमिहैवास्मिसदनेजानानइत्यात्माणुत्वग्राहिप्रत्यक्षं । आत्माविभुःसर्वत्रकार्योपलंभादित्य नुमानबाध्यंदृष्टमित्यतआह ॥ अहमिहैवेति ॥ अणुत्वादिति ॥ उत्क्रांतिगत्यागतीनांहेतूनांसकाशादणुरेवेत्युक्तेरित्यर्थः ।

ननुदीपज्वालैक्यग्राहिप्रत्यक्षंह्रस्वत्वदीर्घत्वादिविरुद्धधर्माधिकरणत्वान्नैकापूर्वोत्तरदीपज्वालेत्यनुमानबाध्यंदृष्टमितिचेत् तत्रवि कल्पयामः । यत्रादौदीपोनिर्वापितःपश्चात्पुनरारोपितस्तत्रज्वालैक्यग्राहिप्रत्यक्षमित्युच्यते । अथवायत्रनिर्वापितारोपितोनभ वति किंतुयथास्थितएवास्ति तत्रज्वालैक्यग्राहिप्रत्यक्षमित्युच्यते । आद्येआह ॥ निर्वापितेति ॥ नाशितेत्यर्थः ॥ भेदग्रा हीति ॥ पूर्वोत्तरज्वालयोरितिशेषः । द्वितीयेत्वाह ॥ अन्यत्रापीति ॥ निर्वापितारोपितदीपेनभवतिचेदित्यर्थः । प्रत्यक्षेण



ज्वालैक्यप्रत्यक्षमपिनिर्वापितारोपितदीपेचेद्भेदग्राहिप्रत्यक्षेणबाधितमेवजायते । अ
न्यत्रापिदीर्घोयंदीपोह्रस्वोनेतिप्रत्यक्षेणबाध्यते नत्वऽनुमित्या । तादृशप्रत्यक्षाभावेतुन
दीपभे(दमनुपश्यामः)दः । दूरस्थस्यायंसर्पइत्याद्यपिप्रत्यक्षंनशब्दमात्रेणबाध्यं किंतुना
यंसर्पइत्याप्तवाक्यमूलपरीक्षितप्रत्यक्षगौरवादेव । राजगौरवादिवराजभृत्येनामात्यः

परिणामभेदग्राहिप्रत्यक्षेण । दीर्घोयमित्यादिपरिणामभेदग्राहिप्रत्यक्षाभावेकथमित्यतआह ॥ तादृशेति ॥ नेति ॥ एकप्र कारेणैवदीपस्यसत्त्वात्तत्रभेदग्राहिलिंगस्यैवाभावात् । तथाचतत्रैक्यग्राहिप्रत्यक्षंप्रमाणमेवेतिभावः । नन्वयंसर्पइतिप्रत्यक्षंना यंसर्पइत्याप्तवाक्येनबाध्यंदृष्टमित्यतआह ॥ अयंसर्पइति ॥ अयंसर्पइतिप्रत्यक्षंपुनरुत्तरक्षणेनायंसर्पइतिस्वप्रत्यक्षेणैवबाध्यं भविष्यतीत्यतउक्तं ॥ दूरस्थस्येति ॥ स्वस्यदूरस्थत्वेनविशेषदर्शनावकाशाभावेनभ्रमएवभविष्यति नबाधकप्रत्यक्षावकाशइ

तिभावः । दृष्टांतांतरमाह ॥ श्रुतीति ॥ श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानांसमवायेपरदौर्बल्यस्यनिर्णीतत्वात् । दुर्बले नापिश्रुत्यनुसारिणाप्रकरणेनश्रुतिगौरवात्प्रबलमपिलिंगादिकंबाध्यंदृष्टं । तथाहि "यएषोंतरक्षणी"त्यत्रोक्तंचक्षुरंतस्स्थत्वरू पलिंगंप्रबलमपि "प्राणोब्रह्मकंब्रह्मखंब्रह्मे"त्यादिब्रह्मश्रुत्युपेतप्रकरणेनदुर्बलेनापिश्रुतिगौरवाद्बाध्यंदृष्टमित्यवधेयं ॥ शिष्टा कोपेयथोदितमिति ॥ प्रमाणलक्षणेस्मृतिपादेचिंतितं । "शिष्टाकोपेविरुद्धमितिचेत्नशास्त्रपरिमाणत्वादि"त्यत्र "वेदंकृ त्वावेदिंकरोती" तिश्रूयते । वेदोनामसंमार्जनसाधनभूतदर्भमुष्टिः । तस्यकरणंनामदृढबंधनादिरूपःसंस्कारः । वेदिर्नामगार्ह

श्रुतिगौरवादिववाश्रुत्यनुसारिप्रकरणादिनालिंगादिकं । उक्तंहि "दुर्बलस्यप्र
माणस्यबलवानाश्रयोयदा । तदापिविपरीतत्वंशिष्टाकोपेयथोदित "मिति ।

पत्याहवनीययोर्मध्येचतुरंगुलखाताभूमिः । तत्करणंनामवेदेनसंमार्जनादिसंस्कारः । तथाचादौवेदःकार्यःपश्चाद्वेदिःकार्येतिश्रु तौक्रमःप्रतिपाद्यते । अत्रैव "क्षुतआचामेदि" तिस्मरणमस्ति । तत्रयदिवेदकरणानंतरंयदिक्षुतःस्यात्तर्ह्याचामेत्अनंतरंवेदिः कार्येतिस्मृत्यर्थः।तत्रतत्स्मरणंप्रमाणमप्रमाणंवेतिसंशयेवेदवेदिक्रमवचनस्यैवप्रबलत्वात्तद्विरुद्धंस्मरणमेवाप्रमाणमितिपूर्वःपक्षः। सिद्धांतस्तुक्षुतआचामेदितिस्मरणंप्रधानभूताचमनादिपदार्थप्रतिपादकतयाप्रबलं । श्रुतिस्तुवेदवेदिरूपपदार्थयोर्धर्मभूतक्रमप्र तिपादकतयादुर्बला अतोनिरंतरानंतर्यप्रतिपादिकाश्रुतिरेवस्मृत्याबाध्यतइति । प्रबलाश्रयसद्भावदशायामेवनीचंप्रबलबाधकं

नान्यदेत्येतदुपपादयति ॥ नहीति ॥ प्रधानभूतेति ॥ पदार्थनिष्ठधर्मापेक्षयापदार्थानांप्रधानत्वादित्यर्थः । तथाचप्रधानभूताचमनादिविषयकत्वरूपबलवदाश्रयवतीस्मृतिःश्रुतिबाधिकेतिभावः ॥ अन्यत्रापीति ॥ औदुंबरींस्पृष्ट्वोद्गायेदित्यादावपीत्यर्थः ॥ अतएवेति ॥ अयंसर्पइतिप्रत्यक्षंनायंसर्पइत्याप्तवाक्यंप्रतिमूलभूतपरीक्षितप्रत्यक्षगौरवादेवशब्दबाध्यंयतोऽतएवेत्य

नहिप्रधानभूताचमनादिपदार्थविषयस्मृत्यापदार्थधर्मभूतक्रमविषया "वेदंकृत्वावेदिंकरोती"तिश्रुतिर्बाधितेत्यन्यत्रापितयासाबाध्यते । अतएवनायंसर्पइत्युक्तेप्रतिवदंति किमेवंवदसि केवलं अपिपुनःपरामृश्यपश्यसीति । ननुतथापिपीतःशंखःनीलंनभइत्यादिप्रत्यक्षंश्वैत्यनीरूपत्वाद्यनुमित्यैवचंद्रप्रादेशत्वप्रत्यक्षंचाप्रत्यक्षमूलशब्देनैवबाध्यंदृष्टमितिचेत् उच्यते ।

र्थः ॥ शब्देनैवेति ॥ "अष्टाशीतिसहस्राणिविस्तीर्णयोजनानितु । प्रमाणंतत्रविज्ञेयंकलाःपंचदशैवत्वि"तिशब्देनैवेत्यर्थः । ननुतत्रापितन्मूलभूतप्रत्यक्षेणैवबाधइतिशंकावारणायअप्रत्यक्षमूलेत्युक्तं । चंद्रप्रादेशत्वादिसर्वापटुप्रत्यक्षवैलक्षण्यंजगत्प्रत्यक्षस्योपपादयितुंचंद्रप्रादेशत्वादिप्रत्यक्षस्यापटुत्वेऽनुमानागमाबाध्यत्वंकथं । प्रत्युतापटुत्वादेवानुमानागमबाध्यत्वमेवस्यादित्या

शंकांपरिहरन्ज्ञानप्रभेदंतावदाह ॥ द्विविधंहीत्यादिना ॥ एकाकारनियतं एककोट्यवगाहीत्यर्थः ॥ निश्चयादिति ॥ य
दूरस्थत्वादिदोषयुक्तंतत्परिमाणादावयथार्थमितिसाक्षिणानिश्चितत्वादित्यर्थः । एवंज्ञानप्रभेदमुक्त्वाइदानींचंद्रप्रादेशत्वादिप्र
त्यक्षस्यएकाकारविषयत्वात्स्तंभप्रत्यक्षवत्पटुत्वमेव । अपटुत्वेपिआगमादिबाध्यत्वमेवेतिशंकायाउत्तरमाह ॥ एवंचेत्यादि

द्विविधंहिज्ञानं संदेहरूपमेकाका(रनियतंच)रंचेति । द्वितीयमप्यप्रामाण्यधीकलंकिततदकलंकितं
चेतिद्वेधा । (अप्रामाण्यधी)कलंकितत्वमपिद्वेधा बाधकाभिमतज्ञानोदयात्प्रागेवदोषज्ञानेनवा
ऽर्थाभावनिश्चयेनवा । तत्राद्यंयथा चंद्रप्रादेशत्वग्राहि । शैलाग्रस्थतरुपरिमाणादिज्ञानेदूरादिदो
षत्वनिश्चयात् । द्वितीयंयथा सवितृशंखादौसुषिरपीतत्वादिग्राहि । प्रागेवतत्रपरीक्षितप्रत्यक्षे
णसुषिराद्यभावनिश्चयात् । एवंचचंद्रप्रादेशत्वादिप्रत्यक्षेणप्रागेवज्ञातदूरादिदोषेणअप्रमाणत्वे
नज्ञातेनसंदेहवत्स्वार्थपरिच्छेदपराङ्मुखेननिःशंकप्रवृत्त्यजनकेनावकाशेदत्तेपश्चाच्छब्दादिःप्रवर्तते
नतुतेनप्रत्यक्षबाधः । यथाप्रबलप्रत्यक्षबाधितस्याक्षस्यानंतरंप्रवृत्तेनशब्दादिनानबाधस्तद्वत् । ये
नयस्यभ्रमत्वंज्ञायतेतत्तस्यबाधकं । नचचंद्रप्रादेशत्वादिप्रत्यक्षस्यागमादिनाभ्रमत्वंज्ञायते ।

ना ॥ आदिपदेननभोनैल्यप्रत्यक्षग्रहः ॥ ज्ञातेनेति ॥ साक्षिणेतिशेषः । परिच्छेदो निश्चयः ॥ नतुतेनेति ॥ शब्दादिनान
बाधः किंतुप्रबलप्रत्यक्षेणैवेतिभावः ॥ नबाधइति ॥ तत्रप्रवर्तमानंशब्दादिबाधकमिवोच्यतइत्यर्थः ॥ आगमादिनेति ॥

येनतस्यबाधकत्वंस्यादित्यर्थः । किंनामप्रबलप्रत्यक्षेणैवातस्तस्यैवबाधकत्वमितिवाक्यशेषः । द्वितीयेद्वितीयमुदाहरति ॥ अ कलंकितमिति ॥ स्वार्थपरिच्छेदे स्वार्थनिश्चये ॥ नह्यत्रेति ॥ घटस्सन्नेवेत्यादिजगत्प्रत्यक्षइत्यर्थः । तथाचसर्वापद्रुप्रत्यक्ष वैलक्षण्यमितिभावः ॥ प्रत्यक्षेक्लृप्तेति ॥ चंद्रप्रादेशत्वादिप्रत्यक्षेक्लृप्तेत्यर्थः । कल्प्येत जगत्प्रत्यक्षेपीत्यर्थः ॥ विप्रलंभेति ॥

अकलंकितंस्वार्थपरिच्छेदेऽभिनिविष्टंनिःशंकप्रवृत्तिजननयोग्यं । यथा अग्निरुष्णएव
प्रस्तरोयजमानोनैव घटस्सन्नेवेत्यादि । नह्यत्रप्रागेवदूरादिदोषधीर्वाऽर्थाभावनिश्चयो
वाऽस्ति । यदिचप्रत्यक्षेक्लृप्तदूरादिदोषाभावेप्यन्यःकल्प्येत तर्हिश्रुतावपिशब्देक्लृप्त
विप्रलंभाद्यभावेप्यन्यःकल्प्येत । नचाविद्यकत्वंदोषः मेयाविद्यकत्वस्याद्याप्यसिद्धेः ।
मानाविद्यकत्वस्यतुश्रुतावपिसत्त्वात् । नाप्यनादिभेदभ्रमवासनादोषः श्रौतज्ञान
स्यापिप्रकृतिप्रत्ययादिभेदवासनाजन्यत्वात् । भेदधियोद्यापिभ्रांतित्वासिद्धेश्च ।

विप्रलंभादिदोषेत्यर्थः । अपौरुषेयत्वेनपुरुषदोषनिबंधनदोषाभावादितिभावः । जगत्प्रत्यक्षेऽन्यत्रक्लृप्तदोषव्यतिरिक्तंदोषांतरमा शंक्यनिषेधति ॥ नचेत्यादिना ॥ जगत्प्रत्यक्षेदोषत्वेनोच्यमानमाविद्यकत्वंकिंमेयस्य उतमानस्य नोभयमपीत्याह ॥ मेये त्यादिना ॥ श्रौतेति ॥ तथाचतस्याप्यप्रामाण्यंस्यादितिभावः ॥ भेदवासनेति ॥ तथाचभेदभ्रमवासनायादोषत्वकथन

मयुक्तमितिभावः ॥ इदंचेति ॥ अनुमानादिबाधकतयोच्यमानंसत्त्वग्राहिप्रत्यक्षमित्यर्थः ॥ अवकाश(प्र)दमिति ॥ स्वबाधनायेतिशेषः । बाह्यं साक्षिभूतस्वरूपस्वरूपेंद्रियव्यतिरिक्तंचक्षुरादि । अन्येन । अनुमानेनागमेनवेत्यर्थः ॥ अवकाशदमिति ॥ स्वबाधनायेतिशेषः । एवंचंद्रप्रादेशत्वादिप्रत्यक्षस्यागमाबाध्यत्वमुपपाद्यनभोनैल्यप्रत्यक्षस्याप्यनुमानाबाध्यत्वमुपपादयति ॥ एवंचेति ॥ दूरतःक्रोशादिपरिमितप्रदेशेनैल्यबुद्धौसत्यांसमीपेतावदाकाशेममरूपंनप्रतीयतएवदूरेतज्ज्ञानंदोषजन्यमितिसमीपगमनात्प्रागेवनिश्चिततयापश्चात्पुनर्धावनेनयत्प्रदेशेरूपंप्रतीतंतत्रगमनेसतिरूपंनप्रतीयतएव । तथाचनभोनैल्य

इदंचाकलंकितंप्रत्यक्षंसाक्षिरूपंचेन्नकेनापिबाध्यं नकस्याप्यवकाशदं । बाह्यंतुप्रबलप्रत्यक्षेणबाध्यं नत्वन्येनबाध्य मन्यस्यावकाशदंवा । एवंचाकाशेसमीपेनीरूपत्वनिश्चयाद्दूरेतद्धीर्दूरदोषजन्येतिप्रागेवनिश्चिता नतुनीरूपत्वानुमितिबाध्या । केचित्त्वाकाशोनीलिमोदेतीतिश्रुतेर्नभोनीलमेव समीपेतुभूसंनिकर्षस्यप्रतिबंधकत्वान्नैल्यानुपलंभइत्याहुः । अन्येतुनैल्यधीःसाक्षिप्रत्यक्षबाधिता ।

प्रत्यक्षेणप्रागेवज्ञातदूरादिदोषेणाप्रमात्वेनसाक्षिणाज्ञातेनसंदेहवत्स्वार्थपरिच्छेदपराङ्मुखेननिश्शंकप्रवृत्त्यजनकेनात्रकाशेदत्तेपश्चात्नभोनीरूपंविभुत्वादितिप्रवर्तमानमनुमानंबाधकमिवोच्यते नतुतेनबाधः किंतुसमबलप्रत्यक्षेणैवेतिभावः । अन्यापदेशेनस्वयमेवपक्षांतरमुत्प्रेक्षयति ॥ केचित्त्वित्यादिना ॥ नीलमेवेति ॥ तथाचदूरेनभोनैल्यप्रत्यक्षंप्रमारूपमेवनभ्रमरूपमित्यर्थः । तर्हिसमीपेकस्मान्नोपलक्ष्यतइत्यतआह ॥ समीपेत्विति ॥ केचिदाहुरित्यस्वरसोद्भावनं । तद्बीजंतुगुरुचरणाइत्थमु

पदिशंति । तथाहि । सिद्धांतेऽव्याकृतमेवाकाशनीरूपंसाक्षिवेद्यं नतुभूताकाशंसाक्षिवेद्यं "आकाशोनीलिमोदेती" तिश्रुतिर्भूताकाशविषयैव नीलरूपोपेतमपितद्भूताकाशमतींद्रियमेव । नसर्वजनप्रत्यक्षविषयः । "भूतमप्यसितंदिव्यदृष्टिगोचर" मितिदिव्यदृष्टिगोचरत्वोक्तेः । नीलंनभइतिप्रत्यक्षंचसर्वजनसाधारणं । अतोनायंपक्षःसाधीयानिति । ननुकथंनैल्यधियःसाक्षिप्रत्यक्षबाधितत्वं । तथात्वेसाक्षिणानभसिनीलरूपंनास्तीतिप्रतीत्याभाव्यं । नचेयंप्रतीतिर्युक्ता । येनेंद्रियेणप्रतियोगीगृह्यतेतेनैवतदभावोपिगृह्यतइतिनियमदर्शनादत्राप्यभावप्रतियोगिभूतनीलरूपस्यबाह्यपदार्थस्यसाक्षिप्रत्यक्षाविषयत्वात्कथंसाक्षिणातदभाव

अचाक्षुषपिशाचान्योन्याभावस्यस्तंभःपिशाचोनभवतीतिचक्षुषैवसाक्ष्ययो
ग्यरूपाभावस्यापिनीरूपत्वविशेषावकाशत्वग्राहिणासाक्षिणाग्रहणात् ।

ग्रहइतिचेन्न । अन्योन्याभावप्रत्यक्षेऽधिकरणप्रत्यक्षस्यैवतंत्रतायाःसर्वतार्किकसंमतत्वेनप्रतियोगियोग्यत्वस्यातंत्रत्वात् । यथाप्रतियोगिभूतपिशाचस्याचाक्षुषत्वेपिअधिकरणीभूतस्तंभस्यप्रत्यक्षत्वमात्रेणस्तंभःपिशाचोनेतिअन्योन्याभावस्यज्ञानंचक्षुषाभवतीत्यंगीकृतं । एवमिहापिअधिकरणभूताव्याकृताकाशस्यसाक्षिसिद्धत्वात्प्रतियोगिनोनीलरूपस्यायोग्यत्वेपितदभावज्ञानंसाक्षिणायुक्तमेवेत्याह ॥ अचाक्षुषेति ॥ साक्ष्ययोग्येतिरूपविशेषणं ॥ रूपाभावस्यापीति ॥ रूपात्यंताभावस्यापीत्यर्थः । नीलरूपाभावोपपादनायाव्याकृताकाशेऽवकाशत्वंनिर्वक्ति ॥ नीरूपत्वेति ॥ नीरूपत्वोपेतपदार्थविशेषत्वमेवाकाशत्वमित्यर्थः ।

एवंप्रतियोगिभूतनीलरूपस्यसाक्ष्ययोग्यत्वेपितदभावःसाक्षिप्रत्यक्षएवेत्यस्मद्रीत्योक्तं । परमतेतुनेदंदुर्घटं तन्मतेनीलरूपस्यापि साक्षिवेद्यत्वांगीकारात् । नचैतदनानुभाविकं । नीलंनभइतिसाक्षिणानुभूयमानत्वात् । नचेयंप्रतीतिश्चक्षुषैवनसाक्षिणेतिवाच्यं । निमीलितनेत्रस्यापिनीलंनभइतिप्रतीतेर्दर्शनात् । तथाचप्रतियोगिनोनीलरूपस्याधिकरणीभूताकाशस्यचसाक्षिवेद्यत्वांगीकारेणप्रतियोगितदभावयोरेकेंद्रियग्राह्यत्वप्राप्त्यानैल्याभावज्ञानंसाक्षिणैवभ(वती)विष्यतीत्याह ॥ परमतेपीति ॥ अत्र चाक्षुषपिशाचान्योन्याभावदृष्टांतेनसाक्ष्ययोग्यरूपाभावस्यापिसाक्षिणाग्रहणादित्युक्तं । अन्योन्याभावप्रत्यक्षेअधिकरणप्रत्यक्ष

परमतेपिह्याकाशंसाक्षिवेद्यंनिमीलितनेत्रस्यनीलंनभइतिधीश्चसाक्षिरूपेत्याहुः । यद्वाअश्रावणेआकाशेश्रावणीशब्दाभावधीरिवाचाक्षुषेप्याकाशेरूपाभावधीर्वायाविवचाक्षुष्येव ।

स्यैवप्रयोजकत्वेनप्रतियोगिनोचाक्षुषत्वेपिअन्योन्याभावस्यचाक्षुषत्वोपपत्तावपिप्रकृतेनतथासंभवति । नभोनीलंनेत्यत्यंताभावस्यैवप्रतीतेः । तत्रचप्रतियोगिनोऽभावग्राहकेंद्रियत्वस्यैवतंत्रत्वेनप्रकृतेतदभावात् । नचनभोनीलंनेतिप्रतीतिरपिअन्योन्याभावप्रतीतिरेवेतिवाच्यं । तथात्वेनभोनीलंनेतिप्रतीत्यानीलरूपान्योन्याभावस्यैवावकाशेसिध्यानीलरूपाभावासिद्धेः । घटादौरूपान्योन्याभावसत्वेपितद्वत्वस्यैवदर्शनादित्यस्वरसमाहुरित्यनेनसूचयति । नीलरूपवदन्योन्याभावकत्वेतुस्वारस्यंद्रष्टव्यं । अतएवात्रास्वरसादाह ॥ यद्वेति ॥ आकाशेनीलरूपंनास्तीतिप्रतीतिःचक्षुषैवभवति नसाक्षिणा । नचाधिकरणस्याकाश(स्यचक्षु

षाऽयो)स्यायोग्यत्वात्तत्रकथंरूपाभावज्ञानंचक्षुषास्यादितिवाच्यं । आकाशस्यश्रावणत्वाभावेपिआकाशेशब्दोनास्तीतिशब्दाभावप्रतीतेःश्रावणत्वदर्शनात् । तथाऽचाक्षुषेपित्रायौरूपाभावज्ञानस्यचाक्षुपत्वदर्शनात् । अतोऽधिकरण(स्याप्रत्यक्षत्वेपि)स्यायोग्यत्वेपिप्रतियोगियोग्यत्वमात्रेणतदत्यंताभावस्यप्रत्यक्षतायास्तार्किकैरंगीकारात्प्रकृतेप्याकाशस्याचाक्षुषत्वेपिनीलरूपात्यंताभावज्ञानंचाक्षुषमेवभविष्यतीत्यर्थः । आकाशेरूपाभावज्ञानंचक्षुषैवभवतीत्येतदनुभवसिद्धमित्याह ॥ दूरस्थस्येति ॥ अन्यथेति ॥ आकाशेनीरूपत्वप्रतीतेश्चाक्षुषत्वानंगीकारइत्यर्थः । नन्वाकाशस्यनीरूपत्वेकथंलिंगाभावः । नभोनीरूपं परममहत्परि

दूरस्थस्यपुंसोयत्रनभःप्रदेशेनैल्यधीस्समीपस्थस्यतस्यैवतत्रैवचक्षुषैवानैल्यबुद्धेः । अन्यथाऽऽकाशस्यनीरूपत्वंनसिध्येत् । लिंगाभावात् । तत्पक्षेमहत्त्वद्रव्यानारंभकत्वादेरसिद्धेः ।

माणवत्त्वात् द्रव्यानारंभकत्वात् निस्पर्शत्वात् कालादिवत् पृथिव्यादित्रयेतरत्वाद्वायुवदित्यनुमानैस्तत्सिद्धिसंभवादित्यतआह ॥ महत्त्वेति ॥ परममहत्परिमाणवत्त्वेत्यर्थः । अन्यथामहत्त्वमात्रस्यघटादौव्यभिचारापत्तेरितिध्येयं । ननुपरममहत्त्वस्य कथमसिद्धिरुच्यते । भवद्भिरव्याकृताकाशेपरममहत्परिमाणांगीकारादित्यतउक्तं ॥ तत्पक्षइति ॥ अव्याकृताकाशस्यपरेणानंगीकाराद्भूताकाशस्यच "अव्यक्तीरनभोऽहंकृन्महत्तत्त्वगुणत्रयैः । क्रमाद्दशोत्तरै" रितिस्मृत्यापरिच्छिन्नत्वावगमेनपरममहत्त्वस्यासिद्धिरेव । तथाद्रव्यानारंभकत्वमप्यसिद्धमेव "आकाशाद्वायु" रित्याकाशस्यवायुरूपद्रव्यारंभकत्वांगीकारादित्यर्थः ।

अंत्यावयविनिघटादौव्यभिचारोपिद्रष्टव्यः ॥ तमसीति ॥ ननुनीरूपत्वस्यापितत्रसत्त्वान्नव्यभिचारइतिचेन्न । "नीलंविदारयामासतमश्चक्रेणमाधव" इतिहरिवंशादौतमसोविदारणोक्त्यातमसोनीलरूपवद्द्रव्यत्वस्यास्माकंसम्मतत्वात् । "नीलरूपंतमोद्रव्य" मितिवाचस्पत्युक्त्यापरस्यापिसंमतत्वादितिभावः ॥ एतैरेवेति ॥ परममहत्त्वादिहेतुभिरित्यर्थः ॥ अशब्दत्वस्यापीति ॥ शब्दरूपगुणराहित्यस्यापीत्यर्थः । त्रिवृत्करणपक्षेआकाशेरूपासिद्ध्यापंचीकरणेनेत्युक्तं । एवंचपंचानांभूतानांमिश्रीकरणपक्षेआकाशस्यरूपवत्तेजोजलपृथिव्यात्मकतयारूपवत्त्वसद्भावेनरूपाभावानुमानेबाधःस्यादित्यर्थः ॥ यद्वेति ॥ नभोनी

निस्स्पर्शत्वस्यतमसिव्यभिचारात् पृथिव्यादित्रयेतरत्वादेश्चाप्रयोजकत्वात् । एतैरेवाशब्दत्वस्याप्यापाताच्च । पंचीकरणेनरूपस्यापिसत्त्वेनबाधाच्च । यद्वाव्याप्तिप्रत्यक्षेणतन्मूलानुमित्यावातद्बाधः । अनौष्ण्यहेतोस्तुनव्याप्तिः अप्रयोजकत्वात् ।

रूपंविभुत्वात् यद्विभुतन्नीरूपमितिव्याप्तिग्राहकंयत्साक्षिप्रत्यक्षंतेनैवनीरूपत्वग्राहिणानीलंनभइतिप्रत्यक्षस्यबाधोनानुमानेनेत्यर्थः ॥ तन्मूलेति ॥ साक्षिप्रत्यक्षगृहीतव्याप्तिकविभुत्वानुमानेनैवबाधः । राजगौरवेणराजभृत्ये नामात्यस्येवेत्यर्थः । नन्वेवंचेद्भवद्रीत्यैववह्निरनुष्णःपदार्थत्वादित्यनुमानेनस्पार्शनप्रत्यक्षस्यबाधाभावेपियत्रपदार्थत्वंतत्रानुष्णत्वमितिव्याप्तिग्राहकंप्रत्यक्षमस्ति तेनैववा तन्मूलानुमित्यावा बाधोस्त्वित्यतआह ॥ अनौष्ण्येति ॥ स्यादिदं यदिपदार्थत्वानुष्णत्वयोर्व्याप्तिःस्यात्तर्हि

वतद्ग्राहकप्रत्यक्षेणबाधदानावकाशः । नचैवं तत्राप्रयोजकत्वेनव्याप्तेरेवाभावादितिभावः । नन्वथापियद्दृश्यंतन्मिथ्येतिव्या
प्तिग्राहकंयत्प्रत्यक्षंतेनवा तन्मूलकानुमित्यावा सत्त्वग्राहिप्रत्यक्षस्यबाधोस्त्वितिसाम्यमित्याशंक्याह ॥ मिथ्यात्वेति ॥ घट
धीवदिति ॥ यथाघटधियोघटसत्त्वग्राहित्वंतथेत्यर्थः । व्याप्तिधीः व्याप्तिग्राहिप्रत्यक्षं । नैवंत्वयावक्तुंशक्यं । तथाहि । य
द्दृश्यंतन्मिथ्येतिव्याप्तिग्राहिप्रत्यक्षेणस्वविषयस्यहेतुसाध्यव्याप्त्यादेःसत्त्वंविषयीक्रियतेनवा । नेतिपक्षेव्याप्त्याद्यसत्त्वप्राप्त्यानु
मानाप्रामाण्यं । आद्येनदृश्यत्वहेतुमतिमिथ्यात्वसिद्धिः । प्रत्यक्षविषयतयादृश्यत्ववतिव्याप्त्यादौमिथ्यात्वाभावेनव्यभिचारा

मिथ्यात्वहेतौतुघटधीवत्व्याप्तिधीरपिस्वार्थसत्वग्राहितयाऽनुमितिप्रतिकूलैव
नतुतस्यामूलं । अथवानीरूपत्वानुमितिरुपजीव्यव्याप्तिप्रत्यक्षाद्यविरुद्धाधर्मि
ग्राहकाऽबाधिताच । मिथ्यात्वाद्यनुमितिस्तूपजीव्यव्याप्तिप्रत्यक्षादिविरुद्धाध
र्मिग्राहकबाधिताचेतिवैषम्यं । तस्मात् स्वार्थानिश्चयरूपेणनिश्चलाध्यपरोक्षधीः ।

पत्तेरतोनुमित्यायत्सिषाधयिषितंप्रपंचांतर्गतव्याप्त्यादेरपिमिथ्यात्वंतत्प्रतिकूलतयाव्याप्तिप्रत्यक्षस्यानुमितिमूलत्वासंभवान्नतेन
वातन्मूलानुमित्यावासत्त्वग्राहिप्रत्यक्षस्यबाधइतिसांप्रदायिकोर्थः । प्रकारांतरेणापिनास्मन्न्यायेनत्वयापिमिथ्यात्वानुमित्यास
त्त्वग्राहिप्रत्यक्षस्यबाधोवक्तुंशक्यतइत्याह ॥ अथवेति ॥ व्याप्तिप्रत्यक्षं साक्षिप्रत्यक्षं ॥ धर्मीति ॥ आकाशरूपधर्मिग्राहको
पिसाक्ष्येव । अतस्तादृशानुमित्यानैल्यप्रत्यक्षबाधइतिभावः ॥ व्याप्तीति ॥ उक्तरीत्येत्यर्थः । अतएतादृशानुमित्यानसत्त्वप्र

त्यक्षबाधइत्याशयः । निश्चला अप्रामाण्यशंकयाऽकलंकितेत्यर्थः ॥ विजातीयेति ॥ सजातीयप्रबलप्रत्यक्षेणविनाविजातीयानुमानादिनानबाध्येत्यर्थः। ननुतर्हियद्वाव्याप्तिप्रत्यक्षेणेत्यादिनानीरूपत्वानुमित्याकथंनैल्यप्रत्यक्षबाधोऽभिहितइत्यतउक्तं ॥ केवलेनेति ॥ अतएवतत्रव्याप्तिप्रत्यक्षमूलानुमित्यैवबाधउक्तोनकेवलयेतिद्रष्टव्यं । परीक्षितंप्रत्यक्षंनानुमानादिबाध्यमित्येतत्त्वापिसंमतमित्याह ॥ उक्तंचेति ॥ व्यवहारः प्रवृत्तिः ॥ तत्रतथेति ॥ तत्रप्रत्यक्षस्यापरीक्षितत्वादनुमानादिनाबाधितं

विजातीयप्रमाणेनकेवलेननबाध्यते। तदुक्तं" नहिदृष्टस्यवस्तुनोबलवद्दृष्टिंविनाऽन्यद्बाधक "मिति। उक्तंचविवरणेपि " यत्राविचारपुरस्सरमेवप्रत्यक्षावभासमप्यनुमानादिना बाधितमुच्छिन्नव्यवहारंभवतितत्रतथाभवतु यत्रपुनर्विचारपदवीमुपारूढयोर्ज्ञानयोर्बलाबलचिंतयाबाधनिश्चयस्तत्रनानुमानादिनाप्रत्यक्षस्यामिथ्यात्वसिद्धिरिति ॥ ७ ॥ प्रत्यक्षस्यलिंगाद्यबाध्यत्वेबाधकोद्धारः ॥ १६ ॥ नापिभाविबाधकशंकामात्रेणेतितृतीयः

भवतीत्यर्थः ॥ चिंतयेति ॥ परीक्षयेत्यर्थः ॥ ७ ॥ प्रत्यक्षस्यलिंगाद्यबाध्यत्वेपरोक्तबाधकानामुद्धारविवरणं ॥ १६ ॥ प्रत्यक्षमप्रमाणमेवेतिप्रथमःकल्पःस्वतःप्राप्ततत्वावेदनलक्षणप्रामाण्यस्यत्यागःकिमनुमानविरोधात् आगमविरोधाद्वा भाविबाधकशंकयावे तित्रेधाविकल्पितः। तत्रप्रथमद्वितीयौनिराकृतौ । इदानींतृतीयमनूद्यदूषयति ॥ नापीति ॥ सत्त्वप्राहि

प्रत्यक्षस्यशंक्यमानंभाविबाधकंकिमनुमान मागमोवा प्रत्यक्षंवा । नाद्यद्वितीयौ । कुतइत्यतआह ॥ उक्तरीत्येति ॥ जात्या उपक्रमादिन्यायैश्चप्रबलेनप्रत्यक्षेणविरोधाल्लिंगशब्दयोर्बाधकत्वमित्यर्थः । नतृतीयइत्याह ॥ अक्षस्येति ॥ जगत्प्रत्यक्षवदेवतद्बाधकेपिप्रत्यक्षेऽप्रामाण्यशं(कापातेनबाधकत्वायो)कयातेनबाध्यत्वायोगादित्यर्थः । ननुसामान्यतःकेनचित्प्रमाणेनबाधः शंक्यतइतिचेत्तत्राह ॥ सर्वेति ॥ सत्त्वग्राहिप्रत्यक्षंबाध्यंत्रैकालिकनिषेधरूपबाधोपेतत्वात्स्वाप्नप्रत्यक्षवदितिअनुमातव्यं स्वाप्नगजादिज्ञानस्यहिजाग्रत्कालीनंस्वाप्नगजाद्यभावज्ञानमेवबाधकंवाच्यं । तथाचजाग्रत्कालीनस्वाप्नगजाद्यभावप्रत्यक्षस्यापिभा

उक्तरीत्यालिंगशब्दयोरबाधकत्वात् अक्षस्याप्रमाणतयाशंक्यमानत्वात् सर्वविशेषा भावेचसामान्यस्याप्यभावेनबाधकशंकायाअनुदयात् । किंचत्वन्मतेजाग्रदादिज्ञान स्याप्रमाणत्वेनस्वप्नादेर्बाधासिद्धौकथंतद्दृष्टांतेनान्यत्रतच्छंका।तदुक्तंवार्तिकेबौद्धंप्रति
"प्रतियोगिनिदृष्टेचजाग्रज्ज्ञानेमृषाभवेत्।स्वप्नादिबुद्धिरस्माकंतवभेदोपिकिंकृत"इति।

विबाधकशंकयाऽप्रामाण्येस्वाप्नप्रत्यक्षस्यबाधकाभावेननिषेधप्रतियोगित्वरूपबाधासिद्धौदृष्टांताभावेनान्यत्रसत्त्वग्राहिप्रत्यक्षेपि बाधकशंकानयुक्तेत्याह ॥ किंचेति ॥ जाग्रच्छब्देनस्वप्नदृष्टस्यगजादेरभावोग्राह्यः । शुक्तिरूप्यादेरभावआदिशब्दार्थः । तयोर्ज्ञानस्येत्यर्थः । स्वप्नादेरित्यादिपदेनशुक्तिरूप्यादि । बाधोनिषेधप्रतियोगित्वं । वार्तिकेभट्टवार्तिके । भट्टाचार्येणेतिशेषः ॥ प्रतियोगिनीति ॥ विरोधिनीत्यर्थः । स्वाप्नगजादिज्ञानविरोधिनिजाग्रज्ज्ञानेजाग्रत्कालीनगजाद्यभावज्ञाने दृष्टेप्रामाणिकेस

ति । अस्माकं सत्यमिथ्याविवेकवतां स्वप्नादिबुद्धिर्मृषामिथ्यार्थावभासिकाभवेत् । तव सर्वमिथ्यात्ववादिनः स्वाप्नजाग्रज्ज्ञानयोर्भेदःकिंकृतः बाधकत्वेनाभिमतस्यजाग्रद्गजाद्यभावज्ञानस्यापिमिथ्यार्थावभासत्वात्स्वप्नगजादेर्मिथ्यात्वंनसिद्ध्यतीतिवार्तिकार्थः । विश्वबाधकत्वेनाभिमतज्ञानेबाधकत्वव्यापकाभावात्तदभावइत्याह ॥ अपिचेति ॥ भ्रमकालीनापरोक्षबुद्धिर्भ्रमएव स्वस्यस्वकालीनत्वात् तदविषयोयोविशेषःशुक्तित्वादिस्तद्विषयाइयंशुक्तिरितिधीर्बाधिकादृष्टेत्यर्थः । प्रकृतेतदभावमाह ॥ नचेति ॥ धीः वेदांतजन्यब्रह्मविषयकचरमवृत्तिः । भ्रमाविषयविशेषविषयानभवति ब्रह्मणोनिर्विशेषत्वादि

अपिचभ्रमकालीनापरोक्षबुद्ध्यविषयविशेषविषयैवधीर्बाधिका नचतवविश्वबाधिका धीस्तद्विषया । किंचसप्रकारैवधीर्बाधिका । निर्विकल्पिकायाःसप्रकारकभ्रमाविरोधित्वात् नचते(तव)विश्वबाधिकाधीःसप्रकारिका । किंचनतावत्साप्रकारा

तिभावः । बाधकत्वव्यापकांतराभावमाह ॥ किंचेति ॥ सप्रकारैवेति ॥ भ्रमविरोधिप्रकारप्रकारिकेत्यर्थः । कुतइत्यतआह ॥ निर्विकल्पिकायाइति ॥ धर्मिमात्रविषयकत्वेनाबाधकत्वादितिभावः । प्रकृतेतदभावमाह ॥ नचेति ॥ किंचविश्वबाधिकाधीःकिंशब्दजन्या शब्दाजन्यावा आद्येपिकिंसासप्रकारा निष्प्रकारावा त्वदनभिप्रेतत्वान्नाद्यइत्याह ॥नतावत्सेति॥ शब्दजन्याविश्वबाधिकाधीः नद्वितीयः । शब्दस्यसंसर्गप्रतियोगितावच्छेदकप्रकारकज्ञानजनकतयानिष्प्रकारकज्ञानजनकत्वा

सिद्धेरित्याह ॥ नापीति ॥ नांत्यइत्याह ॥ नचत्वन्मतइति ॥ बाधिकाधीरिति ॥ नेदंरजतमित्यादिका ॥ भ्रमस्येत्यादि ॥ एतावत्कालंशुक्त्यज्ञानमासीद्रजतज्ञानमासीदित्यनुभवेनाज्ञानंभ्रमस्वरूपंचनबाध्यते किंतुभ्रमविषयएव विषयस्यबाध्यत्वेपिज्ञानस्वरूपस्याबाध्यत्वंचदुःखादिविषयकसाक्षिणःपरमतेप्रसिद्धमितिभावः ॥ नेति ॥ त्वयातुबाधकत्वाभिमतचरमवृत्त्याभ्रमस्वरूपाज्ञानदोषाध्यस्तद्रष्टृभूतजीवादिसर्वप्रपंचबाधांगीकारेणदृष्टवैरूप्यापातइत्यर्थः । एतावत्पर्यंतंभाविबाधकतयाशंक्यमानंज्ञानंनबाधकमित्युपपाद्यतद्बाध्यत्वंसन्घटइत्यादिप्रत्यक्षेनास्तिबाध्यत्वव्यापकाभावादित्याह ॥ किंचेति ॥ दोषज

नापिनिष्प्रकाराशब्दजन्येतिवक्ष्यते । नचत्वन्मतेसाशब्दान्यजन्या । किंचबाधिकाधी भ्रमस्यतद्धेतोरज्ञानस्यतद्दोषस्याध्यस्तस्यद्रष्टुश्चनबाधिकेतिनभ्रमादिबाधोयुक्तः । किंचदोषजन्यमेवबाध्यं नचसाक्षिप्रत्यक्षंतज्जन्यं । अद्वैतज्ञानेतुश्रुतितात्पर्यभ्रमोदोषः ।

न्यं ज्ञानं । प्रकृतेतदभावादित्याह ॥ नचेति ॥ साक्षीति ॥ वियदादिजगत्सत्यत्वग्राहीत्यर्थः ॥ तज्जन्यमिति ॥ अजन्यत्वात्तस्येतिभावः । ननुयथाऽपौरुषेयतयावेदस्यदोषाजन्याप्यद्वैतश्रुतिर्भेदश्रुतिबाध्येतिभवद्भिरुच्यते । एवंदोषाजन्यमपिसाक्षिज्ञानंबाध्यतामित्यतआह ॥ अद्वैतज्ञानेत्विति ॥ नास्माभिर्भेदश्रुत्याऽद्वैतश्रुतिर्बाध्यतइत्युच्यते । किंनामाद्वैतश्रुतिजन्यंज्ञानमेव । तच्चाभेदविषयकश्रुतितात्पर्यभ्रमजन्यमेवेत्यर्थः । सन्घटइत्यादिज्ञानेऽबाध्यत्वव्याप्यस्यसत्त्वादबाध्यत्वमंगीकार्य

मित्याह ॥ किंचेति ॥ रूप्यज्ञानबाधकंयत्नेदंरजतमितिज्ञानंतत्तुल्यंयन्मानंइयंशुक्तिरितिआप्तवाक्यजन्यज्ञानांतरंतत्संवादि इयंशुक्तिरितिज्ञानंतन्नबाध्यमित्यर्थः । प्रकृतेतत्सद्भावमाह ॥ द्वैतेति ॥ अबाध्यत्वव्याप्यांतरमाह ॥ किंचेति ॥ बाधकधी बोध्यं अनिषेध्यत्वेनेतिशेषः । तेनरजतस्यापिनिषेध्यतयाबाधकधीबाध्यत्वादबाध्यत्वादबाध्यत्वापत्तिरितिशंकानवकाशः ॥ नबाध्यमिति ॥ अधिष्ठानभूतशुक्तिवदित्यर्थः । प्रकृतेतत्सद्भावमाह ॥ भेदश्चेति ॥ कथंबाधकधीबोध्यत्वंभेदस्येत्यतआह तयेति ॥ बाधकधियेत्यर्थः ॥ स्वेति ॥ चरमवृत्तिरूपबाधकधीविषयस्यब्रह्मणोऽभेदस्यवेत्यर्थः ॥ भेदेति ॥ स्वबाध्योयोभे

किंचबाधकतुल्यमानसंवादिनबाध्यं । द्वैतप्रत्यक्षंचाद्वैतश्रुतितुल्यद्वैतश्रुतिसं
वादि । किंचबाधकधीबोध्यंनबाध्यं भेदश्चबाधकधीबोध्यः तयाचस्वविष
यस्यभेदाभिन्नतयौदासीन्येनवाग्रहेबाधकत्वायोगेनभिन्नतयैवग्राह्यत्वात् ।

दस्तदभिन्नतयेत्यर्थः । अयंभावः । द्वैतस्यबाधकंवेदांतजन्यचरमवृत्तिरूपंज्ञानंस्वविषयंब्रह्मअभेदंवानिषेध्याद्भेदादभिन्नतयागृ ह्णाति । औदासीन्येनवाभिन्नतयावा । नाद्यः । तथात्वेभ्रमत्वस्यैवापत्त्याबाधकत्वायोगात् । यथानेदंरजतमितिज्ञानंस्वविषयं शुक्तिकाशकलंनिषेध्यरजताभिन्नतयागृह्णातिचेत्तस्यभ्रमत्वमेवदृष्टं । तथाइहापिब्रह्मअद्वैतंवास्वविषयंनिषेध्यभेदाभिन्नतयागृ ह्णातिचेद्भ्रमत्वमेवस्यान्नबाधकत्वं भेदौदासीन्येनग्रहणेपितथैव । भेदादिप्रपंचसाधारण्येनैवैक्यग्रहणात् । तस्माद्यदानेदंरजत

मितिज्ञानंस्वविषयभूतंशुक्तिशकलंरजताद्भिन्नमितियदिगृह्णातितर्ह्येवबाधकंतथादृष्टं अतोत्रापिबाधकत्वोपपत्तयेचरमवृत्तिर्ब्रह्म अद्वैतंवास्वविषयंस्वनिषेध्यभेदाद्भिन्नमितिगृह्णातीत्यवश्यमभ्युपेयं । ततश्चभेदस्यबाधकधीबोध्यत्वंसिद्धमिति । उपसंहरति ॥ तस्मादिति ॥ बाधकशंका भाविबाधकशंका सन्घटइतिप्रत्यक्षेभाविबाधकशंकाकिमबाधितबाधोभविष्यतीत्येवंरूपाआहो स्विद्बाधितबाधोभविष्यतीत्येवंरूपा । नाद्यः । अबाधितबाधरूपकोट्यप्रसिद्धेः । नचरूप्यादिज्ञानबाधकेनेदंरूप्यमितिज्ञानेऽ बाधितत्वंप्रसिद्धमितिवाच्यं । रूप्यादिबाधेपिबाधकशंकायाःसत्त्वात् । नद्वितीयः । तादृशशंकायाद्वैतादेरबाध्यत्वाविरोधि

तस्मान्नबाधशंकायुक्ता । कथंचेयंशंका रूप्यादिबाधेपिबाधकशंकापातेनाबाधितबाधरूपकोट्यप्रसिद्धेः । बाधितबाधशंकायाश्चाबाध्यत्वाविरोधित्वात् भाविबाधेपिबाधशंकापातेनस्वव्याघाताच्च । तदुक्तंवार्त्ति केबौद्धंप्रति "दुष्टज्ञानगृहीतार्थप्रतिषेधोपियुज्यते । गृहीतमात्रबाधेतुस्वपक्षोपिनसिध्यती"ति ।

त्वात् । बाधोभविष्यतीत्येवंसामान्यतःशंकायाश्चयावद्विशेषाभावेनायोगादित्याह ॥ कथंचेयंशंकेत्यादिना ॥ स्वव्याघा ताच्चेति ॥ स्वेनोक्ताभाविबाधकशंकास्वात्मानमेवघातितवतीत्यर्थः । दुष्टज्ञानं इदंरजतमितिज्ञानं । युज्यतेनेदंरजतमितिबा धकरूपादुष्टज्ञानेनेत्यर्थः ॥ गृहीतमात्रेति ॥ त्वन्मतेऽप्रामाण्यस्यस्वतस्त्वात्यःप्रत्ययःसमृषादृष्टइतिव्याप्तिमाश्रित्यगृहीत मात्रस्यभाविबाधकशंकयाबाधांगीकारेस्वपक्षोपिगृहीतमात्रस्यबाधरूपःस्वकीयःपक्षोपिनसिद्ध्यति तत्रापिबाधकशंकाप्रसरणेस्व

व्याघातादितिभावः ॥ धीमात्रइति ॥ तथाचनभाविबाधकज्ञानेबाधशंकेतिभावः ॥ किंत्विति ॥ तथाचद्वैतादिसाक्षात्कारएवबाधकशंकायुक्तेत्यर्थः । भाविबाधकस्यासाक्षात्काररूपत्वनैयत्येनापसिद्धांताभीरुणापरेणोक्तमंगीकृत्यदूषणमाह ॥ विशेषेति ॥ वस्तुतस्तुभाविबाधकज्ञानस्यापिवेदांतजन्यचरमवृत्तित्वेनसाक्षात्काररूपतयातत्रापिशंकास्यादेवेत्याह ॥ वृत्तिरूपेति ॥ शब्दाजन्येति ॥ द्वैतादिसाक्षात्कारःशब्दाजन्यइतितत्रशंकायुक्ता । अद्वैतसाक्षात्कारस्तुशब्दजन्यइतिनतत्रशंकेत्य

नचधीमात्रेनबाधशंका किंतुसाक्षात्कारइतियुक्तं । विशेषहेत्वभावात् । वृत्तिरूपा
द्वैतसाक्षात्कारेतत्प्रसंगाच्च । नापिशब्दाजन्यसाक्षात्कारेतच्छंका । मुक्तस्वरूपानं
दसाक्षात्कारेतत्प्रसंगात् । वेदांतजन्यधीप्रामाण्यग्राहिसाक्षिप्रत्यक्षमप्यतत्वावेदक
मेवतत्वावेदकत्वेनगृह्णातीतिशंकयातत्वज्ञानायवेदांतश्रवणादिस्वक्रियाविरोधाच्च ।
शंकाग्राहिसाक्षिप्रत्यक्षमपिअशंकामेवशंकात्वेनगृह्णातीतिशंकयास्वव्याघाताच्च ।

र्थः ॥ मुक्तस्वरूपेति ॥ तस्यनित्यत्वेनसर्वथाऽजन्यत्वेनशब्दाजन्यत्वादितिभावः । अतत्वावेदकमेव वेदांतजन्यधीस्वरूपमितिशेषः ॥ स्वक्रियाविरोधाच्चेति ॥ सर्वत्रप्रत्यक्षेशंकास्तीतिवदतस्तवब्रह्मायाससाध्यावेदांतश्रवणादिक्रियावेदांतजन्यधीप्रामाण्यग्राहिसाक्षिगोचराप्रामाण्यशंकाभावसाध्याविरुद्ध्येतेत्यर्थः ॥ शंकेति ॥ भाविबाधकशंकेत्यर्थः ॥ अशंकामिति ॥ वस्तुगत्याशंकानभवतीत्यर्थः ॥ स्वव्याघाताच्चेति ॥ घटादिसत्त्वग्राहिप्रत्यक्षंवस्तुतोऽप्रमाणमेवप्रमाणत्वेनसाक्षीगृह्णातीतियथो

च्यते तथाशंकाग्राहिप्रत्यक्षमप्यशंकामेवशंकात्वेनगृह्णातीतिशंकापातेनस्वन्यायेनव्याघातादित्यर्थः ॥ शब्दान्येति ॥ द्वैतसाक्षात्कारःशब्दान्यजन्यइतितत्रशंकायुक्ता । वेदांतजन्यसाक्षात्कारस्तुशब्दजन्यएवेतिनतत्रशंकेत्यर्थः । अनेनमु(क्तस्वरूपानंद) क्तानंदव्यावृत्तिःकृताद्रष्टव्या । शब्दान्यजन्यसाक्षात्कारेतच्छंकेत्युक्त्याशब्दजन्यसाक्षात्कारेतच्छंकानास्तीत्युक्तंस्यात् अमितिचेत्तत्राह ॥ दशमइति ॥ शब्दाभासेति ॥ वस्तुतोनवमेदशमस्त्वमसीतिप्रयुज्यमानंवाक्यंशब्दाभासएवेत्यर्थः ॥ साक्षात्कारेपीति ॥ दशमोऽस्मीतिभ्रमरूपसाक्षात्कारइत्यर्थः । दशमस्त्वमसीतिवाक्यंसाक्षात्कारजनकमितितन्मतरहस्यं ॥

नापिशब्दान्यजन्यसाक्षात्कारेतच्छंका । दशमस्त्वमसीतिशब्दाभासजन्यसाक्षात्कारेपिबाधदर्शनेनविशेषहेत्वभावात् । विश्वान्यप्रत्यक्षएवतच्छंकेतिसुवचत्वाच्च । अद्वैतश्रुत्यनुमानादिग्राहिप्रत्यक्षमपितात्विकींव्यावहारिकींवाअनेकमेवसद्वितीयमितिश्रुतिमेवव्यावहारिकेणप्रातिभासिकेनवाएकमेवाद्वितीयंब्रह्मेतिश्रुतित्वेनगृह्णातीत्यादिशंकयामिथ्यात्वादिश्रुत्यादेरेवासिद्ध्यापत्तेश्च ।

विशेषेति ॥ शब्दान्यजन्यसाक्षात्कारएवतच्छंकानतुशब्दजन्यसाक्षात्कारइत्यत्रविशेषहेत्वभावादित्यर्थः ॥ विश्वान्येति ॥ शब्दान्यजन्यसाक्षात्कारएवतच्छंका नतुशब्दजन्यसाक्षात्कारइतियथोच्यते एवंवयमपिवदामो विश्वविषयकप्रत्यक्षभिन्नप्रत्यक्षएवभाविबाधकशंका । ततश्चवेदांतजन्यसाक्षात्कारेपितच्छंकास्यान्नविश्वप्रत्यक्षइत्यपि(सुवचत्वा)वक्तुंशक्यत्वादित्यर्थः । यदिभाविबाधकशंकयाऽप्रमाणमेवप्रमाणत्वेनप्रत्यक्षंगृह्णातीत्युच्यते तर्हिमिथ्यात्वश्रुतिरेवत्वन्मतेनसिद्ध्येदित्याह ॥ अद्वैतेति ॥

अद्वैतश्रुतिस्वरूपग्राहिश्रोत्रप्रत्यक्षंलिंगकरणतापक्षेऽनुमानस्वरूपग्राहिचक्षुरादिकं । तथाचवस्तुगत्याएकमेवाद्वितीयमितिश्रुतिर्नास्त्येव किंनामानेकमेवसद्वितीयमित्येवास्तिश्रुतिः । एवंचानेकमेवसद्वितीयमितितात्विकीमेवश्रुतिंव्यावहारिकैकमेवाद्वितीयमितिश्रुतित्वेनअथवाव्यावहारिकीमेवानेकमेवसद्वितीयमितिश्रुतिंप्रातिभासिकैकमेवाद्वितीयमितिश्रुतित्वेनश्रोत्रप्रत्यक्षंगृह्णातीतिशंकयामिथ्यात्वश्रुतिरेवनसिद्ध्येदित्यर्थः । तथाऽधूममेवधूमत्वेनचक्षुर्गृह्णातीतिशंकयातेनवह्निसिद्धिरपिनस्यादित्यपि द्रष्टव्यं ॥ शून्येत्यादि ॥ अयमर्थः । त्वन्मतेब्रह्माद्वैतमेवतत्वं द्वितीय(स्यसतोऽभाव)स्यात्यंताभावएवतत्त्वं नतुशून्याद्वैतं

**शून्याद्वैतंतत्वमितिसद्वैतंतत्वमितिचश्रुतेरभावग्राहिप्रत्यक्षमपितात्विक्यांव्यावहारिक्यां वातस्यांश्रुतौसत्यामेवव्यावहारिकंप्रातिभासिकंवातदभावंगृह्णातीतिशंकयाशून्याद्वैतादि सिद्ध्या(पाताच्च)पत्तेश्चानचात्माद्वैतश्रुतिविरोधादुक्तशंकानुदयः तस्याएवसंदिह्यमानत्वात्।**

सद्वैतंवातत्वं तथाश्रुतेरश्रवणादितित्वयोच्यते । तत्रवदामः । शून्याद्वैतंतत्वमित्यादिश्रुत्यभावग्राहिश्रोत्रप्रत्यक्षंतात्विक्यांशून्याद्वैतंतत्वमित्यादिश्रुतौसत्यामेवव्यावहारिकंतदभावंगृह्णाति अथवाव्यावहारिक्यांशून्याद्वैतंतत्वमित्यादिश्रुतौसत्यामेवप्रातिभासि(कमेवत)कंतदभावंगृह्णाति । प्रतियोगितदभावयोर्भिन्नसत्ताकत्वनियमादि(तिशं)त्याशंकयाशून्याद्वैतसद्वितीयरूपतत्त्वसिद्धेरप्यापातादिति । आदिपदेनसद्वैतग्रहणं ॥ उक्तशंकेति ॥ शून्याद्वैतादिसिद्ध्यापादकोक्तशंकेत्यर्थः ॥ तस्याएवेति ॥ आत्माद्वैतश्रुतेरेवभाविबाधकशंकयाऽप्रमाणत्वेनसंदिह्यमानत्वादित्यर्थः । तथाचशंकायाअभावेनात्माद्वैतश्रुतिप्रामाण्यसिद्धौ

तद्विरुद्धतयातात्विक्यांव्यावहारिक्यांवेत्यादिनोक्तशंकायाअभावेनशून्याद्वैताद्यसिद्धिः । तस्यांचसत्यांतद्विरोधाभावेनआत्माद्वैतश्रुतिप्रामाण्यसिद्धिरित्यन्योन्याश्रयादितिभावः । यदुक्तमद्वैतश्रुतिस्वरूपग्राहिप्रत्यक्षेपिशंकापत्त्यामिथ्यात्वश्रुत्यादेरेवासिद्ध्यापत्तेश्चेति तदयुक्तं । वस्तुतोमन्मतेमिथ्यात्वश्रुतिरपिनास्त्येव । सर्वस्यापिब्रह्मातिरिक्तस्यमिथ्यात्वांगीकारात् । नचतर्हिमिथ्यात्वसिद्धिःकथमितिवाच्यं । व्यवहारदशायांभवदीय(भेदश्रु)द्वैतश्रुतिरेवास्तितत्वतःसाऽद्वैतश्रुतित्वेनास्माभिर्ज्ञाताऽस्ति तादृश्यैवचश्रुत्याऽद्वैतंसिद्ध्यति । असतएवमन्मतेसाधकत्वेनांगीकारादित्याशंक्यातिप्रसंगानाह ॥ नचेत्यादिना ॥ भेदश्रुति

नचतत्वतोद्वैतश्रुत्याव्यवहारदशायामद्वैतश्रुतित्वेनगृहीतयामिथ्यात्वसिद्धिः । वह्नित्वे नज्ञाताद्गुंजापुंजाद्दाहापत्तेः । भेदश्रुतित्वेनपूर्वपक्षिणाज्ञातेनाद्वैतवाक्येनद्वैतासिद्ध्यापत्तेश्च । नचाद्वैतश्रुतितत्प्रामाण्यादेरप्यन्यत्रादृष्टस्तात्विकसत्वविरोधीतत्वावेदकेनैवबाधःशंक्यःनतुस्वप्नादौदृष्टःव्यावहारिकसत्वविरोधीअतत्वावेदकेनबाधइतिराजाज्ञास्ति ।

त्वेनेति ॥ यथाऽसतएवसाधकत्वेनाद्वैतश्रुतित्वेनज्ञातयाद्वैतश्रुत्यैवमिथ्यात्वंसिद्ध्यतीतित्वयोच्यतेतथेत्यर्थः । असतःसाधकत्वमप्युत्तरत्रनिराकरिष्यतइत्यवधेयं । ननुमयाप्रत्यक्षादीनांतत्वावेदकेनाद्वैतागमेनबाधःशंकितुंशक्यते । तत्वावेदकेनबाधस्यतात्विकसत्त्वविरोधित्वेनव्यावहारिकसत्त्वाविरोधित्वात् । अद्वैतागमस्यतुबाधोनशंकितुंशक्यः । सहितत्वावेदकेनैवशंक्योनातत्वावेदकेन तत्वावेदकंचाऽद्वैतागमादन्यन्नास्तीतिकथमद्वैतागमेबाधशंकेत्यतआह ॥ नचेति ॥ अद्वैतश्रुत्यादेस्तात्विकस

त्त्वविरोधीयस्तत्वावेदकेनबाधःसएवशंक्यो नतुव्यावहारिकसत्त्वविरोधीअतत्वावेदकेनबाधःशंकनीयइतिराजाज्ञायाअभावेना द्वैतश्रुत्यादेरतत्वावेदकेनैवबाधोऽस्माभिःशंक्यतएव प्रत्युतत्वयोच्यमानःतत्वावेदकेनबाधोन्यत्रस्वप्नादौकुत्राप्यदृष्टः । अस्मा भिरुच्यमानोऽतत्वावेदकेननायंगजइत्यादिजाग्रज्ज्ञानादिनाबाधोव्यावहारिकसत्त्वविरोधीस्वाप्नेशुक्तिरजतादौचदृष्टोऽतोतत्वा वेदकेनैवबाधोऽद्वैतश्रुत्यादेःशंक्यते तथाचव्यावहारिकसत्त्वंयदंगीकृतंश्रुत्यादेस्तन्नस्यात् तावतैवममेष्टसिद्धेरित्यर्थः । नन्विद मयुक्तं । अन्यत्रस्वप्नादावदृष्टेपितत्वावेदकेनैवबाधेजगतिशंकितेतस्यचतात्विकसत्त्वविरोधित्वात्तदेवगच्छति नव्यावहारिकस त्त्वं । अद्वैतश्रुत्यादेरन्यत्रस्वप्नादौदृष्टेनअतत्वावेदकेनबाधेशंकितेतस्यव्यावहारिकसत्त्वविरोधित्वात्तस्मिन्नपगतेप्रातिभासिक

## अप्रातिभासिकत्वधीस्तुतात्विकत्वधीरिवयुक्ता ।

त्वमेवस्यात् । नचेष्टापत्तिरितिवाच्यं । अप्रातिभासिकत्वधीविरोधादित्यतआह ॥ अप्रातिभासिकत्वधीस्त्विति ॥ यथाब्र ह्मव्यतिरिक्तस्यमिथ्यात्ववादिनस्तवाद्वैतश्रुतितत्प्रामाण्यादौतात्विकत्वधीस्तवास्ति साकथमितिवाच्यं । बाधविलंबाभावाच्छु क्तिरजतादावतात्विकत्वधीः श्रुत्यादौबाधविलंबात्तात्विकत्वधीरितियदिब्रूयास्तर्हिव्यावहारिकसत्त्वविरोध्यतत्वावेदकागमेनबा धशंकयाश्रुत्यादेःप्रातिभासिकत्वलाभेपितत्राप्रातिभासिकत्वधीरपितात्विकत्वधीवत्बाधविलंबप्रयुक्तेतिवयमपिवदामइत्यर्थः । ननुश्रुत्यादेःप्रातिभासिकत्वेपिअप्रातिभासिकत्वधीस्तात्विकत्वधीरिवयुक्तेत्ययुक्तं तथात्वे "तरतिशोकमात्मविदि"तिब्रह्मतत्व

ज्ञानाच्छुत्यादिसर्वप्रपंचनिवृत्तिप्रतिपादकश्रुतिविरोधः । प्रातिभासिकस्यब्रह्मतत्वज्ञानान्निवृत्त्यनुपपत्तेरित्याशंक्यनिषेधति ॥ नचैवमिति ॥ वस्तुतस्तुतन्निवृत्तिश्रुतिरेवनास्तितत्रापिभाविबाधकशंकाप्रसरादित्याह ॥ अत्रापीति ॥ अनिवृत्तीति ॥ वस्तुगत्याब्रह्मतत्वज्ञानान्निवृत्तिश्रुतिस्सानभवत्येव । साचतन्निवृत्तिश्रुतित्वेनगृहीतेतिशंकोदयादित्यर्थः । तद्दर्शनेन दोषबाध दर्शनेन । अद्वैतलिंगं मिथ्यात्वसाधकंदृश्यत्वादि । तत्वमसीत्यद्वैतशब्दः । तच्छंका दोषबाधशंका । सदोषानुमायानिर्दोष

नचैवंब्रह्मतत्वज्ञानात्तन्निवृत्तिश्रुतिविरोधः। अत्राप्यनिवृत्तिश्रुतिरेवनिवृत्तिश्रुतितयागृही तेतिशंकोदयात् । किंचापरीक्षितेरूप्यादिप्रत्यक्षेदोषबाधयोर्दर्शनेनपरीक्षितेजगत्प्रत्यक्षे पितदाशंकायांलिंगशब्दाभासयोस्तद्दर्शनेनाद्वैतलिंगशब्दयोरपितच्छंका । बाधितेऽ क्षलिंगाद्याभासेपिभ्रमबाधितप्रमादृष्टांतेनाबाधशंकापिस्यादितिप्रमाणतदाभासव्यवस्थान स्यात् । तदुक्तं "निर्दोषानुमायास्सदोषत्वंसदोषानुमायानिर्दोषत्वमित्यव्यवस्थे" ति ।

त्वमित्युक्तातिप्रसंगांतरमाह ॥ बाधितइति ॥ बाधितेकथमबाधितत्वंशंकितुमर्हमित्यतउक्तं भ्रमबाधितेति । भ्रमबाधितत्वे नाभिमतेत्यर्थः । भ्रमनिवृत्तेत्यर्थइत्यन्ये । इदंरजतमितिबाधितेऽक्षेऽनुष्णत्वादिसाधकेपदार्थत्वादिलिंगाभासेचाबाधशंकापि स्यात् कुतः इयंशुक्तिरितिप्रमानंतरंजातेनइदंरजतमितिभ्रमेणसाप्रमाबाध्यते तस्याःप्रमायावस्तुगत्याऽबाध्यत्वमप्यस्ति कुतः

भ्रमस्यअन्यथाविज्ञातस्यसम्यग्विज्ञानत्वाभावेनतदबाधकत्वात् तथाचभ्रमबाधितेप्यबाधितत्वदर्शनेनबाधितेऽक्षादावपिअबाधशंकास्यादित्यर्थः । तथाचवस्तुगत्याअबाधितेपिजगत्प्रत्यक्षेबाधितरूप्यादिप्रत्यक्षदृष्टांतेनयदिबाधशंकाक्रियते तर्हिभ्रमबाधितत्वेनाभिमतायांप्रमायांवस्तुगत्याऽबाध्यत्वसत्वेनतदृष्टांतेनवस्तुतोऽबाधितेप्यक्षेलिंगेचबाधशंकास्यादितिप्रतिबंदीग्रहणमिति भावः । अद्वैतलिंगशब्दयोरपिबाधशंकास्यादित्ययुक्तं । लोकेदोषजन्यज्ञानएवबाधदर्शनात् श्रुतेश्चनित्यत्वेनदोषजन्यत्वाभावादित्याशंकते ॥ श्रुतिरिति ॥ नित्यत्वंस्वरूपासिद्धमित्याह ॥ त्वन्मतइति ॥ ननुनाद्वैतश्रुतौदोषबाधयोःशंका तस्याःप्र

श्रुतिर्नित्यत्वान्निर्दोषेतिचेन्न त्वन्मतेश्रुतिनित्यतायाआकल्पंस्थितिमात्ररूपत्वेनआकाशादिवत्प्रतिकल्पंतस्याउत्पत्तेः । तस्याःप्रमाकरणत्वेपिममद्वैतइवब्रह्ममीमांसायांप्रत्यधिकरणंपूर्वपक्ष्यभिमतार्थइवचत्वद्वैतेतात्पर्यधीःभ्रमइतिशंकयातज्जन्याद्वैतधियःप्रमात्वासिद्धेश्च । उपक्रमोपसंहारतदैकरूप्यग्राहिप्रत्यक्षेप्युक्तन्यायेनशंकोदयेनतदैकरूप्यासिद्धेश्च ।

माकरणत्वरूपविशेषदर्शनसद्भावादित्यतआह ॥ तस्याइति ॥ श्रुतेःप्रमाकरणत्वेपिममतत्ववादिनोजायमानाद्वैतेतात्पर्यधीर्भ्रमइतितवशंकयातज्जन्यद्वैतधियःप्रमात्वंनसिध्यति । यथावाब्रह्ममीमांसायांप्रत्यधिकरणंपूर्वपक्ष्यभिमतश्रुत्यर्थतात्पर्यधीर्भ्रमइतिशंकयातज्जन्यधियःप्रमात्वंनसिद्ध्यति एवमेवश्रुतेःप्रमाकरणत्वेपिपूर्वपक्ष्यभिमतार्थइवतवाद्वैततात्पर्यधीर्भ्रमइतिममशंकयातज्जन्यायास्त्वदीयाद्वैतधियःप्रमात्वासिद्धेरित्यर्थः ॥ उपक्रमेति ॥ अद्वैतइतिशेषः ॥ उक्तन्यायेनेति ॥ अनेकरूप्येएवै

करूप्यशंकयेत्यर्थः । दोषजन्यत्वज्ञानरूपकारणाभावाच्चनभाविबाधकशंकेत्याह ॥ किंचेति ॥ क्लृप्तदोषाणा मतिदूरत्वादीनां । अत्र जगत्सत्यताग्राहिप्रत्यक्षे । विनिश्चितः परीक्षयेतिशेषः । अन्यस्य अक्लृप्तस्य । प्रत्यक्षेदूरादिदोषाभावस्ययोग्यानुपलब्ध्यानिश्चयेपिसन्घटइतिप्रत्यक्षेयदिदोषशंका तदाश्रुतावपिसास्यादित्यर्थः । ननुदूरादिदोषाभावनिश्चयमात्रेणनप्रत्यक्षेणार्थसिद्धिः स्वप्नेप्येतादृशनिश्चयसद्भावेनस्वाप्नप्रत्यक्षतुल्यत्वादित्याशंकते ॥ स्वाप्नेति ॥ तर्हिब्रह्मैवतत्वमितिवेदेपिभ्रांत्याद्यभावनिश्चयोयोजायतेसोपिशून्यमेवतत्वमितिस्वप्नेकश्चनवेदोदृष्टस्तत्रभ्रांत्याद्यभावनिश्चयोयोजातस्तत्तुल्यइत्याह ॥ स्वाप्नइति ॥

किंच प्रत्यक्षेक्लृप्तदोषाणामभावोत्रविनिश्चितः । अन्यस्यकल्पनानित्येवेदेपिननिवार्यते ।
स्वाप्नप्रत्यक्षेपितदादूराद्यभावनिश्चयोस्तीतिचेन्न । स्वाप्नेशून्यमेवतत्वमितिवेदेपितदाभ्रां
त्याद्यभावनिश्चयस्यसत्वात् । स्वप्नवैषम्यानुभवस्तूभयत्रसमः । किंच नतावत्साक्षिणिबाध
शंका तस्यनित्यानुभवरूपतयावेदइवतात्पर्यभ्रांतेरप्ययोगेनवेदादप्यनाशंकितदोषत्वात् ।

नन्वद्वैतश्रुतौस्वाप्नशून्यप्रतिपादकवेदवैषम्यानुभवान्नस्वाप्नवेदतुल्यत्वमित्यतआह ॥ स्वप्नेति ॥ समइति ॥ सन्घटइतिप्रत्यक्षेपिस्वाप्नप्रत्यक्षवैषम्यानुभवात्नतत्तुल्यत्वमित्यर्थः । एतावत्पर्यंतंभाविनोबाधकत्वमेवाऽयुक्तं तस्यबाधकत्वेपिनास्यजगतस्तद्बाध्यत्वं अतोनभाविबाधकशंकायुक्तेत्युक्तं । इदानीमस्तुवासाशंका साकिंसाक्षिप्रत्यक्षेक्रियते बाह्यप्रत्यक्षेवा नाद्यइत्याह ॥ किंचेति ॥ ननुदोषजन्यत्वज्ञानाभावेपिप्रमाणाजन्यत्वमात्रेणसाक्षिण्यप्रामाण्यहेतुभूतबाधकशंकास्यादितिचेत्समानमेतद्वेदे

पीत्याह ॥ **प्रमाणेति** ॥ तदप्रामाण्ये तस्याप्रामाण्यहेतुभूतबाधकशंकायां ॥ **गुणेति** ॥ अपौरुषेयतयाआप्तोक्तत्वरूपगुणस्यैवा भावादितिभावः ॥ **अप्रामाण्येति** ॥ अप्रामाण्यहेतुबाधकशंकापातादित्यर्थः ॥ **निश्शंकमिति** ॥ निश्शंकंयथास्यात्तथा । साक्षिग्राह्यंयत्सुखादिकमित्यन्वयः । अस्त्यत्रपुरतःपानीयमितिवाक्यंश्रुतवतःपानीयसमीपप्राप्तिः प्राप्तस्यपानं तेनोदन्यानि मित्तदुःखनाशःसुखप्राप्तिरित्येवंरूपयासुखादिपर्यंतपरीक्षयेत्यर्थः ॥ **तन्निरासादिति** ॥ दोषजन्यत्वज्ञाननिरासेनशंकानिरा

**प्रमाणाजन्यत्वमात्रेणतदप्रामाण्येगुणाजन्यत्वमात्रेणवेदस्याप्यप्रामाण्यापातात् । नापि बाह्यप्रत्यक्षे । तत्रापिनिःशंकंसाक्षिग्राह्यसुखादिपर्यंतपरीक्षयातन्निरासात् । उक्तंहि "न परीक्षानवस्थास्यात्साक्षिसिद्धेत्वसंशयादि" ति । "नहिबाधःक्वचिद्दृष्टोदुःखाद्यनुभवस्य त्वि"तिच । ननुस्वाप्नजलप्रत्यक्षेपिस्वाप्नावगाहनपानतज्जन्यसुखपर्यंतापरीक्षास्तीतिचेन्न ।**

सादित्यर्थः । प्रत्यक्षेसुखपर्यंतापरीक्षापिस्वाप्नप्रत्यक्षपरीक्षातुल्येत्याशंकते ॥ **नन्विति** ॥ यदिस्वाप्नजलप्रत्यक्षसंबंधिपरीक्षासा म्येनजाग्रदवस्थाकालीनजलप्रत्यक्षसंबंधिपरीक्षायाअप्यप्रामाण्येनानाश्वासःशंक्यते । तर्ह्यद्वैतश्रुतावप्यनाश्वासःस्यात् । ननु तत्रनानाश्वासः ब्रह्मैवतत्त्वमितिवेदस्यापौरुषेयत्वज्ञानषड्विधतात्पर्यलिंगज्ञानतदनुग्राहकतर्कानुसंधानशून्याद्वैतप्रतिपादकश्रुति प्रतियोगिकप्राबल्यनिर्णयब्रह्मसाक्षात्कारतज्जन्यब्रह्मभावापत्तिरूपमोक्षपर्यंतापरीक्षास्तीतिचेन्न । शून्यमेवतत्त्वमितिस्वाप्नवेदप

रीक्षातुल्यत्वादित्याह ॥ स्वाप्नस्येत्यादिना ॥ नन्वद्वैतश्रुतिपरीक्षायाःस्वाप्नशून्याद्वैतश्रुतिपरीक्षातोवैषम्यमनुभूयतइतिचेत् तर्हिस्वाप्नजलप्रत्यक्षेसुखांतपरीक्षायाःसकाशात्जाग्रत्कालीनप्रत्यक्षेपिसुखांतपरीक्षायावैषम्यमनुभवसिद्धमित्याह ॥ स्वाप्नेति ॥ अन्यथेति ॥ परीक्षायामप्यनाश्वासइत्यर्थः ॥ नसिद्ध्येदिति ॥ तत्सिद्धिश्चत्वयापरीक्षयैववाच्या तदप्रामाण्येतन्नसिद्ध्येदि

स्वाप्नस्यशून्यमेवतत्वमितिवेदस्याप्यपौरुषेय(त्वादिज्ञा)त्वज्ञानषड्विधतात्पर्यलिंगज्ञानानुग्राह
कतर्कानुसंधानब्रह्माद्वैतश्रुतिप्रतियोगिकप्राबल्यनिर्णयस्वाप्नशून्यसाक्षात्कारतज्जन्यशून्य
भावापत्तिरूपमोक्षपर्यंतापरीक्षास्तीतिफलपर्यंताद्वैतश्रुतावप्यनाश्वासापातात् । स्वाप्नवैष
म्यानुभवेनाश्वासस्तूभयत्रसमइत्युक्तं।अन्यथापरस्यापिप्रातिभासिकवैलक्षण्यंनसिध्येत् ।
एवंच । स्वाप्नाद्विशेषस्यासिद्धौप्रपंचस्याद्वयश्रुतिः ।स्यात्फलेनसहस्वाप्नीसिद्धौशंकाक्षजेकुतः
॥ १ ॥ नहिप्रत्यक्षशब्दत्वकृतंवैषम्यमीक्ष(क्ष्य)ते । बाधाबाधकृतस्त्वेवविशेषःसंप्रदृश्यते॥२॥

त्यर्थः । प्रपंचस्यस्वाप्नाद्विशेषस्येत्यन्वयः । स्वाप्नी स्वाप्नशून्याद्वैतश्रुतिसमानास्यात् । सिद्धौ प्रपंचस्यस्वाप्नाद्विशेषस्येतिवर्तते । ननुप्रत्यक्षंप्रत्यक्षत्वादेवाप्रमाणं अद्वैतश्रुतिस्तुशब्दत्वादेवप्रमाणमित्युच्यतइत्यतआह ॥ नहीति ॥ नहीक्षते प्रामाण्यमिति शेषः । ईक्ष्यतइतिपाठमंगीकृत्यप्रामाण्याप्रामाण्यप्रयोजकत्वेननप्रदर्श्यतइत्यर्थइत्यन्ये । प्रामाण्यंकर्तृ वैषम्यंनेक्षते । नापेक्षत

इत्यर्थः । विशेषइत्यनंतरंप्रामाण्येप्रयोजकतयेतिशेषः । प्रत्यक्षेश्रुतिवत्प्रामाण्यप्रयोजकोऽबाधोस्तीत्युपसंहरति ॥तस्मादिति॥ ससमेति ॥ शंकामात्रेणापवादेससमोरसःकश्चनस्यादित्यपिशंकास्यादितिभावः ॥ स्वव्याघातादिनेति ॥ भाविबाधकशंका यामपिभाविबाधकशंकाप्रसरादित्यर्थः ॥ उक्तंहीति ॥ बाधाभावस्यप्रामाण्यप्रयोजकत्वमित्यर्थः । अर्थेऽत्यंतासत्यपिशब्द स्तावदत्यंतासद्वंध्यादिविषयकंज्ञानंकरोत्येव तत्रविषयाभावात्तज्ज्ञानंबाध्यते । अत्रेतितद्ग्रंथप्रकृतपरामर्शः । तत्रस्वतःप्रामा

तस्मात्त्वयाप्यौत्सर्गिकस्यप्रामाण्यस्यबलवद्बाधकदर्शनैकापोद्यत्वेनससमरसशंकातु ल्येनशंकामात्रेणानपवादात् स्वव्याघातादिनाशंकानुदयाच्चश्रुतेःप्रामाण्यनिश्चयइ तिवाच्यं।उक्तंहिखंडने “अत्यंतासत्यपिज्ञानमर्थेशब्दःकरोतिहि । अबाधात्तुप्रमा मत्रस्वतःप्रामाण्यनिश्चला ”मिति ।(ए)तत्प्रत्यक्षेपितुल्यं । उक्तंहिसुरेश्वरेणापि“ अ तोवबोधकत्वेनदुष्टकारणवर्जनात् । अबाधाच्चप्रमाणत्वंवस्तुन्यक्षादिवच्छ्रुते”रिति ।

ण्यान्निश्चलामचलांप्रमांकरोति । तत्रहेतुरबाधात्त्विति ॥ तुल्यमिति ॥ औत्सर्गिकप्रामाण्यस्यबलवद्बाधकैकापोद्यत्वेनप्रकृते तदभावात्प्रत्यक्षस्यप्रामाण्यनिश्चयइत्यर्थः । अतःश्रुतेःप्रमाणत्वमित्यन्वयः । तत्रहेतुरवबोधकत्वेनेत्यादि । वस्तुनि वस्तुसद्भा वे । श्रुतेरबाधितत्वेनप्रामाण्येऽक्षप्रामाण्यस्यदृष्टांतत्वेनोपादानादित्यर्थः । स्वक्रियादिविरोधतः तत्वज्ञानायवेदांतश्रवणादिरू

पस्वक्रियाविरोधप्रसंगात् । अध्यक्षेश्रुताविवभाविबाधकशंकानयुक्ता । स्वक्रियाविरोधेदृष्टांतः ॥ अहेत्विति ॥ कारणंविनापिकार्यंस्यादितिशंकावत् धूमार्थंवह्निमुपादत्ते तृप्त्यर्थंचभोजनं तत्कारणंचतन्नेतिब्रूतेइत्येवंवचनक्रियायाउपादानक्रिययाविरोधइत्यर्थः । प्रकृतेचोक्तरीत्यास्वक्रियाविरोधआयातीतिनभाविबाधकशंकाकार्येत्यर्थः ॥ उक्तंचेति ॥ भाविबाधकशंकाराहि

तस्मात् "अहेतुकार्यशंकेवस्वक्रियादिविरोधतः । भाविबाधकशंकानयुक्ताध्यक्षेश्रुताविव" । उक्तंह्युदयनेन तदेवह्याशंक्येतयस्मिन्नाशंक्यमानेस्वक्रियाव्याघातोनभवतीति । उक्तंचवार्तिकेबौद्धंप्रति "इह जन्मनिकेषांचिन्नतावदुपलभ्यते । योग्यवस्थागतानांतुनविघ्नःकिंभविष्यती"ति । नहिसंभवतिशब्दानुमानाभासयोःरूप्यादिधीप्रामाण्यग्राहिप्रत्यक्षस्यचबाधंपदार्थत्वस्यचमिथ्यात्वव्यभिचारंस्वैरिण्याश्चानियमंपश्यन्नपिपरीक्षितत्वाद्वेदांततदनुकूलानुमानयोःवेदांतधीप्रामाण्यग्राहिप्रत्यक्षस्यचाबाधंदृश्यत्वस्यचमिथ्यात्वाव्यभिचारंस्वमातुश्चनियमंनिश्चिनोति । जगत्प्रत्यक्षस्यतुपरीक्षितस्याप्यपरीक्षितरूप्यादिप्रत्यक्षदृष्टांतमात्रेणाबाधंननिश्चिनोतीति । परीक्षितप्रत्यक्षेप्यनाश्वासेहिनैकापिव्यवस्थासिध्येत्

त्यमित्यर्थः । इहजन्मनिकेषांचित्केषामपिबाधोनोपलभ्यते । योगिनांभविष्यतीतिचेत्तत्राह ॥ योगीति ॥ योग्यवस्थायांबाधोभविष्यतिवानवेतिवयंनविद्मइत्युपहासः । परःकेवलंस्वपक्षनि(क्षिप्तदृ)ष्टदृष्टिरित्यपहासमुखेनातिप्रसंगंसूचयन्जगत्प्रत्यक्षस्यपरीक्षितत्वादबाधनिश्चयोयुक्तइत्याह ॥ नहीत्यादिना ॥ शब्दानुमानाभासयोर्बाधंपश्यन्नपिपरीक्षितत्वाद्वेदांततदनुकूला

नुमानयोरबाधंनिश्चिनोति । रूप्यादिधीप्रामाण्यग्राहिप्रत्यक्षस्यबाधंपश्यन्नपिपरीक्षितत्वाद्वेदांतजन्यधीप्रामाण्यग्राहिप्रत्यक्षस्याबाधंनिश्चिनोति। पदार्थत्वरूपहेतोर्ब्रह्मणिमिथ्यात्वव्यभिचारंपश्यन्नपिपरीक्षितत्वादृश्यत्वहेतोर्मिथ्यात्वाव्यभिचारंनिश्चिनोति। स्वैरिण्यास्संभोगकर्तृपुरुषानियमंपश्यन्नपिपरीक्षितत्वात्स्वमातुःसंभोगेकर्तृपुरुषनियमंनिश्चिनोति । जगत्प्रत्यक्षस्यतुपरीक्षितस्याप्यपरीक्षितरूप्यादिप्रत्यक्षदृष्टांतमात्रेणाबाधंननिश्चिनोतीतिसंभवति। परीक्षितप्रत्यक्षेप्यऽनाश्वासेऽपरीक्षितशब्दानुमानाभासादिदृष्टांतमात्रेणपरीक्षितवेदांततदनुकूलागमादेरप्यबाधादिनिश्चयोनस्यादितिनकाप्युक्तव्यवस्थासिध्येदित्यतिप्रसंगइत्यर्थः ।

तदवसानत्वात्सर्वस्य नहिश्रुतेनुमितेवादृष्टइवाश्वासः । किंचैवंनहिंस्यादित्यस्याग्नीषोमीयेव्यभिचारदर्शनेनान्यत्रापितदाशंक्येतेत्युत्सर्गापवादन्यायोभज्येत ।

कुतोनसिद्ध्यतीत्यतआह ॥ तदवसानत्वादिति ॥ परीक्षावसानत्वादित्यर्थः । प्रत्यक्षसिद्धेऽनाश्वासोनास्तीत्येतदनुभवसिद्धमित्याह ॥ नहीति ॥ भाविबाधकशंकांगीकारे(दूषणांत)बाधकांतरमाह ॥ किंचेति ॥ व्यभिचारेति ॥ अग्नीषोमीयपशुहिंसायाःकर्तव्यत्वस्यश्रुतत्वाद्भूतत्वस्याहिंस्यत्वेनव्यभिचारदर्शनेनेत्यर्थः। अन्यत्रापि ब्राह्मणहिंसायामपि ॥ तदाशंक्येतेति ॥ कर्तव्यत्वशंकास्यादित्यर्थः ॥ न्यायइति ॥ अग्नीषोमीयपशुहिंसाव्यतिरिक्तब्राह्मणादिहिंसायाअकर्तव्यत्वरूपस्तदर्थो

नसिद्ध्येदित्यप्रामाण्यंस्यादित्यर्थः । इष्टापत्तिंपरिहर्तुमाह ॥ उक्तंहीति ॥ उपसंहरति ॥ तस्मादिति ॥ भाविबाधकशंक याप्रत्यक्षमात्रस्याप्रामाण्यंनवक्तुंयुक्तमित्याह ॥ किंचेति ॥ अन्यथा तस्याप्रामाण्ये ॥ वृद्धिमिच्छतइति ॥ शतद्रव्यवतः कुसीदादिनाशतद्वयंमेस्यादितिद्रव्याभिवृद्धिमिच्छतोमूलहानिवत्नेदंरजतमितिप्रत्यक्षविरोधेनशुक्तिरूप्यप्रत्यक्षस्याप्रामाणतया

उक्तंहि "उत्सर्गतोपियत्प्राप्तमपवादविवर्जितं । व्यभिचार्यपवादेनमानमेवभविष्य ती"ति । एवंच "बाधाभावोत्रनिर्णीतःशशशृंगाद्यभाववत् । अन्यथाशशशृंगादिर पिशंक्येतबाधवत्" । तस्मात्प्रामाण्यस्योत्पत्तौज्ञप्तौचस्वतस्त्वादिहचोत्पत्तिस्वतस्त्वा पवादस्यदोषस्यज्ञप्तिस्वतस्त्वापवादस्यबाधकस्यचादर्शनात्निर्मूलशंकायाश्चस्वक्रियावि रोधादिनानुत्थानात्सुस्थंप्रत्यक्षप्रामाण्यं किंच नेदंरूप्यमितिप्रत्यक्षप्रामाण्यमाव श्यकंअन्यथाइदंरूप्यमित्यस्याप्रामाण्यंनस्यादितिवृद्धिमिच्छतोमूलहान्यापत्तेः ।

तद्विषयस्यमिथ्यात्वात्तद्दृष्टांतेनसमस्तस्यापिजगतोमिथ्यात्वंसिषाधयिषितं । अन्यथानेदंरजतमितिप्रत्यक्षस्याप्रामाण्येइदंरूप्य मितिप्रत्यक्षस्याप्रामाण्यसाधकाभावेन(प्रमात्वापत्त्या)प्रामाण्यापत्त्याशुक्तिरूप्यादेर्मिथ्यात्वसाधकाभावेनमिथ्यात्वाभावात्दृष्टां ताभावान्नविश्वमिथ्यात्वसिद्धिरित्यर्थः । अत्रशुक्तिरूप्यमिथ्यात्वंमूलंविश्वमिथ्यात्वंवृद्धिरितिविवेकः । यद्वाइदानींत्वयारूप्यप्र

त्यक्षदृष्टांतेनसर्वजगत्प्रत्यक्षस्याप्यप्रामा(ण्यमुच्यतेतत्र)ण्यंसिषाधयिषितंतत्रनेदंरजतमित्येकस्यबाधकस्यप्रत्यक्षस्याप्रामाण्येइदंरजतमितिप्रत्यक्षस्याप्रामाण्यंनसिद्ध्यति । तस्यबाधकप्रमाणकत्वात् । तथाचदृष्टांताभावान्नप्रत्यक्षमात्रस्याऽप्रामाण्यंवक्तुंयुक्तमित्यर्थः । अत्ररूप्यप्रत्यक्षाप्रामाण्यंमूलं सर्वजगत्प्रत्यक्षाप्रामाण्यंवृद्धिरितिविवेकः । मूलसंरक्षणार्थंरूप्यादिबाधकप्रत्यक्षस्यप्रमाणत्वेंगीकार्येघटादिसत्ताग्राहकस्यापिप्रामाण्यंस्यादित्याह ॥ तथाचेति ॥ नेदंरूप्यमितिप्रत्यक्षस्यप्रामाण्येसिद्धेसतीत्यर्थः ॥ तत्तुल्येति ॥ नेदंरूप्यमितिप्रत्यक्षतुल्ययोगक्षेममित्यर्थः ॥ सौषुप्तिकानंदानुभवस्येति ॥ तद्रूपसाक्षिप्रत्यक्षस्येत्यर्थः । सु

तथाचतत्तुल्ययोगक्षेमंसन्घटइत्यादिप्रत्यक्षंकथंनप्रमाणं । किंचसौषुप्तिकानंदानुभवस्याप्रामाण्येकथमात्मनआनंदरूपतातात्विकी । आनंदश्रुतेरनुभूतातात्विकानंदानुवादित्वोपपत्तेः ।किंच "स्मृतिः प्रत्यक्ष" मित्यादिश्रुत्या "प्रत्यक्षमनुमानंचशास्त्रंचविविधागमा" इतिमनुस्मृत्याचसिद्धंतत्प्रामाण्यं ।

खमस्वाप्समित्युत्तरकालीनपरामर्शबलेनआत्मनआनंदरूपत्वंसाक्षिणासुषुप्तौतात्विकमेवानुभूयतइतिस्वीकृतं साक्षिप्रत्यक्षस्यवाप्रामाण्येकथमानंदरूपतातात्विकीस्यात् प्रमाणाभावादित्यर्थः । ननुसौषुप्तिकानंदानुभवस्याप्रामाण्येपिआत्मनआनंदरूपता "विज्ञानमानंदंब्रह्मे" त्यादिश्रुत्यासेत्स्यतीत्यतआह ॥ आनंदेति ॥ अनुभूतेति ॥ अप्रमाणभूतसाक्षिसिद्धेत्यर्थः । तत्प्रामाण्यं प्रत्यक्षप्रामाण्यं । ननुनास्माकंश्रुतिस्मृतिविरोधः श्रुतौतत्त्वावेदकप्रामाण्यस्यप्रत्यक्षेत्वतत्त्वावेदकप्रामाण्यस्यचांगीकारादि

त्यतआह ॥ नचेति ॥ कुतोनयुक्तमितिचेत् सकृत्प्रयुक्तशब्दस्यार्थद्वयकल्पनायाबलवत्साधकाधीनत्वात् । प्रत्यक्षेत्वतत्वावेदकप्रामाण्यसाधकानांभाविबाधकशंकादिरूपाणांबाधकानांपरिहृतत्वादित्याशयः ॥ ७ ॥ प्रत्यक्षस्यभाविबाधकशंकाभंगविवरणं ॥ १७ ॥ पूर्वंप्रत्यक्षमप्रमाणमेवउतप्रमाणमपिकालत्रयाबाध्यत्वरूपसत्त्वग्रहाक्षममितिद्वौविकल्पावुक्तौ तत्राद्यस्त्रेधाविकल्प्यनिराकृतः। संप्रतिद्वितीयमनूद्यनिराकरोति ॥ नापीति ॥ प्रत्यक्षस्यवर्तमानमात्रग्राहित्वात्रसग्रहणादौचक्षुषइवत्रि

नचसकृत्प्रयुक्तस्यप्रमाणशब्दस्यश्रुतौतत्वावेदकत्वमर्थः प्रत्यक्षेऽतत्वावेदकत्वमितियुक्तं ॥७॥ इतिप्रत्यक्षस्यभाविबाधकशंकाभंगः ॥ १७॥ नापिप्रत्यक्षंकालत्रयाबाध्यत्वग्रहाक्षममितिद्वितीयः तद्धिनकालत्रयेपिसत्वं मन्मतेप्यनित्यप्रपंचेतदभावात् किंतुकालत्रयवृत्तियदसत्वंतदभावः सचकदाचित्सत्वेगृहीतेपिगृहीतएवेतिप्रतिपन्नोपाधौसत्वग्राहिणाप्रत्यक्षेणतदुपाधौत्रैकालिकनिषेधप्रतियोगित्वरूपामिथ्यात्वाभावासिद्धिः ।

स्वकालेह्यस्तितांगृह्णन्साक्षात्कारास्त्रिकालगं। प्रतिषेधंनिरुंधानोगृह्णात्येवात्यबाध्यतां ।

कालाबाध्यत्वरूपसत्यताग्रहणेऽक्षमत्वादित्यर्थः ॥ तद्धीति ॥ अबाध्यत्वरूपंसत्यत्वमित्यर्थः। सत्त्वं विद्यमानत्वं । तदभावात् कालत्रयेपिसत्त्वरूपाबाध्यत्वाभावादित्यर्थः ॥ कदाचित्सत्त्वइति ॥ वर्तमानकालीनेसत्त्वइत्यर्थः ॥ स्वकालइति ॥ ननु कथमत्रविरोधः नहिवर्तमानकालीनंसत्त्वंकालत्रयवृत्तिसत्ताप्रतिषेधाभावरूपमितिचेत्उच्यते । अनुमानग्राह्यंयत्कालत्रयवृत्ति

सत्त्वप्रतिषेधरूपमिथ्यात्वंतदभावव्याप्यभूतैककालीनसत्त्वावगाहित्वेनविरोधोत्राभिप्रेतइत्याहुः । तन्न । वह्निरनुष्णइत्यत्रापि कालत्रयेऔष्ण्याभावस्यसाध्यत्वात्प्रत्यक्षेणचवर्तमानकालएवऔष्ण्यग्रहणात्त्रैकालिकानौष्ण्याभावव्याप्यभूतैककालीनौष्ण्यग्रहणात्साक्षात्साध्याभावावगाहित्वेनबाधकत्वंसर्वसंमतंनस्यादिति । गुरुचरणास्तुप्रतिपन्नोपाधौत्रैकालिकसत्तानिषेधइत्यत्रदेशकालयोरपिननिषेध्यकोटौप्रवेशः किंत्वधिकरणकोटावेव तथाचसर्वदेशेकालत्रयेचयासत्तातत्प्रतिषेधोविवक्षित स्तथाचवर्तमानकालेस्तितांसत्तांगृह्णन्साक्षात्कारःकालत्रयेसत्ताप्रतिषेधमात्ररूपबाध्यत्वंनिरुंधानोऽत्यबाध्यतांगृह्णात्येव । तथाचसाक्षाद्ग्राह्याभा

वेदेपिहिविषयस्याबाध्यत्वेज्ञानप्रामाण्यमेवतंत्रं नतुशब्दत्वंवावर्तमानकालाद्य

नवच्छेदेनस्वविषयसत्वग्राहित्वंवासर्वकालादिसंबंधित्वेनस्वविषयसत्वग्राहि

त्वंवातंत्रं । उक्तप्रकारत्रययुक्तानासवाक्याविषयस्यात्यंताबाध्यत्वापातात् ।

वावगाहित्वेनैवविरोधइति । यथोक्तंभक्तिपादीयसुधायां "तत्सत्ताप्रतिषेधमात्ररूपबाधस्यतत्सत्ताग्राहिणाप्रत्यक्षेणविरोधावश्यंभावादि" ति । एतच्चतट्टिप्पण्यांगुरुचरणैर्निपुणतरमुपपादितमनुसंधेयं । किंचप्रत्यक्षंस्वविषयस्यवास्तवाबाध्यत्वग्राहिप्रमाणत्वात्वेदवत् । नचवेदेशब्दत्वादिकमेवस्वविषयाबाध्यत्वेप्रयोजकं नतुतज्जन्यज्ञानप्रामाण्यमितिवाच्यं । मद्वाक्यविषयःसर्वकालसंबंधीभाविबाधकशून्यश्चेत्यनाप्तवाक्येव्यभिचारेणशब्दत्वाद्युपाधेःसमव्याप्यभावात् । ततश्चज्ञानप्रामाण्यमेवविषयाबाध्यत्वेतंत्रमित्यंगीकार्यमित्याह ॥ वेदेपीति ॥ उक्तानुमानदृष्टांतभूतेवेदेपीत्यर्थः । उक्तप्रकारयुक्तानाप्तवाक्येत्येवपाठः । उक्त

प्रकारत्रययुक्तेतिपाठेशब्दत्वस्यसिद्धत्वात्तदनभिप्रेतमितिमंतव्यं । ततःकिमित्यतआह ॥ तच्चेति ॥ ननुज्ञानग्राहकेणसाक्षिणाप्रामाण्यस्यग्राह्यत्वंकुतइत्यतआह ॥ प्रामाण्यस्येति ॥ स्वतस्त्वादिति ॥ ज्ञानग्राहकग्राह्यत्वस्यैवस्वतस्त्वादित्यर्थः । ननुघटादिज्ञानेकश्चिद्दोषोबाधोवाभविष्यतीतिनविषयाबाध्यत्वगर्भंप्रामाण्यमित्यतआह ॥ नचेति ॥ कालतोमर्यादेत्यन्वयः । मर्यादान्यवच्छेदःतात्कालिकत्वमितियावत् । श्रुतिप्रत्यक्षयोःसत्यत्वग्रहणेप्यवांतरवैषम्यमस्तीत्याह ॥ इयांस्त्विति ॥ वर्त

तच्चतत्त्वावेदनरूपंप्रामाण्यंश्रौतज्ञानस्येवाक्षजज्ञानस्याऽपिज्ञानग्राहिणासाक्षिणागृह्यते प्रामाण्यस्यस्वतस्त्वात् । नचरूप्यादिज्ञानेष्विवबाधोवादोषोवानिश्चितः येनतदपोद्येत । तदुक्तं "यदिस्वतस्त्वंप्रामाण्येविश्वसत्ताकथंनते । प्रामाण्यस्यचमर्यादाकालतोव्याहताभवेदि"ति । इयांस्तुभेदः "तत्सत्य" मित्यादिश्रुत्याब्रह्मणोवर्तमा(नकालाद्य)नादिकालाद्यनवच्छेदेनसत्तागृहीतेतितत्रसातदनवच्छिन्ना प्रत्यक्षेणतुघटादेस्तदवच्छिन्नासागृहीतेतितत्रसातदवच्छिन्नेति ।

मानेति ॥ "तत्सत्य" मित्यादिश्रुतौवर्तमानकालोपस्थापकपदाभावादितिभावः । तत्र ब्रह्मणि । सा सत्ता तदनवच्छिन्ना वर्तमानकालानवच्छिन्ना ॥ प्रत्यक्षेणेति ॥ प्रत्यक्षज्ञानेवर्तमानकालस्यावश्यंविषयताप्रतीयते । इदमिदानीमितिहिप्रत्यक्षानुभवः । अतएव "कालःषडिंद्रियवेद्य" इतिप्रवादइत्यर्थः । तत्र घटादौ सा सत्ता तदवच्छिन्ना वर्तमानकालावच्छिन्ना । प्रामा

ण्यप्रयुक्ताऽबाध्यत्वंवेदाक्षोभयसाधारणमित्याह ॥ यद्देशेति ॥ उभयेति ॥ वेदप्रत्यक्षोभयेत्यर्थः ॥ नित्यत्वादीति ॥ सर्वकालावच्छिन्नसत्तासंबंधरूपनित्यत्वाद्यसिद्धावपीत्यर्थः ॥ त्रैकालिकेति ॥ तद्व्याप्यावगाहित्वइतिकेचित् । उक्तरीत्याकालस्यअधिकरणकोटावेवप्रवेशेननिषेध्यकोटावप्रवेशात्सत्ताग्राहित्वेनकालत्रयेयस्सत्यताप्रतिषेधस्तदप्रतियोगित्वरूपाबाध्यत्वग्राहित्वंसाक्षादस्त्येवेतिगुरुचरणाः । ननुयद्देशकालप्रकारावच्छेदेनयत्रयस्ययेनसत्तागृहीतातद्देशकालप्रकारावच्छेदेनतत्रतस्यतेनस

यद्देशकालप्रकारा(द्य)वच्छेदेनतुयस्ययेनसत्तागृहीतातदवच्छेदेनतस्याबाध्यत्वंप्रामाण्यप्रयुक्तंउभयसाधारणमितिप्रमाणेनप्रत्यक्षेणनित्यत्वाद्यसिद्धावपिस्वोपाधौत्रैकालिकनिषेधाप्रतियोगित्वरूपमात्यंतिकाबाध्यत्वंसिध्यत्येव । कालांतरादिस्थमपिहिबाधकंकिंयत्कालाद्यवच्छेदेनानेनस्वार्थोगृहीतस्तदवच्छेदेनैवतन्निषेधति अन्यावच्छेदेनवा आद्येकथमस्यप्रामाण्यं । अंत्येत्वानित्यत्वादिकमेवस्यान्नतुमिथ्यात्वं । किंचानागतकालग्राहीसाक्षीस्वविषयस्यगगनादेःसाक्षात्स्वाविषयस्यघटादेरपिनिर्दोषतद्धीप्रामाण्यग्रहणद्वाराभाविबाधाभावंगृह्णात्येव ।

त्वसिद्धावपिनत्रैकालिकनिषेधाप्रतियोगित्वसिद्धिः । "नेहनाने" तिभाविबाधबाधितत्वादित्यतआह ॥ कालांतरेति ॥ अन्येति ॥ यत्कालाद्यवच्छेदेनतेनस्वार्थोगृहीतस्तत्कालभिन्नकालावच्छेदेनतन्निषेधतीत्यर्थः ॥ आद्यइति ॥ अनेनबाधकप्रमाणेनरूप्यज्ञानवत्यस्मिन्कालेयत्रार्थोगृहीतस्तस्मिन्नेवकालेतत्रार्थापहारादित्यर्थः ॥ अंत्यइति ॥ यस्मिन्कालादौयोऽर्थोगृहीतः

पूर्वज्ञानेनतस्मिन्नेवकालादौबाधकज्ञानेनसोऽर्थोऽप्रतिषिद्धएव । अन्यदैवतु निषिद्धइतिअनित्यत्वमेवस्यादित्यर्थः । कथमित्यत आह ॥ नहीति ॥ अन्यथेति ॥ वर्तमानमात्रग्राहित्वइत्यर्थः । प्रत्यक्षस्यत्रिकालाबाध्यत्वरूपपारमार्थिकसत्त्वग्राहित्वाभावे नाप्रामाण्येघटादेःप्रातिभासिकवैधर्म्यरूपव्यावहारिकत्वंनसिद्ध्येत् । नचार्थक्रियाकारित्वेनतद्वैधर्म्यसिद्धिरितिवाच्यं । तस्यैव ममतात्विकत्वसाधकत्वात् । तथाचप्रत्यक्षस्यत्रिकालाबाध्यत्वरूपतात्विकसत्ताग्राहित्वंसिद्ध्यतीत्याह ॥ किंचेति ॥ येन विशे

नहिविषयाबाधमनंतर्भाव्यप्रामाण्यग्रहणंनाम । त्वदुक्तव्यंचपरेणैवप्रत्यक्षस्यवर्तमानमात्रग्राहित्वं अन्यथारूप्यादेःप्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वरूपंमिथ्यात्वंप्रत्यक्षंनस्यात् । किंच "प्रातिभासिकवैधर्म्यंतवयेनप्रसिध्यति । घटादेःपरमार्थत्वंममतेनैवसेत्स्यति" । अस्तिहित्वन्मतेपिघटादेर्व्यावहारिकसत्त्वायतज्ज्ञानेरूप्यादिधीतोविशेषः । तथाचतेनैवविशेषेणतात्विकत्वसिद्धिः । किंच "यद्यऽक्षसिद्धंविश्वस्यसत्यत्वंनैवतात्विकं । तर्ह्यक्षसिद्धंरूप्यादिमिथ्यात्वंतात्विकंकथं" । नहिघटस्सन्रूप्यंमिथ्येतिप्रत्यक्षयोर्मात्रयापिविशेषोनुभूयते ।

षेण वैधर्म्यंव्यावहारिकत्वं कारिकार्थमाह ॥ अस्तिहीति ॥ विशेषः अर्थक्रियाकारित्वरूपः । तात्विकं त्रिकालाबाध्यं ॥ तर्हीति ॥ तथाचतदपितात्विकंनस्यादित्यर्थः । कथमिदमापादनमित्यतस्तयोरविशेषादित्याह ॥ नहिघटइति ॥ दोषाभावादिनिश्चयस्यरूप्यमिथ्यात्वप्रत्यक्षइवविश्वसत्यत्वप्रत्यक्षेप्यविशेषादित्यर्थः । ननुअक्षसिद्धत्वाविशेषाद्रूप्यमिथ्यात्वंतात्विकंनस्या

दित्यत्रेष्टापत्तिः यतःरूप्यधर्मोमिथ्यात्वमपिमिथ्यैव । धर्मिणएवमिथ्यात्वेधर्मस्यापिमिथ्यात्वात् । नहिवंध्यासुतस्यश्यामत्वाभावेगौरत्वंसेत्स्यतीत्यतआह ॥ रूप्येति ॥ कालांतरबाध्यत्वे मिथ्यात्वइत्यर्थः ॥ तात्विकंस्यादिति ॥ मिथ्याभूतमिथ्यात्वकत्वाद्रूप्यंसत्यंस्यादित्यर्थः । तथाचपरस्परात्यंताभावरूपयोरेवान्यतरनिषेधेऽन्यतरस्यसत्यत्वं गौरश्यामरूपयोस्तुनपरस्परविरहरूपत्वं अतोनैकाभावेऽपरस्यसत्यत्वमितिभावः । किंचप्रत्यक्षस्यातत्वावेदकत्वंतावदंगीकृतं । तत्रातत्त्वंनामान्यस्यान्यात्म

रूप्यमिथ्यात्वस्यकालांतरबाध्यत्वेचरूप्यंतात्विकंस्यात् । किंच " पारमार्थिकसत्यत्वंनचेत्प्रत्यक्षगोचरः । तन्निषेधश्रुतीनांस्यादप्रसक्तनिषेधता " । किंच " अतत्वंतात्विकत्वेनप्रपंचंनावभासयेत् । अक्षंयदितदातस्याऽतत्वावेदकताकथं " । नहिव्यावहारिकंतथैवगृह्णत्अतत्वावेदकंभवति किंतुपारमार्थिकत्वेन ।

त्वं तथाचवस्तुतोव्यावहारिकस्यप्रपंचस्यत्रिकालाबाध्यत्वरूपपारमार्थिकत्वरूपंयदन्यात्मत्वाख्यमतत्वं तदावेदकत्वेखलुप्रत्यक्षस्यातत्वावेदकत्वंसिद्ध्यति । एवंचत्रिकालाबाध्यत्वरूपपारमार्थिकसत्त्वावगाहितायाआवश्यकत्वेननवर्तमानमात्रग्राहित्वनियमइत्याह ॥ किंचेति ॥ अतत्वं तत्वंपारमार्थिकंतद्भिन्नमतत्वंव्यावहारिकं । इदमेवव्यावहारिकत्वंजगतस्तत्त्वंवास्तवंरूपंतन्मतइत्यर्थः । तथैव व्यावहारिकतयैव । यद्यथास्तितत्तथैवगृह्णतस्तत्वावेदकत्वमेवस्यात् । त्वदभिमतमतत्वावेदकत्वंनसिद्ध्येदित्य

र्थः । त्रिकालाबाध्यत्वरूपपारमार्थिकसत्त्वग्राहित्वमनुभवसिद्धंचेत्याह ॥ अनुभूयतेचेति ॥ प्रत्यक्षबाधमुपसंहरति ॥ तस्मादिति ॥ ७ ॥ प्रत्यक्षस्यपारमार्थिकसत्त्वग्राहित्वविवरणं ॥ १८ ॥ प्रत्यक्षबाधमभिधायानुमानबाधमाह ॥ अनुमानेति ॥ ब्रह्मप्रमान्येनेत्यादि ॥ ब्रह्मान्यदित्येवोक्तेऽसतोपिपक्षकोटिनिवेशप्राप्त्यातत्रसत्त्वसाधनेबाधस्स्यात्तद्वारणायअसत्त्वानधिकरणत्वेसतीत्युक्तं । तर्हिप्रातिभासिकस्यापिपक्षकोटिनिवेशापत्त्याबाधवारणायाबाध्यत्वेसतीत्युक्तं । मायिमतेप्रपंचस्या

अनुभूयतेचजगतिलौकिकानांपारमार्थिकत्वधीः । तस्मात्प्रत्यक्षस्यप्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वाभावग्राहित्वात्तद्बाधितादृश्यत्वादयः ॥ ७ ॥ इतिप्रत्यक्षस्यपारमार्थिकसत्वग्राहित्वं ॥ १८ ॥ अनुमानबाधिताश्चदृश्यत्वादयः तथाहि ब्रह्मप्रमान्येनवा वेदांततात्पर्यप्रमाजन्यज्ञानान्येनवा

बाध्यत्वाभावेनाश्रयासिद्धिवारणायब्रह्मप्रमान्येनेत्युक्तं प्रपंचस्यमायिमतेब्रह्मप्रमान्येनाबाध्यत्वान्नपक्षालाभः । प्रातिभासिकस्यतुब्रह्मप्रमान्येनबाध्यत्वात्तद्व्यावृत्तिः । तत्त्ववादिमतेपक्षलाभायनञ्द्वयगर्भता । ब्रह्मवृत्तिव्याप्यमितिमतेनेदंविशेषणं । ब्रह्मवृत्तिव्याप्यंनेतिमतेब्रह्मप्रमेत्येववक्तुमशक्यमतआह ॥ वेदांतेति ॥ प्रपंचस्यवेदांततात्पर्यप्रमाजन्यंयज्ज्ञानंचरमवृत्तिरूपंतदन्येनाबाध्यत्वान्नमायिमतेपक्षालाभः । प्रातिभासिकस्यतुवेदांततात्पर्यप्रमाजन्यज्ञानान्यज्ञानबाध्यत्वात्तद्व्यावृत्तिः । तत्त्ववादि

मतेपक्षलाभायनञ्द्वयगर्भत्वं । शाब्दप्रमांप्रतितात्पर्यप्रमाहेतुरितिमतेनेदं । शाब्दप्रमांप्रतितात्पर्यप्रमानहेतुः अन्योन्याश्रयात् मानांतरागम्यस्यवाक्यार्थस्यवाक्या(त्प्रतीतौस)दुपस्थितौसत्यांतत्रवाक्यस्यतात्पर्यावधारणं तात्पर्यावधारणेचतेनवाक्यार्थप्रतीतिः तात्पर्यज्ञानस्यवाक्यार्थज्ञानेकारणत्वस्यपरेणोच्यमानत्वादित्येवमन्योन्याश्रयान्नशब्दार्थसंसर्गरूपवाक्यार्थप्रमांप्रतितात्पर्यप्रमाहेतुरितिमतेनाह ॥ मोक्षहेत्विति ॥ प्रपंचस्यमोक्षहेतुभूतंयज्ज्ञानंचरमवृत्तिरूपंतदन्येनाबाध्यत्वान्नमायिमतेपक्षालाभः । तत्ववादिमतेपक्षलाभायनञ्द्वयगर्भता । गौरवान्नैवंपक्षनिर्देशइत्याशयेनाह ॥ विमतंवेति ॥ सद्वापरमार्थसद्वेतिसाध्यद्वयं ।

**मोक्षहेतुज्ञानान्येनवा अबाध्यत्वेसतिअसत्वानधिकरणत्वेसतिब्रह्मान्यद्विमतंवा ।**

**सद्वा पारमा(र्थस)र्थिकसद्वा प्रातिभासिकत्वानधिकरणत्वेसत्यसत्वानधिकरणत्वात्**

तत्रप्रपंचेव्यावहारिकसत्त्वंनामसत्त्वेनप्रतीतिमात्रं वस्तुतोऽर्थगतंसत्त्वंनास्ति । अतएवप्रतिपन्नोपाधौस्वरूपेणैवत्रैकालिकनिषेधप्रतियोगित्वमंगीकुर्वंति । तन्मतानुसारेणसदित्येवसाध्यनिर्देशः । अर्थगतंमायिकंसत्त्वमस्ति । अतएवप्रतिपन्नोपाधौस्वरूपेणैवसत्ताप्रतिषेधस्यकर्तुमशक्यत्वात्पारमार्थिकत्वाकारेणैवनिषेधमंगीकुर्वंति । तन्मतेसदित्येवसाध्यनिर्देशेसिद्धसाधनतास्यादतः परमार्थसद्वेत्युक्तं । तेनपारमार्थिकसत्त्वनिषेधांगीकारात्परमार्थसद्वेतिसाधितमितिभावः ॥ प्रातिभासिकत्वेति ॥ अनधिकरणत्वादित्येवोक्तेसत्त्वादिधर्मानधिकरणेऽसतिव्यभिचारःस्यादतःअसत्त्वानधिकरणत्वादित्युक्तं । तावत्युक्तेप्रातिभासिकेव्यभि

चारःस्यादतःसत्यंतविशेषणं । असतिव्यभिचारवारणायविशेष्यभागः ॥ अनिषेध्यत्वेनेति ॥ पुरोवृत्तिनरंगंरजततयाजाना मीत्याद्यनुव्यवसायरूपप्रमांप्रतिव्यवसायद्वाराविषयेप्रातिभासिकेरजतेव्यभिचारवारणायसाक्षादित्युक्तं । नेदंरजतमितिबाधकज्ञानरूपप्रमांप्रतिनिषेध्यतयासाक्षाद्विषयेरजतेव्यभिचारपरिहारायअनिषेध्यत्वेनेतिविषयविशेषणं । इदंरजतमितिभ्रमंप्रति अनिषेध्यत्वेनसाक्षाद्विषयेरजतेव्यभिचारवारणायप्रमांप्रतीत्युक्तं ॥ अनिषेध्यत्वेनेति ॥ पदानांकृत्यंपूर्ववत् । इदंरजतमित्यस्मदादिभ्रमरूपंज्ञानंप्रतिअनिषेध्यत्वेनसाक्षादपरोक्षत्वंरजतेप्यस्तीतिव्यभिचारवारणायपूर्वंप्रमांप्रतीत्युक्तं । अत्रतत्स्थानेई

अनिषेध्यत्वेनप्रमांप्रतिसाक्षाद्विषयत्वात् अनिषेध्यत्वेनेश्वरं
प्रतिसाक्षादपरोक्षत्वात् सप्रकारकाबाध्यार्थक्रियाकारित्वात्
आरोपितमिथ्यात्वकत्वात् कल्पकरहितत्वाच्च आत्मवत् ।

श्वरंप्रतीत्युक्तं । रजतंचेश्वरंप्रतिनिषेध्यत्वेनैवसाक्षादपरोक्षमित्यदोषः । इदंच "अपरोक्षदृशोमिथ्यादर्शनंनक्वचिद्भवेत् । सर्वापरोक्षविद्विष्णुर्विश्वदृक्तन्नतन्मृषे" तिप्रमाणोक्तमनुमानं । असत्यार्थक्रियाकारित्वस्यैंद्रजालिकेपिसत्त्वाद्व्यभिचारवारणायाबाध्येत्युक्तं । ऐंद्रजालिकार्थक्रियातुबाध्येति । नन्वेवंस्वरूपासिद्धिः । प्रपंचगतार्थक्रियायानिष्प्रकारकब्रह्मज्ञानबाध्यत्वांगीकारादित्यतउक्तं ॥ सप्रकारकाबाध्येति ॥ तथाचनासिद्धिः । प्रपंचगतार्थक्रियायानिष्प्रकारकज्ञानबाध्यत्वेनसप्रकारकाबाध्य

त्वादितिभावः । रूप्यादौव्यभिचारवारणायआरोपितेत्युक्तं । प्रातिभासिकस्येत्यादेरुक्तरीत्यार्थःस्पष्टः । वैकल्पिकं वाशब्दोपेतं ॥ एतद्विशेषणेति ॥ ब्रह्मप्रमान्येनेत्यादिविशेषणेत्यर्थः । स्वबाधकाभिमतबाध्यदोषजन्यज्ञानविषयत्वेनस्वबाधकाभिमताबाध्यबाधविषयत्वेनपरमतेपर्यवसानेनपक्षलाभः । अस्मन्मतेपक्षलाभायनञ्द्वयगर्भत्वं । स्वबाधकस्यैवाभावेनतदबाध्यदोषजन्यज्ञानविषयत्वंतदभिमताबाध्यबाधविषयत्वंचनास्ति अतोनास्माकंपक्षालाभइतिज्ञेयं । प्रातिभासिकंचैतेनपक्षाद्व्यावर्तितं

प्रातिभासिकस्य(रूप्यादेः)बाधकंहिज्ञानंब्रह्मप्रमान्यत् वेदांततात्पर्यप्रमाजन्यज्ञानान्यत्मोक्षहेतुज्ञानान्यच्चेतितस्यापक्षत्वायपक्षेसतीत्यंतंवैकल्पिकमाद्यंविशेषणत्रयं। तत्रापिब्रह्मवृत्तिव्याप्यमितिमतेनाऽऽद्यंविशेषणं ब्रह्मवृत्तिव्याप्यमपिनेतिमतेनतुद्वितीयतृतीये। तत्रापिशाब्दप्रमांप्रतितात्पर्यप्रमाहेतुरितिमतेनद्वितीयं। अन्योन्याश्रयान्नहेतुरितिमतेनतृतीयं । यद्वा एतद्विशेषणस्थानेस्वबाधकाभिमताऽबाध्यदोषजन्यज्ञानाऽविषयत्वेसतीतिवास्वबाधकाभिमताबाध्यबाधाविषयत्वेसतीतिवासमानाधिकरणकर्मप्रागभावसमानकालीनज्ञानाबाध्यत्वेसतीतिवाविशेषणंदेयं ।

प्रातिभासिकरजतविषयकज्ञानहेतुकाचादिदोषस्यरजतबाधकत्वेनाभिमतंयन्नेदंरजतमितिज्ञानंतदबाध्यत्वेनस्वबाधकाभिमताबाध्यदोषजन्यज्ञानविषयत्वस्यैवसत्त्वात् । तथाप्रातिभासिकविषयकोयोबाधस्तस्यप्रातिभासिकबाधकत्वेनाभिमतेनस्वेनैवबाध्यत्वादितिध्येयं ॥ समानाधिकरणेति ॥ ज्ञानेनसमानाधिकरणेत्यर्थः। ज्ञानेनाबाध्यत्वेसतीत्येवोक्तेमायिमतेपक्षालाभः अतः

कर्मप्रागभावसमानकालीनेत्युक्तं । जगद्बाधकंचज्ञानंनकर्मप्रागभावसमानकालीनं साक्षात्कारानंतरं "क्षीयंतेचास्यकर्माणितस्मिन्दृष्टेपरावर" इतिवचनात् कर्मणामनुदयेनतदाकर्मप्रागभावाभावात् अतःकर्मप्रागभावसमानकालीनंयदयंघटइ(त्यादिज्ञा)तिज्ञानंतद्बाध्यत्वमस्तीतिनपक्षालाभः । नन्वथापिपक्षालाभः यज्ञदत्तस्यजगद्बाधकज्ञानोत्पत्तिकालेदेवदत्तकर्मप्रागभावसत्त्वेनप्रपंचस्यदेवदत्तकर्मप्रागभावसमानकालीनयज्ञदत्तज्ञानेनबाध्यत्वात् । अतःसमानाधिकरणेतिकर्मप्रागभावविशेषणं । तथाचबाधकज्ञानाधिकरणकोयःकर्मप्रागभावोयज्ञदत्तीयएव तत्समानकालीनंयज्ज्ञानंअयंघटइतिज्ञानं तेनाबाध्यत्वमस्तीत्यर्थः । प्रा

प्रातिभासिकविषयकज्ञानहेतुर्दोषःतद्बाधश्चनप्रातिभासिकबाधकबाध्यौ । तथाचरमसाक्षात्कारानंतरंसमानाधिकरणकर्मांतरानुदय(वत्शु)इवशुक्तिसाक्षात्कारानंतरंतदनुदयाभावात् प्रातिभासिकंसमानाधिकरणकर्मप्रागभावसमानकालीनज्ञानबाध्यमितितद्व्यवच्छेदः । व्यावहारिकसत्वंसत्वेनव्यवहारमात्रमितिमतानुसारेणाद्यंसाध्यं ।

तिभासिकंचानेनपक्षाद्व्यावर्तितं । शुक्तिसाक्षात्कारानंतरमपिकर्मणामुदयेनप्रातिभासिकरजतबाधकस्यशुक्तिज्ञानस्यज्ञानसमानाधिकरणकर्मप्रागभावसमानकालीनत्वेनतादृशज्ञानेनाबाध्यत्वस्यप्रातिभासिकेऽभावादितिद्रष्टव्यं । स्वबाधकेत्यादिप्रकारत्रयेणपक्षनिर्देशेनप्रातिभासिकव्यावृत्तिर्जातेत्याह ॥ प्रातिभासिकेत्यादिना ॥ प्रातिभासिकेति ॥ प्रातिभासिकस्ययद्बाधकंतेनबाध्यौनभवतइत्यर्थः । सद्रूपेतिसाध्यनिर्देशकृत्यमाह ॥ व्यावहारिकेति ॥ द्वितीयसाध्येविशेषणवैयर्थ्यंपरिहरति ॥

अर्थगतमिति॥मायिकं व्यावहारिकं । ननुवादिनस्तवमतेपरमार्थसद्वेतिद्वितीयसाध्येपरमार्थेतिविशेषणंव्यर्थं । नचापरमार्थसद्व्या(वर्तकत्वेनसार्थकमितिवाच्यं)वृत्त्यर्थंतदितिवाच्यं । भवन्मतेऽपरमार्थसतोऽभावेनव्यावर्त्याप्रसिद्धेः अतःसदित्युक्ते(पारमार्थिकसत्व)परमार्थसत्त्वस्यैवप्राप्तेस्तद्विशेषणंअनुमानप्रयोक्तुर्वादिनस्तवमतेव्यर्थमित्याशंक्यनिराकरोति ॥ नचेति ॥ सत्त्वेनेति ॥ सत्त्वेनधीमात्रमेव नतुवास्तवंसत्त्वमित्येवंरूपमपारमार्थिकसत्त्वंरूप्यादौमयाप्यंगीकृतमितितद्वारणायतत्सार्थकमितिभावः । तर्हिमायिमतेप्रवेशःस्यादित्यस्वरसादेवाह ॥ अनिर्वाच्येति ॥ नेदंविशेषणंव्यर्थं । प्रातिभासिकव्यावहारिकसत्त्वव्या

अर्थगतंमायिकंसत्वमितिमतानुसारेणद्वितीयं । नचवादिनःपारमार्थिकत्वविशेषणंव्यर्थंव्यावर्त्याप्रसिद्धेरितियुक्तं । सत्वेनधीमात्ररूपस्यापारमार्थिकसत्वस्यमन्मतेपिसत्वात् । अनिर्वाच्यलक्षणेसदसत्वानधिकरणत्वेसतीतिविशेषणव्यावर्त्यस्यसदसत्वस्यैवपरप्रसिद्धत्वमात्रेणव्यावर्त्यत्वोपपत्तेश्च ।

वृत्त्यर्थत्वात् । नचभवन्मतेव्यावर्त्याप्रसिद्धिरितिवाच्यं । परमतेतत्सद्भावेनपरप्रसिद्धिमात्रेणव्यावर्त्यत्वोपपत्तेः । परप्रसिद्धिमात्रेणस्वलक्षणस्थविशेषणकृत्यकथनमदृष्टमितिचेन्न । यथाहिसत्त्वानधिकरणत्वेसत्यसत्त्वानधिकरणत्वेसतिसदसत्त्वानधिकरणत्वमनिर्वचनीयत्वमित्यनिर्वाच्यत्वलक्षणेआद्यविशेषणद्वयव्यावर्त्यप्रसिद्धावपिसदसतोमायिमतेऽभावात्तृतीयंविशेषणंव्यर्थमित्याशंकायांस्याद्वादिमतेजगतःसप्तभंगित्वेनसदसत्त्वस्यतन्मतेप्रसिद्धत्वेनव्यावर्त्यत्वंपरैरुक्तंतद्वदित्यर्थः । परप्रसिद्धिमात्रेणेत्य

नधिकरणत्वेसतीत्येवोक्तेयत्किंचिदधिकरणेप्रपंचेऽनधिकरणत्वमसिद्धमित्यर्थः । विमतं पर्वतादिरूपं । सौरभेत्याद्यनुमानंधूम वह्न्योःसद्भावदशायामेव । अन्यथाचंदनप्रभवादिविशेषणस्यासिद्धिवारकत्वायोगादितिद्रष्टव्यं । विमतं तप्तायोगोलकं ॥ दृष्टांतेपीति ॥ आत्मनीत्यर्थः । आत्मनोपियत्किंचिदधिकरणत्वादितिभावः । तथाचानधिकरणत्वस्यकुत्राप्यप्रसिद्धत्वेनत दवच्छेदेनव्याप्तेर्गृहीतुमशक्यत्वेनाप्रसिद्धिवारकतयाव्याप्तिग्रहोपयुक्तत्वंप्रातिभासिकत्वविशेषणस्येत्यर्थः ॥ रूपादीनामिति ॥ "चक्षुःतैजसंरूपादिषुपंचसुमध्येरूपस्यैवाभिव्यंजकत्वादि" त्यत्रालोकादौरूपत्वादिव्यंजकत्वस्यापिसद्भावेनरूपस्यैवाभिव्यंजक

किंचानधिकरणत्वस्यदृष्टांतेप्यभावेनप्रातिभासिकत्वस्यचक्षुस्तैजसत्वानुमानेरूपादीनांम
ध्यइत्यस्येवव्याप्तिग्रहौपयिकत्वात् व्यभिचारवारकेपितदौपयिकत्वस्यैवतंत्रत्वान्नदोषः ।
यत्किंचिदनधिकरणत्वस्यप्रातीतिकेपिसत्वाद्व्यभिचारवारकमेवेदंविशेषणमितिकेचित् ।

त्वस्यकुत्राप्यप्रसिद्धत्वेनतदवच्छेदेनव्याप्तिग्रहासंभवात्तद्वारणायरूपादिषुपंचसुमध्यइत्युक्तं । एवंचयथातस्याप्रसिद्धिवारकत्वे नव्याप्तिग्रहोपयुक्तत्वंतद्वदित्यर्थः । ननुहेतौव्यभिचारवारकमेवविशेषणंदेयं नतुव्याप्तिग्रहोपयुक्तमितिनियमोस्तीतिचेत्तत्राह ॥ व्यभिचारेति ॥ तदौपयिकत्वस्य व्याप्तिग्रहोपयुक्तत्वस्य । हेतोर्व्यभिचारेतत्सत्त्वावच्छेदेनसाध्यनिरूपिताव्याप्तिर्गृहीतु मशक्येतितद्वारकेपिविशेषणेव्याप्तिग्रहोपयुक्तत्वमेवतंत्रमित्यर्थः ॥ यत्किंचिदिति ॥ वस्तुत्वादीत्यर्थः । केचिदित्यस्वरसो

न्नावनं । तद्बीजंतुअनधिकरणत्वहेतोःअधिकरणत्वसामान्याभावपरत्वांगीकारात्निषेधप्रतियोगित्वरूपधर्मविशेषाधिकरणेप्रातीतिकेसामान्याभावायोगेनव्यभिचारस्यैवाभावादिति ॥ व्यावहारिकेति ॥ पारमार्थिकसत्त्वाभावेप्युपपन्नत्वादितिभावः । नात्राऽप्रयोजकताशंक्या । प्रातिभासिकत्वानधिकरणत्वेसतिअसत्वानधिकरणत्वरूपहेतोरसत्प्रातिभासिकव्यावृत्तिरूपत्वात् तादृशहेतुंप्रतिप्रयोजकत्वेनपारमार्थिकसत्त्वस्यैवदृष्टांतेब्रह्मणिक्लृप्ततयाजगत्यपिपारमार्थिकसत्त्वाभावेहेतूच्छित्तेरेवबाधकत्वात् । ननुदृष्टांतेब्रह्मणितथाक्लृप्तत्वेपिप्रकृतेव्यावहारिकसत्त्वेनैवोक्तहेतोरुपपत्तिःकिंनस्यादितिचेत्तत्राह ॥ ब्रह्मणीति ॥ व्यावर्तक

नचव्यावहारिकसत्वेनाप्याद्यहेतोरुपपत्त्याऽप्रयोजकता। ब्रह्मण्यसत्प्रातिभा
सिकव्यावृत्तिरूपहेतुंप्रतिव्यावर्तकतयाप्रयोजकत्वेनक्लृप्तपरमार्थसत्वत्यागस्य
विश्वमिथ्यात्वसिद्धिंविनाऽयोगेनान्योन्याश्रयात् अन्यथातिप्रसंगात् ।

तया असत्प्रातिभासिकयोरतिप्रसंगभंजकतयेत्यर्थः ॥ त्यागस्येति ॥ व्यावहारिकसत्त्वमंगीकृत्येतिशेषः ॥ अन्योन्याश्रयादिति ॥ विश्वमिथ्यात्वेसिद्धेव्यावहारिकसत्त्वसिद्ध्यातेनैवहेतोरुपपत्त्या(अनुमानस्याप्रयो)हेतोरप्रयोजकत्वसिद्धिः । तत्सिद्धौ चानुमानस्यदुष्टत्वेनतद्बाधाभावाद्विश्वमिथ्यात्वसिद्धिरित्यन्योन्याश्रयादित्यर्थः ॥ अन्यथेति ॥ क्लृप्तपरित्यागेनाक्लृप्तकल्पने वह्निंप्रतिधूममप्रयोजकीकृत्यपर्वतत्वमेवप्रयोजक(मित्यंगी)मंगीकृत्यमहानसस्यापिवह्निमत्त्वंनस्यादित्यतिप्रसंगइत्यर्थः । ननुदृ

ष्टांतेब्रह्मण्यपिअसदादिव्यावृत्तेर्नसत्त्वंतंत्रत्वेनक्लृप्तं । किंतुज्ञानत्वाद्यपरपर्यायंयद्ब्रह्मत्वंतदेवेत्याशंक्यनिराकरोति ॥ नचेति ॥ अन्यथेति ॥ तद्व्यावृत्तिंप्रतितद्विरुद्धधर्मवत्त्वस्यप्रयोजकत्वमनंगीकृत्यासद्व्यावृत्तिंप्रतितदविरुद्धंज्ञानत्वादिकमेवप्रयोजकं नत द्विरुद्धंसत्त्वमित्यंगीकारइत्यर्थः ॥ सत्यज्ञानादीत्यादि ॥ सत्यज्ञानादिवाक्येपिज्ञानपदेनज्ञानत्वप्रतिपादनद्वारानृतव्यावृत्ते रपिसिद्धिप्रसंगेनसत्यपदंव्यर्थंस्यादित्यर्थः ॥ प्रपंचइति ॥ यद्यसद्व्यावृत्तौज्ञानत्वादिरूपंब्रह्मत्वमेवप्रयोजकमित्युच्यते तर्ह्यस

नचब्रह्मणिज्ञानत्वानंदत्वादिरूपब्रह्मत्वमेवतत्प्रयोजकं । अपृथिवीव्यावृत्तिंप्रतिपृथिवीत्वस्येवासद्व्यावृत्तिंप्रतितद्विरुद्धसत्वस्यैवप्रयोजकत्वेनक्लृप्तत्वात् अन्यथासत्यज्ञानादिवाक्येज्ञानपदेनैवानृतव्यावृत्तिसिद्धौसत्यपदवैयर्थ्यंस्यात् । प्रपंचेऽसत्प्रातीतिकव्यावृत्तौसत्यामपिब्रह्मत्वाभावाच्च । नचाद्वितीयेतत्वावेदकप्रमोक्तावसिद्धिः अतत्वावेदकप्रमोक्तौत्वप्रयोजकतेतिवाच्यं । प्रामाण्यातत्वावेदकत्वयोर्व्याहतत्वात् ।

द्व्यावृत्तिमतिप्रपंचेब्रह्मत्वाभावेनप्रयोज्यापेक्षयान्यूनवृत्तित्वान्नतत्प्रयोजकमित्यर्थः ॥ द्वितीयइति ॥ अनिषेध्यत्वेनप्रमांप्रति साक्षाद्विषयत्वादितिद्वितीयहेतावित्यर्थः । अत्रतत्वावेदकप्रमाविषयत्वंहेतुरतत्वावेदकप्रमाविषयत्वंवा । नाद्यः । ममासिद्धेरि त्याह ॥ तत्वेति ॥ नद्वितीयइत्याह ॥ अतत्वेति ॥ अप्रयोजकतेति ॥ अतत्वावेदकप्रमाविषयत्वस्यसत्त्वाभावेप्युपपत्ते रित्यर्थः ॥ व्याहतत्वादिति ॥ अर्थसत्त्वगर्भप्रामाण्यस्यार्थासत्त्वगर्भातत्वावेदकत्वेनात्यंतविरोधात्प्रामाण्यातत्वावेदकत्वयोः

सामानाधिकरण्यस्यव्याहतत्वेनविकल्पएवायुक्तइतिभावः ॥ प्रत्यक्षस्येति ॥ तथाचतत्वावेदकप्रमोक्तावपिनासिद्धिरितिभावः ॥ अनुमानादेश्चेति ॥ तत्वावेदकंयत्प्रमाणंविमतंसत्यंप्रमाणदृष्टत्वादित्यनुमानरूपंतद्विषयत्वस्यप्रपंचेसद्भावेनापिनासिद्धिः। नचानुमानमतत्वावेदकमितिवाच्यं । त्वयापिदृश्यत्वादेस्तत्त्वभूतमिथ्यात्वादौप्रमाणीकरणेनतस्यतत्त्वावेदकत्वांगीकारात्तज्जातीयास्मदनुमानविषयत्वेनापितत्वावेदकप्रमा(ण)विषयत्वंपक्षेनासिद्धमित्यर्थः । प्रमाणविषयत्व(सद्भा)भावेपिसत्त्वंमास्त्वित्यप्रयोजकताशंकापरिहारायाह ॥ विपक्षइति ॥ व्याघातमेवोपपादयति ॥ विषयबाधइति ॥ विषयासत्त्वइत्यर्थः । प्रामा

प्रत्यक्षस्यतत्वावेदकतोक्तेश्च । अनुमानादेश्चपरेणापिमिथ्यात्वादौप्रमाणीकरणात् । विपक्षेव्याघातात् । विषयबाधेप्रामाण्यायोगात्। नापितृतीयेऽसिद्धिः। त्वयापीशस्यजगत्कर्तृत्वशास्त्रयोनित्वादिनाकुलालपाणिन्यादिवदनिषेध्यत्वेनतद्द्रष्टृत्वोक्तेः । अन्यथेशस्यतत्पालनादौप्रवृत्तिर्नस्यात् ।

ण्यं प्रमाविषयत्वं । प्रपंचस्यसत्त्वाभावेविषयसत्त्वघटितप्रमाविषयत्वरूपहेतोरेवायोगादितिहेतूच्छित्तिर्बाधिकेतिभावः ॥ नापितृतीयइति ॥ अनिषेध्यत्वेनेश्वरंप्रतिसाक्षादपरोक्षत्वहेतावित्यर्थः ॥ असिद्धिरिति ॥ ईश्वरंप्रत्यपिनिषेध्यत्वेनैवविश्वस्यापरोक्षत्वादसिद्धिरित्यर्थः ॥ शास्त्रेति ॥ वेदकर्तृत्वेनेत्यर्थः । तद्द्रष्टृत्वोक्तेः स्वकृतजगच्छास्त्रद्रष्टृत्वोक्तेर्नासिद्धिरित्यर्थः ॥ अन्यथेति ॥ निषेध्यत्वे(नैवेश्व)नेश्वरंप्रत्यपरोक्षत्वइत्यर्थः । प्रातिभासिकत्वापत्त्येतिशेषः । तत्पालनादौ प्रातिभासिकजगत्पा

लनादौ । अप्रयोजकतांपरिहरति ॥ विपक्षइति ॥ अनिषेध्यत्वेनेश्वरज्ञानविषयस्यापिविश्वस्यसत्यत्वाभावेरूप्यवन्निषेध्यत्व प्राप्त्यानिषेध्यमेवप्रपंचमनिषेध्यत्वेनईश्वरोजानातीतिस्यात् । तथाचेश्वरस्यभ्रांतत्वंस्यादितिबाधकसद्भावान्नाप्रयोजकताशंक्ये त्यर्थः । अस्त्वीश्वरस्यभ्रांतिरित्यतआह ॥ साचेति ॥ "शोकंमोहंजरांमृत्युमत्येती" त्यादिश्रुतिविरुद्धेत्यर्थः ॥ चतुर्थइति ॥ सप्रकारकाबाध्यार्थक्रियाकारित्वादितिहेतावित्यर्थः । सप्रकारकाबाध्येतिपदस्यकृत्यमाह ॥ अर्थक्रियायाइति ॥ सत्यभूतार्थ क्रियाकारित्वंहेतुरुतासत्यभूतार्थक्रियाकारित्वं नाद्यइत्याह ॥ सत्यायाइति ॥ व्याप्तिपक्षधर्मतयोरिति ॥ यथायोग्यंसंबं

विपक्षेचेशस्यभ्रांतिःस्यात् साचश्रुत्यादिविरुद्धा । चतुर्थेऽर्थक्रियायाःसत्यायाः
पक्षेसपक्षेचपरंप्रत्यसिद्ध्याव्याप्तिपक्षधर्मतयोरयोगात् असत्यायाश्चैंद्रजालिकादौ
व्यभिचारात्सप्रकारकाबाध्यत्वेनसाविशेषिता । व्यभिचारस्त्वस्यानिरसिष्यते

धोनयथाक्रमं । सत्यभूतार्थक्रियायाःपक्षेऽसिद्ध्यापक्षधर्मतायास्सपक्षेब्रह्मण्यसिद्ध्याव्याप्तेश्चायोगादित्यर्थः । नद्वितीयइत्याह ॥ असत्यायाश्चेति ॥ सप्रकारकेति ॥ ऐंद्रजालिकार्थक्रियातुसप्रकारकेणइदानींतनबाधेनबाध्येतिनतत्रव्यभिचारइत्यर्थः । ननुसप्रकारकजाग्रद्बाधाबाध्यचरमधातूत्सर्गरूपार्थक्रियाकारित्वस्यमिथ्याभूतेस्वाप्नप्रियासंगमेसत्त्वेनव्यभिचारइत्यतआह ॥ व्यभिचारस्त्वस्येति ॥ नस्वाप्नप्रियासंगमस्यार्थक्रियाकारित्वं किंतुतज्ज्ञानस्य तच्चसत्यमेवेतिनिरसिष्यतइत्यर्थः । ननुदृष्टां

तेब्रह्मण्यर्थक्रियाकारित्वाभावात्साधनवैकल्यमित्यतआह ॥ **सत्यस्येति** ॥ साक्षिचैतन्यस्यब्रह्मरूपत्वादितिभावः ॥ साधकत्वादिति ॥ यथोक्तं "साधकत्वंसतस्तेनसाक्षिणासिद्धिमिच्छता । स्वीकृतंही" ति । "साधकत्वंतुसत्यस्यसाक्षिणोह्यावयोर्द्वयोः । सम्यक्संप्रतिपन्न" मितिच । नन्वविद्यावृत्तिप्रतिबिंबितचैतन्यस्यैवसाक्षित्वात्तस्यैवाज्ञानादिसाधकत्वमंगीकृतं । तस्यचमिथ्याभूतत्वान्नदृष्टांतत्वं । दृष्टांतस्तुशुद्धब्रह्मैव तत्रहेतोरेवाभावात्साधनवैकल्यंस्यादेवेत्यस्वरसादाह ॥ **असद्वेति** ॥ ननु सत्त्वरूपसाध्ययुक्तात्मनःसपक्षाद्धेतोर्व्यावृत्ततयाऽसाधारण्यदोषःस्यादित्यतआह ॥ **असाधारण्यस्येति** ॥ यथाभूर्नित्यागंधवत्त्वादित्यत्रनित्यव्यावृत्तगंधवत्त्वाद्भूःकिमनित्याउतानित्यव्यावृत्तगंधवत्त्वाद्भूः किंनित्येतिविरुद्धोभयपरामर्शोत्थापकतयासत्प्रतिपक्षत्वेनसांशयिकत्वेनवानुकूलतर्कादिरूपविशेषादर्शनदशायामेवासाधारण्यस्यदोषत्वंदृष्टं एवंप्रकृतेपिसत्यभूतब्रह्मव्यावृत्तार्थक्रियाकारित्वात्प्रपंचःकिंमिथ्याउतमिथ्याभूतरूप्यादिव्यावृत्तार्थक्रियाकारित्वात्प्रपंचःसत्यइत्येवंविरुद्धोभयपरामर्शोत्थापकतयासत्प्रतिपक्षत्वेनसांशयिकत्वेनवादोषत्वंवाच्यं । इदंचानुकूलतर्कादिरूपविशेषादर्शनदशायामेव । अत्रचमिथ्याभूतरूप्यादिव्यावृत्तार्थक्रियाकारित्वात्सत्यःप्रपंचइतिपरामर्शोऽनुकूलतर्काणांवक्ष्यमाणत्वेनविशेषदर्शनसद्भावान्नसत्प्रतिपक्षत्वेनसांशयिक

**सत्यस्यसाक्षिणोऽज्ञानादिसाधकत्वान्नदृष्टांतःसाधनहीनः । असद्वाव्यतिरेकदृष्टांतः । असाधारण्यस्यागृह्यमाणविशेषत्वावस्थायामेवदोषत्वात् । विपक्षेव्याघातः ।**

त्वेनवातस्यदोषत्वंसंभवतीत्यर्थः । यथोक्तंगंगेशेन "संशयःसत्प्रतिपक्षोवाऽसाधारण्यस्यदूषकतायांद्वारं सचेहविशेषदर्शनान्नास्ती" ति । अर्थक्रियाकारित्वेपिसत्यत्वंमास्त्वित्यप्रयोजकतायामाह ॥ विपक्षइति ॥ अर्थक्रियाकारित्वस्यसत्त्वप्रयोज्यत्वेन प्रयोज्यभूतार्थक्रियाकारित्वमंगीकृत्यतत्प्रयोजकीभूतसत्यत्वानंगीकारोविरुद्धइत्यर्थः । दृष्टांतेहेतुसाध्ययोर्व्याप्तेर्निर्णीतत्वान्नाप्रयोजकत्वशंकाकार्येत्याह ॥ ब्रह्मणीति ॥ हेतुत्वं सप्रकारकाबाध्यजगद्धेतुत्वाद्यर्थक्रियांप्रति अर्थक्रियाऽकारणंयदसदादितद्व्यावृत्तस्यपरमार्थसत्त्वस्यैवप्रयोजकत्वेनावधारणात्प्रपंचेतदभावेप्रयोज्यस्यार्थक्रियाकारित्वस्याप्यभावरूपविपक्षबाधकतर्केणहे

ब्रह्मणिहेतुत्वंप्रतिअकारणासदादिव्यावृत्तस्यपरमार्थसत्वस्यैवप्रयोजकत्वेनक्लृप्तत्वात् । नचपंचमेऽसिद्धिः । परमतेपिजगन्मिथ्यात्वस्यारोपितत्वात् । अत्रचहेत्वंतर्गतंमिथ्यात्वंसत्वाभावोभिप्रेतइतिनासत्यनैकांत्यं । नचषष्ठेऽसिद्धिः ।

तोर्व्याप्यत्वग्रहान्नाप्रयोजकत्वमित्यर्थः ॥ पंचमइति ॥ आरोपितमिथ्यात्वकत्वादितिपंचमहेतावित्यर्थः ॥ परमतइति ॥ मिथ्यात्वस्यसत्यत्वेऽद्वैतहानिप्रसंगात्सोपाधिकस्यनिरुपाधिकेनैक्यासंभवादारोपितत्वमेवतस्यवक्तव्यमित्यर्थः । मिथ्यात्वस्यसत्तानिषेधरूपत्वेनसत्यत्वेप्यभावद्वैतांगीकारादविरोधइत्येतत्तुपूर्वमेवदूषितमितिभावः । नन्वसतोनिर्धर्मकत्वेनतत्रमिथ्यात्वाख्याभावरूपधर्मस्याप्यारोपितत्वाद्व्यभिचारइत्यतआह ॥ अत्रचेति ॥ तथाचारोपितसत्त्वाभाववत्त्वादित्यर्थः । असतिचसत्त्वाभावोवास्तवएवेतिनव्यभिचारइतिभावः । षष्ठे कल्पकरहितत्वादितिहेतौ कल्पकंकिंचिन्मात्रं तदन्यद्वा । नाद्यइत्याह ॥

चिन्मात्रस्येति ॥ कल्पनोपयुक्तदेहेंद्रियाद्यभावादितिभावः । नद्वितीयइत्याह ॥ अन्यस्यचेति ॥ तथाचस्वेनैवस्वस्यकल्पितत्वंविरुद्धमित्यर्थः । नन्वसतःकेनाप्यकल्पितत्वेनकल्पकरहितत्वहेतोस्तत्रव्यभिचारइत्यतआह ॥ अत्रचेति ॥ तथाचसाध्यभूतंसत्वंनामाकल्पितत्वमेवविवक्षितं । अतोसतिसाध्यस्यापिसत्वान्नव्यभिचारइत्यर्थः ॥ विपक्षइति ॥ कल्पकरहितत्वेपिकल्पितत्वमेवास्त्वित्यप्रयोजकतायामित्यर्थः । व्याघातमेवाह ॥ कल्पकमिति ॥ हेतोरेवाऽभावान्नव्यभिचारइत्याशयेनाह ॥

चिन्मात्रस्याद्रष्टृत्वेनान्यस्यचकल्पितत्वेनाकल्पकत्वात् । अत्रचाकल्पितत्वस्यसाध्यत्वान्नासति व्यभिचारः । विपक्षेव्याघातः । कल्पकंविनाकल्पनाऽयोगात् । किंचविमतंनसद्विलक्षणं असद्विलक्षणत्वात् आत्मवत् । नचशुक्तिरूप्येव्यभिचारः।तस्यासद्विलक्षणत्वेनतद्विरुद्धसद्विलक्षणत्वायोगात् । विमतंनचैतन्याज्ञानकार्यं नचैतन्याज्ञानकार्यधीविषयोवा नचैतन्याज्ञानकार्यसत्ववद्वा चैतन्यज्ञानाबाध्यंवा चैतन्यज्ञानाबाध्यसत्ववद्वा तस्मिन्नपरोक्षेपिअनिषेध्यत्वेनसाक्षाद्वासमानत्वात्

तस्येति ॥ शुक्तिरूप्येऽसद्वैलक्षण्यमंगीकृत्यव्यभिचारदानायसद्वैलक्षण्यांगीकारेव्याघातःस्यात् । असद्वैलक्षण्येसत्वस्यैवप्राप्तेस्तद्वैलक्षण्यायोगात् । नचेष्टापत्तिरितिवाच्यं । तत्रतत्वस्यबाधितत्वात् । अतोव्यभिचारदानाययदिसद्वैलक्षण्यंतस्यांऽगीक्रियते । तर्ह्यऽसत्वस्यैवप्राप्त्यासद्विलक्षणत्वायोगेनहेतोरेवाभावान्नव्यभिचारइति "तुंदिलसुरतन्याय" इतिभावः ॥ विमतमित्यादि ॥ अर्थज्ञानात्मकोभयविधभ्रमांगीकारात्तद्विरोधित्वेनाद्यानुमानद्वयं ॥ तस्मिन्निति ॥ चैतन्यइत्यर्थः । नेदंरजतमि

तिज्ञानंप्रतिनिषेध्यत्वेनसाक्षाद्विषयेव्यवसायद्वाराअनुव्यवसायविषयेचरजतेव्यभिचारवारणार्थानिषेध्यत्वेनसाक्षादितिचविशेषणद्वयं । तस्मिन्नपरोक्षेपीतिस्वरूपसंकीर्तनं ॥ यदेवमिति ॥ यद्यस्मिन्नपरोक्षेपिअनिषेध्यत्वेनसाक्षाद्भासतेनतत्तदज्ञानकार्यादीतिसामान्यव्याप्तिरित्यर्थः । उक्तभानवान् । अनिषेध्यत्वेनसाक्षाद्भानवान् । समूहालंबनादावितिशेषः । ननुचैतन्यस्याऽपरोक्षत्वाभावात्तस्मिन्नपरोक्षेपीत्यस्यासिद्धिरित्यतआह ॥ चैतन्यंचेति ॥ आरोपाधिष्ठानतयेत्यर्थः । चैतन्यस्यसर्वप्रत्ययवेद्य

यदेवंतदेवं यथापटेऽपरोक्षेप्युक्तभानवान्घटोनपटाज्ञानकार्यादिः । चैतन्यंचाधिष्ठानतयासुखादिसाक्षित्वेनचेदानीमप्यपरोक्षमितिनासिद्धिः । शंखत्वादावऽपरोक्षेपिभासमानंपीतत्वादिकंनतदज्ञानकार्यं । किंतुश्वेतत्वाज्ञानकार्यादिकमितिनव्यभिचारः । अत्राप्यापरोक्ष्यस्याज्ञानविरोधित्वात्सतितस्मिन्नज्ञानांगीकारेव्याघातः । एवमुत्तरत्रापिविपक्षेबाधकमुन्नेयं । विमतंनात्मन्यध्यस्तं ।

त्वांगीकारेणायंघटइत्यादावधिष्ठानत्वेनप्रमितचैतन्यस्यैवनिर्देशादितिभावः । ननुशंखत्वेअपरोक्षेपिअनिषेध्यत्वेनपीतःशंखइत्यत्रसाक्षाद्भासमानंपीतत्वंशंखत्वाज्ञानकार्यंभवत्येवेतिपीतत्वेसामान्यव्याप्तेर्व्यभिचारइत्यतआह ॥ शंखत्वादाविति ॥ तदिति ॥ शंखत्वेत्यर्थः ॥ श्वेतत्वेति ॥ श्वेतत्वंचनापरोक्षतयाभासतइत्याशयः । अप्रयोजकतापरिहारायाह ॥ अत्रापी

ति ॥ आपरोक्ष्यस्य अधिष्ठानापरोक्ष्यस्य । आत्मनि शुद्धे ॥ तत्तत्वेति ॥ शुद्धात्मतत्वसाक्षात्कारवान्यईशःशबलःशुकादिजीवन्मुक्तश्च तयोर्याप्रवृत्तिःपालनभिक्षाटनशिष्यबोधनादिरूपा तद्विषयत्वादित्यर्थः । तत्र पटे । ननुशंखगतंयच्छंखत्वंतत्साक्षात्कारवत्प्रवृत्तिविषयमपिपैत्यंशंखेअध्यस्तमितिपैत्येव्यभिचारइत्यतआह ॥ शंखइति ॥ शंखतत्वेति ॥ श्वेतत्वेत्यर्थः । शंखतत्वंचनशंखत्वं किंतुश्वैत्यमेव अतोहेतोरेवा(भावा)नागमनान्नव्यभिचारइतिभावः । "नचमायाविनामायादृश्यते

तत्तत्वसाक्षात्कारवत्प्रवृत्तिविषयत्वात् यदेवं तदेवं यथापटसाक्षात्कारवत्प्रवृत्तिविषयोघटो नतत्राध्यस्तः । नचासिद्धिः । ईशजीवन्मुक्तयोरात्मसाक्षात्कारवतोरपिजगद्रक्षणभिक्षाटन शिष्यबोधनादौप्रवृत्तेः । शंखेध्यस्तमपिपीतत्वंनशंखतत्वसाक्षात्कारवत्प्रवृत्तिविषयइतिनव्य भिचारः । विमतंनेश्वरमायाकल्पितं तंप्रत्यपरोक्षत्वात् यदेवंतदेवं यथाचैत्रंप्रत्यपरोक्षोघटोनचैत्रमायाकल्पितः । विमतंनजीवकल्पितं तस्मिन्सुषुप्तेप्यवस्थितत्वात् आत्मवत् नचाऽसिद्धिः

विश्वमीश्वरः । सदापश्यतितेनेदंनमायेत्यवधार्यता" मितिप्रमाणोक्तानुमानमाह ॥ विमतमिति ॥ ननुजीवेसुप्तेअहमर्थपर्यंतंजगद्विलयांगीकारादसिद्धिरित्याशंक्यनिषेधति ॥ नचेति ॥ सुषुप्तौजगद्विलयांगीकारेपुनरुत्थानानंतरंपूर्वस्मिन्दिनेयंघटमहमद्राक्षंसएवायंघटइतिप्रत्यभिज्ञाविरोधात् । तदप्रामाण्येबौद्धोक्तक्षणिकत्वनिरासोपायाभावेनक्षणिकवादापातात् । अप्रामा

ण्यस्यबाधकैकोन्नेयत्वेनप्रत्यभिज्ञाप्रामाण्येबाधकाभावाच्चेत्याह ॥ प्रत्यभिज्ञानादित्यादिना ॥ यदिसुषुप्त्यवस्थायांजगद्विलयमंगीकृत्यासिद्धिःशंक्यते तर्ह्यस्यसुप्त्यनंतरंपुनरुद्बोधोनस्यात् । उद्बोधकानिष्टसंस्कारादेर्नाशादित्याह ॥ अदृष्टादेरपीति ॥ सामान्येनेति ॥ सामान्यतआत्मव्यतिरिक्तंकिंचिदनात्मभूतंसत्यमस्तीत्यत्रइत्यादीत्यनुमानानिद्रष्टव्यानीत्यन्वयः ॥ आत्मान्येति ॥ तथाचात्मान्यस्मिन्ननात्मनिकुत्रचिन्नास्तीतिप्राप्त्याआत्मान्यदनात्मभूतंकिंचित्सत्यभूतमितिहृदयं । ज्ञेयत्वादौ

प्रत्यभिज्ञानात् तस्यात्यंताप्रामाण्येचक्षणिकवादापातात् । बाधकाभा
वाच्च । अदृष्टादेरप्यभावेनपुनरुद्बोधायोगाच्च । सामान्येनानात्मसत्यत्वे
मिथ्यात्वंनात्मान्यसर्ववृत्ति मिथ्यामात्रवृत्तित्वात् शुक्तिरूप्यत्ववत् ।
आत्मापरमार्थसदन्यः परमार्थसद्भावान्योवा पदार्थत्वात् अनात्मवत् ।

मिथ्याभूतरूप्यादिवर्तिनिआत्मान्यसर्ववस्तुवृत्तिनिव्यभिचारवारणायहेतौमात्रपदं । मात्रपदेनसत्यवृत्तित्वव्यावृत्तिः अभावद्वैतांगीकारेणात्मनः ॥ [1]परमार्थसद्भावान्यत्वस्यसिद्धत्वात्सिद्धसाधनतास्यादतआह ॥ [2]परमार्थसद्भावान्यइति ॥ आभ्यामनुमानाभ्यामात्मव्यतिरिक्तस्यकस्यचिदनात्मनःपरमार्थसत्वंपरमार्थसद्भावत्वंचलब्धमितिहृदयं । दृष्टांतेअनात्मनिपरमा

१ परमार्थसन्योऽभावःतदन्यत्वेत्यर्थः । २ परमार्थसन्योभावःतदन्यइति ।

र्थसद्भावभूतब्रह्मान्यत्वमस्तीतिद्रष्टव्यं ॥ यावदिति ॥ अनेनचानुमानेनानात्मनअव्याकृताकाशवर्णप्रकृत्यादेर्यावदात्मस्वरूपमनुवर्तमानत्वोक्त्यात्रैकालिकनिषेधरूपमिथ्यात्वाभावसिद्धिः । अभावमादायसिद्धसाधनतावारणायाह ॥ यावदिति ॥ सिद्धसाधनतावारणायैवाह ॥ स्वेति ॥ स्वप्रतियोगीति ॥ मायिमतेस्वात्मतत्वसाक्षात्कारेणबंधोनिवर्ततइत्यंगीकृतं । ज्ञानेनबंधनिवृत्तिदशायांचसर्वस्याप्यनात्मनोबाध्यत्वंचांगीकृतं । तदानींबंधनिवृत्तिसमानात्मकालीनोऽबाध्यःकश्चनानात्मास्तीति

आत्मायावत्स्वरूपमनुवर्तमानानात्मवान् यावत्स्वरूपमनुवर्तमानभावरूपानात्मवान्वा स्वज्ञानाबाध्यानात्मवान्वा स्वज्ञानाबाध्यभावरूपानात्मवान्वा पदार्थत्वाद्भावत्वाद्वाघटवत् । विमताबंधनिवृत्तिःस्वप्रतियोगिविषयविषयकज्ञानाबाध्यानात्मसमानकालीना उक्तज्ञानाबाध्यभावरूपानात्मसमानकालीनावा बंधनिवृत्तित्वात् निगडबंधनिवृत्तिवदित्यादीनिद्रष्टव्यानि । विशिष्यानात्मसत्यत्वेतु

साध्यते । तथाहि । स्वशब्दनिर्दिष्टाबंधनिवृत्तिः तस्याःप्रतियोगीबंधः तस्यविषयःकर्मीभूतोबंध्यइतियावत् । एतादृशआत्मा जीवः तद्विषयकंयज्ज्ञानंआत्मतत्वसाक्षात्कारः । तेनाबाध्योयोऽनात्मा तत्समानकालीनेत्यर्थः ॥ निगडेति ॥ निगडबंधनिवृत्तिप्रतियोगिनिगडबंधविषयापराधिपुरुषविषयकज्ञानाबाध्यघटाद्यनात्मसमानकालीनत्वंनिगडबंधनिवृत्तावस्तीत्यर्थः । बंधनिवृत्तेरात्मतत्वसाक्षात्काराबाध्याभावरूपानात्मसमानकालीनत्वमादायसिद्धसाधनतावारणायाह ॥ उक्तेति ॥ स्वप्रतियोगि

विषयिकेत्यर्थः । आत्मधीः चरमसाक्षात्कारः ॥ स्वेति ॥ स्वशब्देनआत्मधीः तद्विषयःआत्मा तद्विषयिणीयाधीःस्वयमेव तद्बाध्यास्वयंधीरेव कतकरजोवदितिपरेणांगीकृतं । बाध्यानभवतीतिचास्माभिःसाध्यते । तथाचानेनविशिष्यात्मधीरूपानात्मसत्यत्वसिद्धिरितिज्ञेयं । भ्रमहेतुरज्ञानादिः । स्वशब्देनाज्ञानं तत्कार्योयोभ्रमोजगद्भ्रमः तदधिष्ठानंयद्ब्रह्म तज्ज्ञानबाध्यइति परेणांगीकृतं तदभावस्त्वस्माभिःसाध्यतेइत्यवधेयं । भ्रमकत्वात् । भ्रमजनकत्वात् ॥ काचादिरिति ॥ स्वशब्देनकाचादिः तत्कार्योयोरजतभ्रमः तदधिष्ठानशुक्तिज्ञानबाध्योनभवतीत्यर्थः । नन्वेवंचेच्छुक्त्यज्ञानेव्यभिचारः । भ्रमकत्वेसत्यपिशुक्त्यज्ञा

आत्मधीःनस्वविषयविषयकधीबाध्या धीत्वात् शुक्तिधीवत् । आत्माधिष्ठानकभ्रम
हेतुःनस्वकार्यभ्रमाधिष्ठानज्ञानबाध्यः । भ्रमक(हेतु)त्वात् यदेवंतदेवं यथाशुक्त्य
धिष्ठानकभ्रमहेतुःकाचादिः शुक्त्यज्ञानमपिपक्षतुल्यं । ब्रह्मान्यदनादि परमार्थसत्

नकार्यभ्रमाधिष्ठानभूतशुक्त्यज्ञानबाध्यत्वेनसाध्याभावादित्यतआह ॥ शुक्त्यज्ञानमपीति ॥ एतावंतंकालंशुक्त्यज्ञानमासीदित्यनुभवेनाज्ञानस्यसत्यत्वसिद्धेःस्वकार्यभ्रमाधिष्ठानज्ञानबाध्यत्वाभावोप्यस्माभिःसाध्यतेइतितस्यापिपक्षतुल्यत्वान्नव्यभिचारइत्यर्थः॥ब्रह्मान्यदनादीति ॥ "जीवईशोविशुद्धाचित्भेदस्तस्यास्तयोर्द्वयोः अविद्यातच्चितोर्योगःषडस्माकमनादय" इतिश्लोकोक्तमनादिजातमित्यर्थः॥अनादित्वेप्यध्यस्तत्वमेवास्तुइत्यप्रयोजकतायामाह॥दोषेति॥स्वाध्यासात्पूर्वमनादित्वादेवसतोपीत्य 

र्थः ॥अनादीति॥ब्रह्मज्ञानानिवृत्तेःसत्वेनानाद्यध्यस्तत्वमित्यंगीकारेब्रह्मणोप्यनादित्वाविशेषादनाद्यध्यस्तत्वंस्यात् तथोत्तरत्रत
न्निवर्तकाभावादनंताध्यस्तत्वंचस्यादित्यर्थः॥कालादीति॥अनेनकालादेर्यावद्ब्रह्मस्वरूपवर्तमानत्वोक्त्याऽबाध्यत्वसिद्धिः । पक्षे
हेतूपपादनायवेदैकगम्यमित्युक्तं। आदिपदेनब्रह्मग्रहणेसिद्धसाधनतापरिहारायब्रह्मान्यदित्युक्तं। दोषाजन्यज्ञानविषयत्वोपपाद
नायसाक्षिवेद्यमित्युक्तं। साक्षिरूपज्ञानस्यनित्यत्वेनदोषाजन्यत्वादितिभावः । बाधकज्ञानस्यदोषाजन्यत्वात्तत्प्रतिनिषेध्यत्वेनसा

अनादित्वात् ब्रह्मवत् । दोषजन्यज्ञानात्पूर्वंसतोप्यनादेरनाद्यध्यस्तत्वेब्रह्माप्यनाद्यनंताध्यस्तं स्यात् । ब्रह्मकालाद्यसंबद्धंनावतिष्ठते पदार्थत्वात् । घटवत् ब्रह्मान्यद्वेदैकगम्यंधर्मादिपरमार्थ सत् । श्रुतितात्पर्यविषयत्वाद्ब्रह्मवत् । साक्षिवेद्यंसुखादिपरमार्थसत् अनिषेध्यत्वेनदोषाजन्यज्ञानंप्रतिसाक्षाद्विषयत्वात् । आत्मवत् विमतंपरमार्थसत् स्वविषयकसाक्षात्कारात्पूर्वभावित्वात् आत्मवत् नचाऽसिद्धिः त्वन्मतेपिप्रतिकर्मव्यवस्थार्थंस्वविषयसाक्षात्कारात्पूर्वंघटादेर्भावात् ।

क्षाद्विषयेरूप्येव्यभिचारवारणायानिषेध्यत्वेनेति।इदंरूप्य(रजतमि)मितिज्ञानंप्रत्येवसाक्षादनिषेध्यत्वेनविषयेरूप्येतद्वारणायदो
षाजन्यज्ञानंप्रतीत्युक्तं। इदंरूप्य(रजत)मित्यस्यचदोषजन्यत्वान्नव्यभिचारः । व्यवसायद्वाराऽनुव्यवसायंप्रतिविषयेरूप्येतद्वार
णायसाक्षादित्युक्तं । विमतं घटादिरूपंविश्वं ॥ त्वन्मतइति ॥ घटज्ञानस्यघटएवकस्माद्विषयः पटोपिकिंनस्यादितिशंकायां
प्रतिकर्मव्यवस्थासिध्यर्थंघटसन्निकृष्टेंद्रियजन्यत्वात्घटज्ञानस्यघटविषयकत्वमित्येवमिंद्रियसंनिकर्षार्थंघटादिसाक्षात्कारात्पूर्वम

पिघटादेर्विद्यमानत्वमावश्यकत्वं । स्वविषयकसाक्षात्कारश्चाध्यासरूपएव । तथाचततःपूर्वमपिविद्यमानस्यघटादेरधिष्ठानादिवत्स(त्य)त्वमेवसिध्यतीत्यर्थः ॥ अन्योन्याभावातिरिक्तेति ॥ मायावादिनाहिघटादेरन्यत्रासत्वस्यसिद्धत्वात्स्वयंयत्रास्तितत्रापितदत्यंताभावोऽस्तीत्युच्यते। तद्विरोधितयाऽस्माभिःसाध्यते । अन्योन्याभावातिरिक्तैतद्धटसमानाधिकरणैतद्धटप्रतियोगिकोयोत्यंताभावः सएवैतद्धटसमानकालीनइतिपरेणोच्यते । अस्माभिस्त्वेतद्धटसमानाधिकरणैतद्धटप्रतियोगिकाभाव

अन्योन्याभा(वातिरि)वव्यतिरिक्तैतद्धटसमानाधिकरणैतद्धटप्रतियोगिकाभावत्वंएतद्धटसमानकालीनावृत्ति । अन्योन्याभावव्यतिरिक्तैतद्धटसमानाधिकरणैतद्धटप्रतियोगिकाभावमात्रवृत्तित्वात् । एतद्धटप्रतियोगिकप्रागभावत्ववदित्याद्यं । व्यधिकरणधर्मावच्छिन्नाभावपक्षेव्यधिकरणधर्मानवच्छिन्नेतिविशेषणीयं ।

त्वंएतद्धटसमानकालीनोयोऽत्यंताभावःतदवृत्तीत्युच्यते । एतद्धटात्यंताभावएवैतद्धटसमानाधिकरणएतद्धटसमानकालीनश्चनभवतीतियावत् । एवंचस्वसमानाधिकरणस्वसमानकालीनात्यंताभावाप्रतियोगित्वरूपसत्वसिद्धिः । अन्योन्याभावातिरिक्तेत्यभावविशेषणं । एतद्धटसमानाधिकरणैतद्धटप्रतियोगिकाभावःअन्योन्याभावोपिभवति । कपालमेतद्धटोनेतिप्रतीत्याएतद्धटान्योन्याभावस्यकपालेएतद्धटसमानाधिकरणत्वात् सचैतद्धटसमानकालीनोपिभवति । एवंचैतद्धटसमानाधिकरणैतद्धटप्रति

योगिकाभावत्वंएतद्घटसमानकालीनावृत्तीतिसाधनेएतद्घटान्योन्याभावत्वमादायबाधःस्यात् । अतोन्योन्याभावातिरिक्तेति । तावत्युक्तेतंत्वादौएतद्घटप्रतियोगिकात्यंताभावस्तावदस्ति सचान्योन्याभावातिरिक्तएतद्घटसमानकालीनश्च एतद्घटस्यतंत्वादावेतद्घटात्यंताभावस्यचसमानकालीनत्वात् । एवंचैतद्घटप्रतियोगिकाभावत्वंएतद्घटसमानकालीनावृत्तीतिसाधनेतंत्वादिनिष्ठैतद्घटात्यंताभावमादायबाधःस्यात् । अतएतद्घटसमानाधिकरणेत्युक्तं । तंत्वादिनिष्ठैतद्घटात्यंताभावस्यैतद्घटसमानाधिकरणत्वाभावान्नबाधः । अन्योन्याभावातिरिक्तैतद्घटसमानाधिकरणनिष्ठधर्मत्वमित्येतावत्युक्तेकपालरूपादिकमन्योन्याभावातिरिक्तमेतद्घटसमानाधिकरणमेतद्घटसमानकालीनंचभवति । एवंचकपालरूपत्वेएतद्घटसमानकालीनावृत्तित्वसाधनेबाधःस्यात् । अतः अभावत्वमित्युक्तं । तावत्युक्तेअन्योन्याभावातिरिक्तेकपालेएतद्घटसमानाधिकरणोयःपटात्यंताभावः सएतद्घटसमानकालीनश्चभवति । तथाचतन्निष्ठेपटात्यंताभावत्वेएतद्घटसमानकालीनावृत्तित्वसाधनेबाधःस्यात् अतएतद्घटप्रतियोगिकेत्युक्तं । नन्वेतद्घटप्रतियोगिपदेनैवकपालरूपत्वमादायबाधस्यपरिहृतत्वादेतद्घटप्रतियोगिकनिष्ठधर्मत्वमित्येवास्तु अभावत्वमित्येतत्किमर्थमितिचेदुच्यते । एतद्घटसमवायोद्विनिष्ठत्वेनकपालेएतद्घटसमानाधिकरणःस्वप्रतियोगिकत्वेनैतद्घटप्रतियोगिकत्वेनैतद्घटप्रतियोगिकश्चभवति । तद्वृत्तियदेतद्घटकपालसमवायत्वंतदादायबाधःस्यात् । तस्यैतद्घटसमानकालीनोयःएतद्घटसमवायःतद्वृत्तित्वात् । अतोभावत्वमित्युक्तं । नन्वेवंचेत्पुनर्बाधः व्यधिकरणधर्मावच्छिन्नाभावपक्षेसंयोगेनसंबंधेनघटवतिभूतलेसमवेतत्वावच्छिन्नघटोनास्तीतिप्रतीत्याऽन्योन्याभावातिरिक्तःभूतलादावेतद्घटसमानाधिकरणःयःएतद्घटात्यंताभावःअसमवेतत्वरूपव्यधिकरण

धर्मावच्छिन्नत्वाद्यत्यंताभावः सएतद्धटसमानकालीनश्चभवति । एवंचव्यधिकरणधर्मावच्छिन्नैतद्धटात्यंताभावत्वेएतद्धटसमानकालीनावृत्तित्वसाधनेबाधःस्यात् । अतोऽन्योन्याभावातिरिक्तैतद्धटसमानाधिकरणव्यधिकरणधर्मानवच्छिन्नैतद्धटात्यंताभावत्वमितिविशेषणीयं । अतोनबाधः । हेतावाद्यविशेषणत्यागेएतद्धटान्योन्याभावत्वेएतद्धटसमानकालीनान्योन्याभाववृत्तिनिहेतोर्व्यभिचारःस्यात् । अतआद्यमन्योन्याभावातिरिक्तेत्यभावविशेषणं । तावत्युक्तेतंत्वादिनिष्ठैतद्धटात्यंताभावत्वेएतद्धटसमानकालीनतंतुनिष्ठैतद्धटात्यंताभाववृत्तिनिहेतोर्व्यभिचारःस्यात् । अतएतद्धटसमानाधिकरणेतिद्वितीयंविशेषणं । एतावत्युक्तेएतद्धटसमानाधिकरणैतद्धटसमानकालीनकपालरूपवर्तिनिकपालरूपत्वेव्यभिचारःस्यात् । अतएतद्धटप्रतियोगिकाभाववृत्तित्वादित्युक्तं । तावत्युक्तेएतद्धटसमानाधिकरणात्यंताभाववृत्तिनिपटात्यंताभावत्वेएतद्धटसमानकालीनपटात्यंताभाववृत्तिनिचव्यभिचारःस्यात् । अतएतद्धटप्रतियोगिकेत्युक्तं । एतावत्युक्तेएतद्धटकपालसमवायोद्विनिष्ठत्वेनकपालेएतद्धटसमानाधिकरणःस्वप्रतियोगिकत्वेनैतद्धटप्रतियोगिकश्चभवति । तद्वृत्तिनिएतद्धटकपालसमवायेएतद्धटसमानकालीनोयःएतद्धटसमवायःतद्वृत्तिनिव्यभिचारःस्यात् । अतःअभावेत्युक्तं । तावत्युक्तेप्रमेयत्वेएतद्धटसमानकालीनयत्समवेतादिवर्तिनिव्यभिचारःस्यात् । अतोमात्रपदं । एतावत्युक्तेसमवेतत्वरूपव्यधिकरणधर्मावच्छिन्नैतद्धटात्यंताभावत्वेएतद्धटसमानकालीनोयःसमवेतत्वावच्छिन्नैतद्धटात्यंताभावःतद्वृत्तिनिव्यभिचारःस्यात् । अतोव्यधिकरणधर्मानवच्छिन्नेत्यपिविशेषणंदेयं । दृष्टांतेपटप्रागभावत्वेएतद्धटसमानकालीनोयःपटप्रागभावः तद्वृत्तित्वेनसाध्यवैकल्यंस्यात् । एतद्धटप्रतियोगिकाभाववृत्तित्वाभावेनसाधनवैकल्यंचस्यात् । अत

एतद्धटप्रतियोगिकेत्युक्तमितिसंप्रदायगम्यानिपदानांकृत्यानिद्रष्टव्यानि ॥ अनेनचेति ॥ अन्योन्याभावातिरिक्तैतद्धटसमानाधिकरणैतद्धटसमानकालीनाभावस्यनिषेधेस्वसमानाधिकरणात्यंताभावप्रतियोगित्वरूपमिथ्यात्वाभावरूपसत्वसिद्धिरित्यर्थः ॥ अत्रचेति ॥ सामान्येनात्मसत्यत्वेविशिष्यानात्मसत्यत्वेचोक्तानुमानेष्वित्यर्थः । संगृह्णाति ॥ तथाचेति ॥ असदिति ॥

अनेनचस्वसमानाधिकरणःस्वसमानकालीनःअन्योन्याभावव्यतिरिक्तोयोऽभावःतदप्रतियोगित्वरूपसत्वसिद्धिः । अत्रचाऽनुकूलतर्कोवक्ष्यंतइतिनोपाध्याभाससाम्यादिशंका । तथाच "असत्प्रातीतिकान्यत्वात्प्रमाणविषयत्वतः । अर्थक्रियाकारितादेर्विश्वंसत्य" मितिस्थितं ॥ ७ ॥ विश्वमिथ्यात्वस्यानुमानबाधः॥१९॥ किंच "विश्वंसत्यं यच्चिकेतसत्यमित्तन्नमोघंयाथातथ्यतोर्थान्व्यदधाच्छाश्वतीभ्यःसमाभ्य" इत्यादिश्रुतिभिः। "असत्यमप्रतिष्ठंतेजगदाहुरनीश्वर" मित्यादिस्मृतिभिः "नाभावउपलब्धेः वैधर्म्याच्चनस्वप्नादिवदि" त्यादिसूत्रैश्चबाधितादृश्यत्वादयः । नचायंप्रत्यक्षप्राप्तानुवादः त्वन्मतेसन्घटइत्यस्यसदर्थस्यव्यावृत्तघटाद्यन्यानुवृत्तब्रह्मत्वेनघटादिसत्वस्याऽप्राप्तेः ।

अनेनप्रातिभासिकत्वानधिकरणत्वेसतिअसत्वानधिकरणत्वादित्यनुमानसंग्रहः ॥ प्रमाणेति ॥ अनेनानिषेध्यत्वेनप्रमांप्रतिसाक्षाद्विषयत्वादित्यनुमानसंग्रहः । आदिपदेनारोपितमिथ्यात्वकल्पकरहितत्वाद्यनुमानानांसंग्रहःकृतइतिज्ञातव्यं ॥ ७ ॥ विश्वमिथ्यात्वस्यानुमानबाधविवरणं ॥ ७ ॥ १९ ॥ विश्वमिथ्यात्वानुमानस्यागमबाधमप्याह ॥ किंचेति ॥प्रत्यक्षप्राप्तेति॥

प्रत्यक्षप्राप्तसत्यत्वेत्यर्थः । व्यावृत्तंअननुवृत्तं यद्धटादितदन्यद्यदनुवृत्तंब्रह्मतत्त्वेनतत्स्वरूपत्वेनपरमतेघटोनित्यइत्यादिष्विव सन्घटइत्यत्रघटेसत्त्वंनप्रतीयते किंत्वधिष्ठानभूतसद्ब्रह्मानुवेधमात्रमित्यंगीकारेणघटःसन्नित्यादिप्रत्यक्षेणघटादिषुसत्यत्वस्याप्राप्तेःश्रुतेरनुवादकत्वायोगइत्यर्थः ॥ यच्चिकेतेत्यादीति ॥ "विश्वंसत्य" मित्यत्रसत्यत्वमात्रस्यप्रत्यक्षप्राप्तत्वसंभावनयाकथंचिदनुवादकत्वशंकायामपि "यच्चिकेते" त्यादिवाक्यद्वयेनतच्छंका । अत्रेश्वरस्यसत्यजगत्स्रष्टृत्वोक्तेः तस्यचप्रत्यक्षाद्यवेद्यतयाप्राप्त्यभावात्तत्प्रतिपादकश्रुतिद्वयस्यनानुवादकत्वमितिभावः । "विश्वंसत्य" मित्यस्याःश्रुतेःकथंचिदनुवादकत्वेपि "यच्चिकेते"

> यच्चिकेतेत्यादिवाक्यद्वयेईश्वरस्यमानांतराप्राप्तसत्यजगत्स्रष्टृत्वस्यैवोक्तेश्च । पृथिवीइतरभिन्ना नहिंस्यात्सर्वाभूतानीत्यादाविवएकदेशेविधेयसिद्धावपिविश्वमात्रेतदसिद्ध्यानानुवादकत्वाच्च । अनुवादकत्वंहिवाक्यस्यनज्ञातज्ञापकत्वमात्रं

त्यादिश्रुतिद्वयस्यतावन्नानुवादकत्वमित्यंगीकृत्योक्तं इदानीं "विश्वंसत्य" मित्यस्याअपिश्रुतेर्नानुवादकत्वमस्तीत्याह ॥ पृथिवीति ॥ यथापृथिवीइतरभिन्नेत्यत्रैकदेशघटाद्यवच्छेदेनेतरभेदस्यप्रत्यक्षेणसिद्धावपिपृथिवीत्वावच्छेदेनसर्वत्रासिद्ध्यानुमान(स्यनानु)स्याननुवादकत्वं यथाच "नहिंस्यात्सर्वाभूतानी" त्यत्र "ब्राह्मणोनहंतव्य" इत्यादिनाब्राह्मणादावेकदेशेहिंसाभावस्यसिद्धावपिभूतपदोक्तप्राणिमात्रेतदसिध्यानहिंस्यादितिवाक्य(स्यनानु)स्याननुवादकत्वं तथेहापिविश्वंसत्यमित्यत्रविश्वैकदेशघ

टाद्यवच्छेदेनप्रत्यक्षेणसत्त्वग्रहेपिविश्वत्वावच्छेदेनप्रत्यक्षेणतदग्रहात्तदयोग्येषुधर्मादिषुश्रुत्यासत्यत्वबोधनान्नविश्वंसत्यमित्य स्याःश्रुतेरनुवादकत्वमित्यर्थः । ज्ञातज्ञापकत्वमात्रमित्यत्रमात्रशब्दोऽयोगव्यवच्छेदार्थः ॥ अतिप्रसंगादिति ॥ सिद्धंधर्म्यं शमुद्दिश्यासिद्धविधायकस्य "दध्नाजुहोती" त्यस्याप्यनुवादकत्वमापद्येतेत्यर्थः ॥ ज्ञातमात्रेति ॥ तथाचधर्म्यंशस्यसिद्धत्वेपि अधिकस्याज्ञातस्यदधिरूपगुणस्यापितत्रविधानान्नज्ञातमात्रज्ञापकत्वमस्तीतिनातिप्रसंगइत्यर्थः । एवंचप्रकृतेपिविश्वंसत्यमित्या देर्नज्ञातमात्रज्ञापकत्वं "आपश्चनप्रमिनंती" तिवाक्यशेषेणविश्वसत्यत्वस्यसमस्तदेवताप्रमितिविषयत्वस्यासिद्धस्यापिकथनादि

अतिप्रसंगात् किंतुज्ञातमात्रज्ञापकत्वं एकशाखास्थविधिवाक्यैकार्थशाखांतरस्थविधिवाक्यस्य पुरुषांतरंप्रतीवयेनपुंसावादिविप्रतिपत्त्यादिनाप्रत्यक्षेणविश्वसत्यतानिर्णीतातंप्रत्यऽर्थवत्त्वाच्च ।

तिभावइतिसंप्रदायः । इतोपिविश्वंसत्यमित्यादेर्नज्ञातज्ञापकत्वेनवैयर्थ्यमित्याह ॥ एकशाखेति ॥ "प्रातस्संध्यामुपासीते" तिऋग्वेदशाखागतंवाक्यंतत्समानार्थकमपियजुश्शाखागतं "प्रातस्संध्या" मितिवाक्यंनव्यर्थं ऋक्शाखाध्यायिनंप्रतिव्यर्थत्वे पियेनपुंसाऋक्शाखाध्ययनंनकृतंतंप्रत्यर्थवत्त्वांगीकारात् । एवंप्रत्यक्षेणविश्वसत्यतायेननिर्णीता वादिविप्रतिपत्त्यादिनाप्रत्य क्षेऽप्रामाण्यशंकनात् तंप्रतिविश्वंसत्यमितिवाक्यस्याऽर्थवत्त्वसंभवादित्यर्थः । एकशाखेत्युक्त्यापूर्वमीमांसान्यायःसूचितः । तथाहि । द्वितीयाध्यायेचतुर्थपादेचिंतितं । "शाखांतरेषुकर्मभेदःस्या" दित्यत्रनानाशाखाम्नातंअग्निहोत्रादिकंकर्मभिद्यते न

वेतिसंशयेअविशेषेणपुनःश्रुतिरूपाभ्यासस्यकर्मभेदाभावेवैयर्थ्यापत्तेःकर्मभिद्यतइतिपूर्वपक्षः । सिद्धांतस्तुपुनःश्रुत्याशाखांतरोक्तमेवकर्मविधीयतइतिसिद्ध्यति नतुकर्मभेदः तर्हिवैयर्थ्यमितिनशंकनीयं शाखाभेदानामध्येतृभेदनियतत्वेनविहितस्यापिविधानंपुरुषांतराधिकारेणसंभवत्येवेतितस्यैवकर्मणोविधानेपिनवैयर्थ्यमिति । नन्वेवंरीत्यासर्वत्रानुवादमात्रोच्छेदप्रसंगःस्यादित्यतः "सर्वाविवादस्थलएवकथंचिदनुवादकत्व" मितिभगवत्पादवाक्यंहृदिनिधायाह ॥ अनुवादकत्वंत्विति ॥ अतएवेति ॥ सर्वाविवादस्थलएवानुवादकत्वस्यसावकाशत्वेनयत्रविवादस्तत्रतस्यादोषत्वादेवेत्यर्थः ॥ देहेति ॥ देहातिरिक्तात्मेत्यर्थः ॥

अनुवादकत्वंतुसर्वाविवादस्थलेसावकाशं । अतएवत्वयापिबृहदारण्यकभाष्येदेहान्यात्मबोधिकायाः "अस्तीत्येवोपलब्धव्य" इतिश्रुतेःप्रत्यक्षप्राप्तानुवादित्वमाशंक्यवादिविप्रतिपत्तिदर्शनादित्यादिनातत्परिहृतं ।

अस्तीति ॥ देहातिरिक्तोस्तीत्यर्थः ॥ प्रत्यक्षप्राप्तेति ॥ ममदेहइतिप्रत्यक्षेणदेहात्मभेदस्यसिद्धत्वादित्यर्थः । इत्यादिना सिद्धांतभाष्येण । किंचविश्वंसत्यमितिश्रुतेर्नानुवादकत्वं । यथाहितवमतेसन्घटःसन्पटःसद्घटज्ञानंसत्सुखस्फुरणमित्यादिप्रत्यक्षेणात्मसत्यत्वस्यप्राप्तेरात्मसत्यत्वप्रतिपादिकायाःसत्यआत्मेत्यादिश्रुतेर्वैयर्थ्यंस्यात्तन्माभूदित्येवमर्थंप्रत्यक्षेणवर्तमानकालएवसत्ताग्रहणात्वर्तमानकालमात्रेसत्ताग्राहिप्रत्यक्षाप्राप्तत्रिकालाबाध्यत्वरूपसत्यत्वप्रतिपादकत्वमंगीकृतं ।एवं

प्रकृतेवयमपिसन्घटइत्यादिप्रत्यक्षेणविश्वसत्यत्वस्यप्राप्तत्वाद्विश्वंसत्यमित्यादिश्रुतेर्वैयर्थ्यस्यात्तन्माभूदित्येवमर्थंवर्तमानकालमात्रेसत्ताग्राहिप्रत्यक्षाप्राप्तत्रिकालाबाध्यत्वरूपसत्यत्वप्रतिपादकत्वमंगीकुर्मोतोनदोषइत्याह ॥ इहापिश्रुतेरिति ॥ विश्वंसत्यमित्यादिकायाइत्यर्थः । अत्रपूर्वतंत्रसिद्धोदृष्टांतउक्तः ॥ द्वयोःप्रणयंतीत्यादिना ॥ सप्तमाध्यायेतृतीयपादेचिंतितं । "सौकंतु प्रणयनमवाच्यंहीतरवदि" त्यत्रचातुर्मास्येषुयज्ञेषुवैश्वदेववरुणप्रघाससाकमेधशुनासीरसंज्ञकपर्वचतुष्टयमस्ति । मासानामेव पर्वसंज्ञा तत्र "द्वयोःप्रणयंती" तिश्रूयते मध्यस्थयोर्द्वयोःपर्वणोःप्रणयंतिगार्हपत्यादाहवनीयंप्रत्यग्निर्नेतव्यइत्यर्थः । चातुर्मा

द्वयोःप्रणयंतीतिवाक्यस्यावैयर्थ्यायचातुर्मास्यमध्यपर्वणोश्चोदकाप्राप्तप्रणयनां
तरप्रापकत्ववत्इहापिश्रुतेरवैयर्थ्याययतत्सत्यमित्यादिश्रुतिवत्वर्तमानमात्रग्रा
हिप्रत्यक्षाप्राप्तकालत्रयाबाध्यत्वरूपसत्यत्वप्रापकत्वाच्च । अन्यथाआत्मनआनं
दत्वश्रुतिरपिसुखंसुप्तोऽस्मीतिप्रत्यक्षप्राप्ताऽतात्विकानंदत्वानुवादिनीस्यात् ।

स्यंचकर्मदर्शपौर्णमासाख्यकर्मप्रकृतिकं तत्रचातुर्मास्यपर्वणांमध्येमध्यस्थयोर्द्वयोःपर्वणोरुच्यमानमग्निप्रणयनंकिंदर्शपौर्णमासधर्मकंउतापूर्वंतद्विलक्षणमितिसंशयेचातुर्मास्यानांदर्शपौर्णमासप्रकृतिकतयाचोदकप्राप्तत्वेनतदीयांगकलापयुक्ततयाचोदकप्राप्तप्रणयनप्रापकत्वमेवेतिपूर्वपक्षेद्वयोःपर्वणोरग्निप्रणयनस्यदर्शपौर्णमासप्रकृतिकतयासिद्धत्वेनपुनर्द्वयोःप्रणयंतीत्यस्यवैयर्थ्यापत्तेस्तदवैयर्थ्यायचोदकाप्राप्तांगकलापयुक्तापूर्वप्रणयनप्रतिपादकत्वमेवेतिसिद्धांतितं तद्वदिहापीत्यर्थः ॥ अन्यथेति ॥ विश्वंस

त्यमित्यादेरपूर्वसत्यत्व(प्रापकत्वा)प्रतिपादकत्वाभावइत्यर्थः ॥ स्यादिति ॥ तथाचप्रत्यक्षाप्राप्तानंदत्वप्रतिपादकत्वंश्रुतेरंगीकार्यमितिभावः । नन्वेवमपूर्वविषयांतरदानेनसर्वत्रानुवादकत्वमात्रोच्छेदःस्यादित्यतआह ॥ अनुवादकत्वंत्विति ॥ (प्रमाणांतराप्राप्तापूर्वविषयांतरंयत्रनास्तितत्रानुवादकत्वंसावकाशमित्यर्थः ) । स्थलांतरेनुवादकत्वंसावकाशमित्यर्थः । दार्ढ्यहेतुत्वाच्चनानुवादकत्वंदोषायेत्याह ॥ निगमनवदित्यादिना ॥ पिपासितस्येतिहेतुगर्भं अत्यंततृषितत्वादेवएकप्रमाणोक्तौविश्वासा

अनुवादकत्वंतुअप्राप्तविषयांतराभावेसावकाशं। निगमनवत्तत्वमसी
तिनवकृत्वोभ्यासवत्पिपासितस्यएकजलविषयकलिंगशब्दप्रत्यक्षरूप
प्रमाणसंप्लववत्त्व(न्मते)त्पक्षेप्रत्यक्षसिद्धभावरूपाज्ञाने "तमआसी
दि" त्यादिश्रुतिवत्श्रुतेरैक्यतात्पर्येषड्विधलिंगवच्चप्रत्यक्षानाश्वासनि
रासेनदार्ढ्यार्थत्वाच्च । अनुवादकत्वंतुयत्रदार्ढ्यंप्रागेवसिद्धंतत्रैव ।

भावादेकजलरूपार्थविषयकशब्दादिबहुप्रमाणापेक्षेत्यर्थः ॥ प्रत्यक्षसिद्धइति ॥ अहमज्ञइतिप्रत्यक्षसिद्धइत्यर्थः ॥ त्वन्मतइति ॥ त्वन्मतेतमइशब्दस्यभावरूपाज्ञानपरत्वादितिद्रष्टव्यं । ऐक्यतात्पर्ये ऐक्यविषयकतात्पर्ये । नन्वेवंचेत्सर्वत्राप्यनाश्वासनिरासार्थत्वेनदार्ढ्यार्थत्वस्यवक्तुंशक्यत्वादनुवादकत्वमात्रोच्छेदइत्यतआह ॥ अनुवादकत्वंत्विति ॥ प्रागेवेति ॥ अना

श्वासपरिहारेणेत्यर्थः ॥ यथाषड्विंशतिरस्यवंक्रयइति ॥ नवमेध्यायेचतुर्थपादेचिंतितं । अग्निष्टोमीयपशौश्रूयते "षड्विंशतिरस्यवंक्रयःताआनुष्टयोच्यावयतादि" ति । अस्यायमर्थः । अग्निष्टोमीयपशोर्वंक्रयःपार्श्वस्थास्थीनिषड्विंशतिसंख्याकानि एकैकस्मिन्पार्श्वेत्रयोदशानामवस्थितत्वात् ताश्चवंक्रीःअनुष्ठ्याऽनुक्रमेणगणयित्वेतियावत् उच्यावयतात् उद्धरतादिति । षड्विंशतिवंक्रिकपशुयुताग्नीषोमीयप्रकृतिकेऽश्वमेधेश्रूयते । "चतुस्त्रिंशद्वाजिनोदेवबंधोर्वंक्रीरश्वस्ये" ति । तथा "नचतुस्त्रिंशदितिब्रूयात्षड्विंशतिरित्येवब्रूयादि" तिच । तत्रसंदेहः किंचोदकप्राप्तस्यषड्विंशतिरितिमंत्रस्यबाधोस्त्युतनेति । तत्राश्वमेधे "प्रकृतिव

तदुक्तं "बहुप्रमाणसंवादश्चदार्ढ्यहेतुरेवे"ति । किंचयथा "षड्विंशतिरस्यवंक्रय"
इतिमंत्रस्याऽश्वमेधेचोदकप्राप्तस्य "चतुस्त्रिंशद्वाजिनोदेवबंधो"रितिवैशेषिकमंत्रे
णाऽपोदितस्यप्रतिप्रसवार्थं "षड्विंशतिरित्येवब्रूयादि" तिवचनं तथाप्रत्यक्षप्राप्त
स्यजगत्सत्वस्याऽद्वैतश्रुत्याऽऽपाततोऽपोदितस्यप्रतिप्रसवार्थंसत्वश्रुतिःकिंनस्यात्

द्विकृतिःकर्तव्ये" तिचोदकेनषड्विंशतिरितिमंत्रप्राप्तौचतुस्त्रिंशदितिवैशेषिकमंत्रस्यप्रेषणपठितस्यबाधायोगाच्चोदकप्राप्तस्यैवबाध इतिप्राप्ते "षड्विंशतिरित्येवब्रूयादि" तिप्रतिप्रसवसद्भावादपवादस्यापवादेपुनरुत्सर्गस्यैवावस्थितिरितिन्यायेनचोदकप्राप्तःषड्विंशतिरस्येतिमंत्रएवप्रयोक्तव्यः । अतोनतस्यबाधः चतुस्त्रिंशदित्यस्यतुमंत्रस्यास्मात्प्रकरणात्स्थानांतरंप्रत्युत्कर्षःकार्यइतिसिद्धांतः । ननुषड्विंशतिरित्येवब्रूयादित्यत्रनतुचतुस्त्रिंशदितीतीतरनिषेधकैवकारश्रवणेनचोदकप्राप्तमंत्रापवादकवैशेषिकमंत्रप्रतीतस्यबाध

क्त्वमस्तु विश्वंसत्यमित्यादौतुनिषेधाश्रवणात्कथंप्रत्यक्षप्राप्तसत्यतापवादकनिषेधरहिताद्वैतश्रुतिबाधकत्वमित्यतआह ॥ दृश्यंतेहीति ॥ "असंयोगाल्लिट्किदि" तिकित्वविधिसन्निधिपठितस्यनिषेधरहितस्य "मृडमृदगुधकुषक्लिशवदवसःक्त्वे" तिसूत्रस्य "नक्त्वासेडि" तिकित्वापवादकंप्रतियथाबाधकत्वं तथाविश्वंसत्यमित्यादेर्निषेधविधुरस्यापिसत्त्वग्राहिप्रत्यक्षापवादकाद्वैतकश्रुतिबाधकत्वंयुक्तमित्यर्थः । यथोक्तं "कित्वंहिक्त्वोनिजंयन्नक्त्वासेडितिनिराकृतं । मृडेत्यादिविधानंतुपुनरुज्जीवयत्यद" इति । क्त्वः क्त्वाप्रत्ययस्य हि यस्मात्कित्वं निजंस्वाभाविकमेवास्ति ततोमृडेत्यादिनाक्त्वाप्रत्ययस्यकित्वकथनमयुक्तं तथापि

दृश्यंतेहि मृडमृदेत्याद्याःप्रतिप्रसवार्थविधयः । तस्मात् धर्मिप्रमातृधर्मा
दिभेदान्नद्वैतगीर्वृथा । असिंहावाग्भिन्नशाखावाग्द्विप्रणयनादिवत्

नक्त्वासेडितियत्कित्वंनिराकृतं तद्बाध(कभूतं)कंमृडेत्यादिविधानं अदःकित्वं पुनरुज्जीवयतीत्यर्थः । "स्वतएवकितःक्त्वायाः किद्वाचोऽनर्थकत्वतः । सेटःक्त्वायाःकिन्निषेधनिषेधार्थत्वमास्थित" मित्यपिपठंति । संगृह्णाति ॥ तस्मादिति ॥ प्रत्यक्षाविषयेधर्मिणिसत्यत्वबोधनायधर्मिभेदः विप्रतिपत्त्यादिनाप्रत्यक्षेणयेनसत्त्वंनगृहीतंतत्रतद्बोधनायप्रमातृभेदः प्रत्यक्षगृहीतव्यावहारिकसत्त्वभि(न्नतात्त्विकस)न्नाव्यावहारिकसत्त्वरूपधर्मग्रहायधर्मभेदः आदिपदेनदाढ्यार्थत्वप्रतिप्रसवयोर्ग्रहणं । नहिंस्यादित्यहिंसावाग्वद्धर्मिभेदः भिन्नशाखावाग्वत्एकार्थकनानाशाखागतवाग्वत्प्रमातृभेदः द्विप्रणयनादिवत्धर्मभेदइतिविवेकः ।

प्रमाणं अबाधितार्थग्राहकमित्यर्थः ॥ तद्बाधइति ॥ विरुद्धयोर्द्वयोरप्यबाधितार्थत्वानुपपत्तेरित्यर्थः ॥ नचेदिति ॥ प्रमित प्रमापकत्वाभावादित्यर्थः । अननुवादकत्वमेवदर्शयति ॥ श्रुतेरिति ॥ अननुवादकत्वोपपादनायप्रत्यक्षाप्राप्तेत्युक्तं । सदर्थ त्वोपपादनायतात्विकसत्त्वेत्युक्तमितियथायोग्यंसंबंधोद्रष्टव्यः । प्रमाणस्याप्यप्रमाणप्राप्तानुवादकत्वमस्त्वित्यतआह ॥ नहीति ॥ येनभ्रमप्राप्तानुवादकत्वंप्रमाणस्यस्यादितिभावः ॥ यथेति ॥ द्वैतग्राहिप्रत्यक्षंअद्वैतश्रुतिविषयापहारकंयथानभवति

> किंचप्रत्यक्षंप्रमाणंचेत्तद्बाधोमिथ्यात्वानुमानादेः नचेत्कथंसत्वश्रुतिरनुवादः । श्रुतेःसदर्थत्वाया ऽननुवादकत्वायचप्रत्यक्षाऽप्राप्ततात्विकसत्वविषयकत्वोपपत्तेः । नहिप्रमाभ्रमयोरेकविषयता । किंच यथानापहरेत्द्वैताभावश्रुत्यर्थमक्षधीः । तथानोपहरेद्द्वैतश्रुत्यर्थमपिदुर्बला । प्रत्यक्षंप्रमाणत्वे ननिश्चितंचेत्तद्बाधोमिथ्यात्वानुमानादेः अनिश्चितंचेत्प्रत्यक्षंमिथ्यात्वश्रुतिविषयापहारइवसत्व श्रुतिविषयापहारेप्यशक्तं स्वप्रामाण्यनिर्णयायश्रुतिसंवादापेक्षंसन्नश्रुत्यऽनुवादकत्वापादकं ।

दुर्बलत्वात् तथाद्वैतश्रुत्यर्थं भेदमपि नोपहरेत् नप्रापयेत् । कारिकार्थमेवाह ॥ प्रत्यक्षमित्यादिना ॥ पूर्वंप्रमाणत्वेदोषउक्तः इदानींतन्निश्चयेदोषउच्यतइतिभेदः । तदेवविशदयति ॥ स्वप्रामाण्येति ॥ नन्वेवंचेत्स्पार्शनप्रत्यक्षेणहिमभेषजत्वरूपोयस्त स्यगृहीतत्वात्तत्प्रतिपादकाग्निर्हिमस्यभेषजमितिश्रुतेरनुवादकत्वंसर्वसंमतंनस्यात् तत्रापिप्रत्यक्षस्यदुर्बलत्वेनाग्निर्हिमस्यभेषजमि

तिश्रुतिविषयापहारकंनभवति स्वप्रामाण्यनिर्णयायश्रुतिसंवादापेक्षंसत्नश्रुत्यनुवादकत्वापादकमितिवक्तुंसुशकत्वादित्यतआह ॥ अग्न्यौष्ण्येति ॥ प्रमाणाप्रमाणयोरेकविषयकत्वाभावेनापूर्वताप्राप्त्याविधायकमेवतन्नानुवादकमितिभावः ॥ अन्यथेति ॥ विश्वसत्यत्वश्रुतेःप्रत्यक्षप्राप्तसत्यत्वानुवादकत्वइत्यर्थः । ननुब्रह्मसत्त्वस्याप्राप्तत्वात्कथमनुवादकत्वमित्यतआह ॥ ब्रह्मसत्त्वस्येति ॥ लोकतइति ॥ सत्सुखस्फुरणमितिप्रत्यक्षेणेत्यर्थः । नचब्रह्मत्वसामानाधिकरण्येनसत्त्वंनप्रत्यक्षसिद्धमितिवाच्यं । स्फुरणत्वस्यैवब्रह्मत्वादितिभावः ॥ भ्रमेति ॥ यद्भ्रमाधिष्ठानंतत्सदितिदर्शनात्जगद्भ्रमाधिष्ठानंब्रह्मसदितित्वद्रीत्यानुमानेने

अग्न्यौष्ण्यप्रत्यक्षस्यप्रामाण्यानिश्चयेऽग्निर्हिमस्यभेषजमित्यादिरप्यनुवादोनस्यादेव । अन्यथा"सत्यंज्ञानं नेहनाने"त्यादिश्रुतिरप्यऽनुवादिनीस्यात् ।ब्रह्मसत्वस्यलोकतोभ्रमाधिष्ठानत्वादिलिंगेनचविश्वमिथ्यात्वस्यचदृश्यत्वाद्यनुमानेनाऽवेदमूलप्रवाहानादिविज्ञानवादादिनाचप्राप्तेः । उक्ताहिमंत्राधिकरणेमंत्रलिंगप्राप्तबोधकस्यापितदर्थशास्त्रस्याऽनुवादकता ।

त्यर्थः । विश्वमिथ्यात्वप्रतिपादिकायानेहनानेतिश्रुतेरनुवादित्वमुपपादयति ॥ विश्वेति ॥ नन्वनादिश्रुतेःकथंवादिप्राप्तानुवादित्वमित्यतउक्तं ॥ प्रवाहानादीति ॥ यथोक्तं "अनादिकालतोवृत्तास्समयाहिप्रवाहत" इति । तस्यवेदमूलकत्वेवेदानुप्रवेशनवेदस्यनतत्प्राप्तानुवादकत्वमतउक्तं ॥ अवेदमूलेति ॥ नन्वनुवादप्राप्तानुवादकत्वंश्रुतेःकुत्रापिनदृष्टमितिचेत्तत्राह ॥ उक्ताहीति ॥ प्रमाणलक्षणे "तदर्थशास्त्रादि" तिसूत्रइत्यर्थः ॥ तदर्थेति ॥ तदर्थश्रुतिविनियोगार्थयच्छास्त्रंतत्तदर्थशास्त्रं

ब्राह्मणंतस्येत्यर्थः । "उरुप्रथस्वउरुतेयज्ञपतिःप्रथतामितिपुरोडाशंप्रथयतीति" श्रूयते तत्रउरुप्रथस्वेतिमंत्रविनियोजकंयत् "इतिपुरोडाशंप्रथयती" तिब्राह्मणवाक्यंतदनुवादकंनवेतिसंदेहेअननुवादकमेव अन्यथावैयर्थ्यापत्तेरितिप्राप्तेपुरोडाशप्रथना भिधानरूपमंत्रगतलिंगेनपुरोडाशप्रथनरूपेऽर्थेउर्विंतिमंत्रविनियोगस्यसिद्धत्वात् "इतिपुरोडाशंप्रथयती" तिब्राह्मणरूपतदर्थ शास्त्रस्यानुवादकत्वंयुक्तमित्यर्थः । तर्हिवैयर्थ्यमितिनवाच्यं । उच्चारणमात्रेणादृष्टार्थत्वादितिप्रथमाध्यायस्यद्वितीयचरणेऽभि

उक्ताचत्वय्यैवेक्षत्यधिकरणेसदेवेत्यादिवाक्यस्यप्रधानपरत्वेसांख्यस्मृतिप्राप्तानुवादिता । किंचस त्वश्रुतेःसत्वप्रत्यक्षानपेक्षत्वान्नसापेक्षानुवादत्वं निरपेक्षानुवादित्वंतुधारावाहिकज्ञानइवनाप्रा माण्यहेतुः । उक्तंहिनयविवेके "सापेक्षानुवादेहिनप्रमितिः नतुदैवादनुवादेधारावाहिकवदि" ति । उक्तंचवाचस्पत्ये "यत्रतुप्रमाणांतरसंवादःतत्रप्रमाणांतरादिवार्थवादादपिसोर्थःप्रसिद्ध्यति

हितं । उक्तंचशास्त्रदीपिकायां "यदिदृष्टार्थतैवस्यान्मंत्राम्नानमनर्थकं । प्रत्यायनाददृष्टंचेत्तदुच्चारणतोवर" मिति । अनुवाद कत्वभियाश्रुतेरपूर्वार्थत्वंत्वयाप्यंगीकृतमित्याह ॥ उक्ताचेति ॥ एवमनुवादित्वमुक्त्वाब्रह्मपरत्वमुक्तमित्याशयः । किंचसत्त्व श्रुतेःसापेक्षानुवादित्वंवानिरपेक्षानुवादित्वंवा नाद्यइत्याह ॥ किंचसत्त्वश्रुतेरिति ॥ द्वितीयेत्वाह ॥ निरपेक्षेति ॥ धारा वाहिकेति ॥ उत्तरज्ञानेनस्वार्थेविषयीकरणीये नपूर्वज्ञानापेक्षा । पूर्वज्ञानगृहीतार्थविषयकत्वमात्रेणानुवादकत्वंत्वस्ति तन्ना

प्रामाण्यकारणं तद्वदि(त्यर्थः)तिभावः । नप्रमितिःअप्रामाण्यं दैवादनुवादे निरपेक्षानुवादे धारावाहिकवत्प्रामाण्यमित्यर्थः । नचधारावाहिकस्थलेपिविशेषणज्ञानत्वेनपूर्वपूर्वज्ञानापेक्षेतिवाच्यं। आद्यविशेषणज्ञानस्यैकस्यैवउत्तरभाविसर्वविशिष्टज्ञानहेतुत्वोपपत्तेः । अतोनिरपेक्षानुवादकत्वंधारावाहिकस्थलइतिसंप्रदायः । संवादः निरपेक्षानुवादकत्वं । अर्थवादात् अनुवादात् अनुवादवाक्यात् प्रसिद्ध्यतीति । तथाचप्रामाण्यमेवेतिभावः । निरपेक्षानुवादित्वमेवोपपादयति ॥ द्वयोरिति ॥ संवादसंवादिप्रमाणयोः परस्परानपेक्षयोरेवैकत्रार्थेप्रवृत्तेः । तत्रदृष्टांतःप्रत्यक्षेति ॥ **प्रमात्रिति** ॥ प्रमाणयोःपरस्परनिरपेक्षतयैवस्वार्थप्रति

द्वयोःपरस्परानपेक्षयोःप्रत्यक्षानुमानयोरिवैकत्रार्थेप्रवृत्तेः प्रमात्रपेक्षयात्वनुवादत्वं प्रमाताह्यव्युत्पन्नःप्रथमंयथाप्रत्यक्षादिभ्योऽर्थमवगच्छति नतथाऽऽम्नायत स्तत्रव्युत्पत्त्यपेक्षत्वादि" ति । किंचवादिविप्रतिपत्तिनिरासार्थत्वान्ननिष्प्रयोजनानुवादत्वं । सप्रयोजनानुवादत्वंतुविद्वद्वाक्यइवस्वार्थपरत्वाविरोधि । अतएवमीमांसकैर्विद्वद्वाक्यस्य

पादकत्वान्नानुवादकत्वेनाप्रामाण्यं प्रमात्रपेक्षयाप्राप्तमनुवादकत्वंत्वस्त्वित्यर्थः । तदुपपादयति ॥ **प्रमाताहीति** ॥ व्युत्पत्त्यनंतरमर्थावगमेतंप्रतिप्रत्यक्षादिसिद्धार्थबोधकतयानुवादकत्वंस्यादेवेत्यर्थः । तथाचनिरपेक्षानुवादित्वंत्वप्रामाण्यसाधकंनभवतीतिवाचस्पतेःसंमतमितिफलितोर्थः । किंचसत्त्वश्रुतेर्निष्प्रयोजनानुवादित्वं सप्रयोजनानुवादित्वंवा नाद्यइत्याह॥**वादीति** ॥ द्वितीयेत्वाह ॥ **सप्रयोजनेति** ॥ **मीमांसकैरिति** ॥ द्वितीयाध्यायेद्वितीयपादेचिंतितं । "प्रकरणंतुपौर्णमास्यांरूपावचना

दि” त्यत्रयदाग्नेयोष्टकपालोमावास्यांपौर्णमास्यांवाच्युतोभवतितावब्रूतामग्नीषोमावाज्यस्यैवनोपांशुपौर्णमास्यांयजेन्नैंद्रंदधिअमावास्याया” मिति तत्राग्नेयःऐंद्रंदधिऐंद्रंपयःइत्यमावास्याकालसंबंधियागत्रिकं आग्नेयःआज्यभागःउपांशुयागश्चेतिपौर्णमासीकालसंबंधियागत्रिकंविहितं । एतत्सन्निधौ “यएवंविद्वान्पौर्णमासींयजते यएवंविद्वानमावास्यांयजत” इतिवाक्यद्वयंश्रुतं। तथा “दर्शपौर्णमासाभ्यांस्वर्गकामोयजेते” तिचश्रुतं । तत्रयएवंविद्वानितिविद्वद्वाक्येसंदेहः यएवंविद्वानितिवाक्याभ्यांपौर्णमास्यामावास्यासंज्ञकौयागांतरौविधीयेते उतपूर्वप्राप्तामावास्यात्रिकपौर्णमासत्रिकानुवादएवक्रियतेइतिसंदेहेऽनुवादस्यव्यर्थत्वात् अपूर्वयागांतरविधायकावितिपूर्वपक्षेपूर्वप्राप्तषड्यागानुवादित्वमेव । नचैवंप्रयोजनाभावादनुवादवैयर्थ्यमितिवाच्यं । पूर्वप्राप्त

समुदायद्वित्वापादनरूपप्रयोजनवत्वेनानुवाद्यस्वार्थपरत्वाद्वाक्यैकवाक्यतोक्ता ।

दर्शपौर्णमासानुवादेनफलविधायके “दर्शपौर्णमासाभ्या” मितिवाक्येद्विवचनप्रयोगोस्ति । सचपूर्वप्राप्तषड्यागेष्वयुक्तःअतः फलवाक्येद्विवचनेनसम्यग्व्यवहारोपपत्त्यर्थंषण्णांयागानांद्वित्वंसंपाद्यतेऽनेनवाक्येन । अमावास्यापौर्णमास्यासंबंधिनआग्नेयादिषड्यागान्त्रिकत्वेनत्रिकत्वेनैकीकृत्य“यएवंविद्वान्पौर्णमासींयजते अमावास्यांयजत”इत्युक्तमितिसिद्धांतितं॥ समुदायेति॥ षड्यागरूपसमुदायस्यद्वित्वापादनरूपप्रयोजनसद्भावादित्यर्थः । तदपिद्वित्वापादनंदर्शपौर्णमासाभ्यामितिफलवाक्येद्वित्वोपपत्त्यर्थमितिज्ञातव्यं । एवंचपौर्णमासामावास्यायागसमुदायस्यविद्वद्वाक्यनिष्पन्नार्थस्यदर्शाख्येनसमुदायेनपौर्णमासाख्यसमु

दायेनफलकामइष्टिंकुर्यादितिफलवाक्येनान्वयाद्विद्वद्वाक्यस्यफलवाक्येनैकवाक्यत्वमुक्तमित्यर्थः ॥ स्वार्थेति ॥ यथा "वायु वैक्षेपिष्ठादेवते" त्यादीनांअवांतरप्राप्तमनुवदतांअनुवाद्यस्वार्थेतात्पर्याभावेनावांतरवाक्यार्थमनादृत्य(आलभेते)तिपदप्रतिपाद्यालंभनेप्राशस्त्यबोधकतया(पदैक)तदेकवाक्यतोच्यते । तथाविद्वद्वाक्येपिफलवाक्योक्तद्वित्वसंपादनेनानुवाद्यस्वार्थपरत्वाभावे "स्वर्गकामोयजेते" तिवाक्येयजेतेतिपदप्रतिपाद्ययागरूपार्थप्राशस्त्यबोधकतयापदैकवाक्यतैवोच्येतेत्यर्थः । किंचायमनुवादः

स्वार्थपरत्वाभावेह्यर्थवादवत्पदैकवाक्यतोच्येत । किंचानुवादत्वेपिनैष्फल्यमात्रंनत्वप्रामाण्यं याथार्थ्यमेवप्रामाण्यंनत्वनधिगतार्थत्वमित्यन्यत्रोक्तत्वात् । किंचायमनुवादोनतावद्वायुक्षेपिष्ठादिवाक्यवत्स्तुत्यर्थः नापि "दध्नाजुहोती" त्यत्रजुहोतिरिवान्यविधानार्थः विधानाय प्रमाणानूदितस्यतात्विकत्वनियमात् । नहि "व्रीहीन्प्रोक्षती" त्यादावारोपितव्रीह्यादेर्धीः

स्तुत्यर्थोवान्यविधानार्थोवानिषेधार्थोवा । नाद्यइत्याह ॥ किंचायमिति ॥ विश्वंसत्यमित्यनुवादइत्यर्थः । "वायव्यँश्वेतमालभेतभूतिकामोवायुर्वैक्षेपिष्ठादेवते" त्यादौइत्थं वायव्यश्वेतपश्वालंभःप्रशस्तः यतःशीघ्रगामिनीवायुदेवतेत्यादिवत्स्तुतेरत्राभावादित्यर्थः । नापिद्वितीयइत्याह ॥ नापीति ॥ "दध्नाजुहोती" त्यत्रजुहोतीतियत्तद्ध्नेतिदधिरूपगुणविधानायजुहोत्यनुवादोयथा तथान्यविधानार्थोनभवतीत्यर्थः । कुतोनेत्यतआह ॥ विधानायेति ॥ कुतोयंनियमइत्यतआह ॥ नहीति ॥

व्रीहीनितिप्रमाणवाक्यंप्रत्यक्षप्राप्तव्रीह्यनुवादेनप्रोक्षणंविधत्ते । एवंचप्रमाणानूदितस्यव्रीह्यादेस्तात्विकत्वनियमान्नारोपितत्वमित्यर्थः । आद्यादिपदेनदध्नाजुहोतीत्यादेर्ग्रहणं । द्वितीयादिपदेनहोमादेरितिज्ञेयं । अस्त्वारोपितव्रीह्यादेरेवधीरित्यतआह ॥ अनुवाद्यस्येति ॥ अनुवाद्यस्यासत्त्वेऽनुवाद्यविधेयसंसर्गरूपवाक्यार्थोबाधितःस्यादित्यन्वयः । तत्रदृष्टांतआश्रयासिद्धावित्यादि । नापितृतीयइत्याह ॥ नापीति ॥ तत्रैवेति ॥ नेहनानास्तिकिंचनेतिवाक्येकिंचनेत्यनेनैवसर्वानुवादोपपत्तेस्तदर्थंपृ

अनुवाद्यस्यासत्वेह्याश्रयासिद्धौधर्मिधर्मसंसर्गरूपानुमितिवेद्यइवाऽनुवाद्यविधेयसंसर्गरूपवाक्यार्थोबाधितःस्यात् । नापिनेहनानेतिनिषेधार्थः । तत्रैवकिंचनेत्यनुवादकांशस्यसत्वात् । नहि "नसुरांपिबेदि" तिनिषेधायसुरांपिबेदितिवाक्यांतरमपेक्षितं । अत्रचापश्चनप्रमिनंतीत्यलौकिकस्यप्रमाणस्याविधेयस्यसत्वाच्च ।

थक्विश्वंसत्यमितिवाक्यांतरमनपेक्षितमित्यर्थः । तदेवदृष्टांतेनोपपादयति ॥ नहीति ॥ वाक्यांतरं अनुवादकभूतं । तत्रसुरामित्यस्यैवानुवादकांशत्वादितिभावः । किंचनेहनानेतिनिषेधार्थोयमनुवादोनभवतिकिंनामविधानार्थएव । विश्वंसत्यमितिवाक्येएववांव्रतंतत्सर्जनादिकं । आपश्चनआपोपि सर्वदेवताअपि प्रमिनंतिजानंतीत्येवं पारमेश्वरसृष्ट्यादेस्सत्यत्वेनज्ञानंसर्वदेवानामप्यस्तीतिसर्वदेवसंबंधिताद्दशज्ञानरूपस्यालौकिकप्रमाणस्योक्तेरित्याह ॥ अत्रचेति ॥ विश्वंसत्यमितिवाक्यइत्यर्थः ॥

यत्तन्नेतीति ॥ यत्तन्नेत्येवंनिषेधार्थानुवादलिंगस्यएकस्याप्यभावादित्यर्थः । तदभावेपि तदनुवादलिंगाभावेपि । ननुतत्सत्य मित्यादिवाक्यंनब्रह्मसत्तानुवादकं । तस्यामानांतराप्राप्तत्वादित्यतआह ॥ सर्वेति ॥ व्यवस्थिते अनुस्यूते । तथाचब्रह्मणः सर्वप्रत्ययवेद्यत्वेनसन्घटइत्यत्रब्रह्मसत्त्वस्यप्रत्यक्षेणप्राप्तत्वात्तत्सत्यमित्यादेरनुवादकत्वंयुक्तमित्यर्थः । विशिष्टस्यैवसर्वप्रत्ययवेद्यत्वंनशुद्धस्येतिशंकामपाकर्तुमुत्तरार्धः(उदाहृतः)प्रवृत्तः । प्रपंचविलयाधिष्ठानत्वेनसर्वप्रत्ययवेद्यस्यशुद्धत्वादितिभावः ॥

यत्तन्नेत्यादिनिषेधार्थानुवादलिंगाभावाच्च । तदभावेपिनिषेधायानुवादे "तत्सत्य" मित्याद्यपि "नसत्तन्नासदुच्यते असद्वाइदमग्रआसीदि" तिनिषेधायब्रह्मसत्तानुवादकंस्यात् । "सर्वप्रत्ययवेद्ये चब्रह्मरूपेव्यवस्थिते । प्रपंचस्यप्रविलयःशब्देनप्रतिपाद्यत" इतिमंडनोक्त्यासन्घटइत्यत्रापिब्रह्मसत्ताप्रतीतेः । "परागर्थप्रमेयेषुयाफलत्वेनसंमता । संवित्सैवेहमेयोर्थोवेदांतोक्तिप्रमाणत" इतिसुरेश्वरोक्त्यासद्घटज्ञानमित्यत्रापितत्प्रतीतेश्च । सत्सुखस्फुरणंअज्ञोस्मीत्यादौतुतत्प्रतीतौनविवादः ।

परागर्थेति ॥ घटज्ञानस्यब्रह्मज्ञानत्वोपपादनायेदंवाक्यांतरं परागर्थाःप्रत्यगर्थाःतद्रूपाणियानिप्रमेयानितेषुफलभूतायासंवित् घटादिभासकंचैतन्यंतदेववेदांतवाक्यरूपप्रमाणस्यप्रमेयं । तथाचघटज्ञानस्यब्रह्मज्ञानत्वात्सत्पटज्ञानमित्यत्रब्रह्मसत्ताप्रतीयतइत्यर्थः । ननुघटावच्छिन्नचैतन्यरूपेब्रह्मणिसत्त्वप्रतीतावपिनशुद्धेतत्प्रतीतिरित्यतस्तदंगीकृत्यदूषणांतरमाह ॥ सदिति ॥ त

त्प्रतीतौ ब्रह्मसत्ताप्रतीतौ । कुतइत्यतआह ॥ शुद्धेति ॥ अज्ञोस्मीत्यत्रकथंब्रह्मसत्ताप्रतीयतइत्यतआह ॥ अज्ञानादीति ॥ अज्ञोस्मीत्यस्याज्ञानंमय्यस्तीत्यर्थः । तथाचाऽज्ञानाधिष्ठानचैतन्येअस्तीतिसत्ताप्रतीयतइत्यर्थः । नन्वत्रापिविशिष्टेऽज्ञानविशिष्टेचसत्ताप्रतीयतेनकेवलेइत्यतआह ॥ अधिकेति ॥ चिदस्फुरणाभावादिति ॥ विशिष्टेविशेष्यांशसद्भावादितिभावः । ननुसत्सुखस्फुरणमित्यादौब्रह्मशब्दोल्लेखाभावेनब्रह्मणिसत्त्वंनप्रतीयतइतिचेत्तत्राह ॥ ब्रह्मशब्देति ॥ यत्रब्रह्मशब्दोल्लेखोस्ति "सत्यंज्ञानमनंतंब्रह्मे" तितत्रापिब्रह्मणिसत्त्वंनप्रतीयतएव । "अथकस्मादुच्यतेब्रह्मेतिबृहंतोह्यस्मिन्गुणा" इतिश्रुतेर्ब्रह्मशब्द

शुद्धचितएवसुखस्फुरणत्वात्अज्ञानाद्यध्यासाधिष्ठानत्वाच्च। अधिकस्फुरणेपिचिदस्फु
रणाभावात् । ब्रह्मशब्दानुल्लेखेपिअखंडार्थनिष्ठवाक्यबोध्यंयत्ब्रह्मतत्सत्वप्रतीतेः ए
वमानंदश्रुतिरपिअदुःखमसुखंसममित्यादिनिषेधायप्रत्यक्षप्रासानंदानुवादिनीस्यात् ।

स्यगुणविशिष्टवाचित्वात्तस्यचमिथ्यात्वेनतत्रसत्यत्वबोधनस्यबाधिततयालक्षणयाब्रह्मचैतन्यमात्रपरत्वमेवांगीकृतं । वेदांतानामखंडार्थनिष्ठत्वेनवेदांतवाक्यबोध्यार्थस्यब्रह्मणोऽखंडत्वांगीकारात् यदाब्रह्मशब्दोल्लेखस्थलेइत्थंगतिस्तदासत्सुखस्फुरणंमय्यज्ञानमस्तीत्यत्रापिब्रह्मशब्दोल्लेखाभावेपिसुखाज्ञानविशिष्टेसत्तायाबाधितत्वेनलक्षणयाऽखंडार्थनिष्ठवेदांतवाक्यबोध्यंयद्ब्रह्मचैतन्यं तत्सत्त्वमेवप्रतीयते । विशिष्टेविशेष्यांशसद्भावादित्येववक्तव्यमितिभावः ॥ प्रत्यक्षेति ॥ सुखंसुखोस्मीतिसाक्षिप्रत्यक्षेत्यर्थः ॥

किंचैवमिति ॥ अबाध्यत्वरूपोयोबाधनिषेधस्तदर्थमित्यर्थः । विज्ञानवादिरीत्याप्राप्तंयत्प्रतिपन्नोपाधौनिषेधप्रतियोगित्वरूपं बाध्यत्वंतन्नेहनानेतिवाक्येनाऽनूद्यविश्वंसत्यमितिवाक्येनाऽबाध्यत्वरूपबाधनिषे(धबोधकेननिषिध्यते)धेप्रतिपादितेबाध्यत्वंनिषिध्यतइत्यपिस्यादित्याशयः ॥ स्वर्गनरकादेरिति ॥ स(त्य)त्वस्येतिशेषः । विश्वांतर्गतातींद्रियधर्मादिपदार्थसत्यत्वस्यप्रत्य

किंचैवंनेहनानेतिश्रुतिरेवविश्वंसत्यमित्यबाध्यत्वरूपबाधनिषेधायविज्ञानवादादिप्राप्तवि
श्वबाधानुवादिनीकिंनस्यात् । किंचधर्माधर्मस्वर्गनरकादेर्नप्रत्यक्षादिनाप्राप्तिः शब्दप्राप्तस्य
शब्देननिषेधायानुवादेएतच्छास्त्रास्थाग्नीषोमीयवाक्यस्यनहिंस्यादितिनिषेधायशास्त्रांत
रोक्ताग्नीषोमीयहिंसानुवादित्वंस्यात् । सत्यंज्ञानमित्यादेरपिइदंवाअग्रेनैवकिंचनासीदि
तिनिषेधायतत्सत्यमित्यादिवाक्योक्तब्रह्मसत्तानुवादित्वंस्यात् तस्मान्नानुवादिनीश्रुतिः ।
नापिव्यावहारिकसत्वपरा वैयर्थ्यात् नहिकोपिप्रपंचेव्यावहारिकसत्यतांनोपैति ।

क्षादिनाऽप्राप्तत्वेपिशब्दतएवप्राप्तिसंभवाच्छब्दप्राप्तधर्मादिसत्यत्वंनेहनानेतिनिषेधायविश्वंसत्यमित्यनेनाऽनूद्यतइत्यतआह ॥ शब्देति ॥ अतिप्रसंगांतरमाह ॥ सत्यमिति ॥ अनुवादित्वनिराकरणमुपसंहरति ॥ तस्मादिति ॥ वैयर्थ्यमेवोपपादयति ॥ नहीति ॥ येनसंप्रति "विश्वंसत्य" मितिवाक्येनव्यावहारिकसत्यत्वंबोधनीयंस्यात् बौद्धादिमतेपिजगतिव्यावहारिकसत्त्वा

परपर्यायसांवृतसत्त्वसद्भावादितिभावः । प्रपंचेसर्वांगीकृतमपिव्यावहारिकसत्यत्वंश्रुतिःप्रतिपादयत्विितिचेत्तत्राह ॥ अप्रासे चेति ॥ तथाचापूर्वताभंगइतिभावः ॥ इष्टापत्तिरिति ॥ श्रुतेरबाध्यसत्त्वप्रतिपादकत्वमस्माकमपिसंमतमितिभावः ॥ बाध्योक्ताविति ॥ बाध्यसत्त्वप्रतिपादकत्वइत्यर्थः ॥ श्रुतिरिति ॥ श्रुतिप्रतिपादितसत्वस्यबाध्यत्वेभ्रांतिहेतुत्वेनातत्वावेदकतयाऽप्रामाण्यंप्राप्तंनेदंवाक्यांतराप्रामाण्यतुल्यंकिंत्वित्यतउक्तं ॥ चिरेति ॥ अनादिकालानुवृत्तेत्यर्थः ॥ दृढेति ॥ ब्रह्मज्ञानात्प्राग्बाधाभावेनेत्यर्थः । अतएवात्यंताप्रामाण्यं रज्जुसर्पादिविज्ञानादप्याधिक्येनस्वकार्यहेतुभ्रांत्यतिशयजनकत्वादितिद्रष्टव्यं ।

अप्रासेचशास्त्रमर्थवत् । किंचव्यावहारिकशब्देनाबाध्योक्ताविष्टापत्तिः । बाध्यो
क्तौश्रुतिश्चिरानुवृत्तदृढभ्रांतिहेतुत्वेनात्यंताप्रमाणंस्यात् । नचमिथ्यात्वश्रुतिविरो
धात्तदिष्टं । त्वत्पक्षेतस्यालक्षणयाअखंडचिन्मात्रपरत्वेनजगत्सत्वाविरोधित्वात् ।

यथोक्तं "दीर्घभ्रांतिकरीचेत्स्यादतत्वावेदकप्रमा । रज्जुसर्पादिविज्ञानादाधिक्यादप्रमामते"ति ॥ नचेति ॥ मिथ्यात्वश्रुतेःप्रामाण्यांगीकारेणब्रह्मेतरसर्वमिथ्यात्वप्रतिपादकश्रुतिविरोधात्तदप्रामाण्यमिष्टमेवेत्यर्थः ॥ त्वत्पक्षइति ॥ त्वन्मतेजगन्मिथ्यात्वप्रतिपादकश्रुतिरेवनास्ति सर्वश्रुतेरपिलक्षणयाचिन्मात्रपरत्वात् मिथ्यात्वस्यापिश्रुतिप्रतिपाद्यत्वांगीकारेब्रह्मप्रतिपादनमात्रपरत्वादिरूपाखंडार्थत्वहानेरित्यर्थः । नचमिथ्यात्वेऽवांतरतात्पर्यमस्तिमहातात्पर्यंचिन्मात्रएवेतिवाच्यं । अवांतरतात्पर्यविषय

स्यापितात्विकत्वांगीकारात् धर्मादेरिवमिथ्यात्वस्यापिअतात्विकत्वापातेनश्रुतेरतत्वावेदकत्वंस्यादित्यादिवक्ष्यामइतिभावः । नेहनानेतिश्रुतिविरोधाद्विश्वंसत्यमित्यादिश्रुतेर्व्यावहारिकसत्त्वपरत्वेऽतिप्रसंगमाह ॥ असद्वाइत्यादिना ॥ ब्रह्मादिसर्वास त्त्वप्रतिपादकश्रुतिविरोधात्तत्सत्यमितिश्रुतेःप्रातिभासिकसत्त्वपरत्वादित्यर्थः ॥ सुवचत्वादिति ॥ श्रुतित्वाविशेषादित्यर्थः ॥ प्रबलमिति ॥ तथाचाद्वैतस्यसत्यत्वेनतच्छ्रुतेर्नद्वैतसत्त्वश्रुतिविरोधेनाप्रामाण्यमितिभावः । कुतःप्रबलंनचेत्यतआह ॥

**असद्वाइत्यादिश्रुतिविरोधेनतत्सत्यमित्यादेरपिप्रातिभासिकसत्वपरत्वापाताच्च ।**
**सत्वश्रुतिविरोधेनमिथ्यात्वश्रुतिरेवाप्रमाणमित्यपिसुवचत्वाच्च । नचषड्विधतात्पर्य**
**लिंगवत्त्वादद्वैतवाक्यंप्रबलं । लिंगानिहितात्पर्यज्ञापकानि नत्वर्थतथात्वस्य । अस्ति**
**चात्रापिवाक्यशेषेआपश्चनप्रमिनंतीतिप्रामाणिकत्वरूपा । नमोघमित्यर्थक्रियाकारि**
**त्वरूपाचोपपत्तिस्तात्पर्यलिंगं । लिंगबहुत्वंतुत्वत्पक्षेप्रमाणबाहुल्यवद्व्यर्थमित्युक्तं ।**

लिंगानिहीति ॥ तथाचतात्पर्यलिंगैरद्वैतसत्त्वंनसिद्ध्यति । उपक्रमादिलिंगैस्तात्पर्येसिद्धे । तथात्वंतुप्रमाणाविरोधेनैवनिश्चेयं प्रकृतेप्रमाणविरोधइतिभावः । "विश्वंसत्य" मित्यादिवाक्येपितात्पर्यलिंगमस्तीत्याह ॥ अस्तिचेति ॥ अस्मत्पक्षेषड्विधंतात्पर्य लिंगमस्तिभवत्पक्षेतूपपत्तिरूपमेकमेवेत्यतोवैषम्यमित्यतआह ॥ लिंगेति ॥ व्यर्थमिति ॥ अनुवादकत्वादितिभावः ॥

**प्रत्यक्षेति** ॥ प्रत्यक्षप्राप्तसत्त्वप्रतिपादकत्वेनापूर्वतायाअभावात्तद्विरोधेनमिथ्यात्वश्रुतेरप्रामाण्यंनास्तीतिभावः॥**तद्विरुद्धेति** ॥ प्रत्यक्षविरुद्धमिथ्यात्वप्रतिपादकत्वादेवस्वार्थपरानस्यादित्यर्थः । ननुमानांतरप्राप्तेरपूर्वताभंजकत्वेनातात्पर्यहेतुत्वंदृष्टं नतुमानांतरविरोधस्येत्यतआह ॥ **मानांतरेति** ॥ मानांतरप्राप्तार्थत्वेऽनधिगतार्थत्वहानिः । मानांतरविरुद्धार्थत्वेतुतथाभूतार्थत्वमेवनस्यादित्यर्थः ॥ **प्रत्यक्षेति** ॥ तथाचनमिथ्यात्वश्रुतेःप्रमाणांतरविरोधोस्त्यतोऽद्वैतवाक्यंप्रबलमितिभावः॥**तदगृहीतेति** ॥

यदिचसत्वश्रुतिःप्रत्यक्षप्राप्तार्थत्वान्नस्वार्थपरा तर्हिमिथ्यात्वश्रुतिरपितद्विरुद्धार्थत्वात्तथास्यात् मानांतरप्राप्तिवत्तद्विरोधस्याप्यतात्पर्यहेतुत्वात् । यदितुमिथ्यात्वश्रुतिःप्रत्यक्षागृहीतत्रिकालाबाध्यत्वनिषेधपरा तर्हिसत्वश्रुतिरपितदगृहीततद्विधिपरास्तु । नचसुषुप्तौनिष्प्रपंचतायाःपुरुषार्थत्वदर्शनात्फलवत्संनिधावफलंतदंगमितिन्यायेननिष्प्रपंचवाक्यानुसारेणसप्रपंचवाक्यंनेयमितिविवरणोक्तंयुक्तं।

त्रिकालाबाध्यत्वरूपसत्त्वस्यप्रत्यक्षेणागृहीतत्वादेवसत्त्वश्रुतेरनुवादकत्वाभावात्त्रिकालाबाध्यत्वरूपसत्त्वविधिपरैवास्त्वित्यर्थः ॥ **फलवदिति** ॥ प्रयाजज्योतिष्टोमादिवाक्यवदित्यर्थः । तथाचसुषुप्तौनिष्प्रपंचतायाःसुखत्वेनफलवत्त्वात्तद्बोधकास्थूलादिवाक्यस्यप्रधानार्थप्रतिपादकतुल्यत्वात्सप्रपंचसगुणवाक्यस्यनिष्फलप्रपं(चादि)चप्रतिपादकत्वेनप्रयाजाद्यंगवाक्यतुल्यतयाप्रधा

नवाक्यानुसारेणांगवाक्यस्यनेतव्यत्वादस्थूलादिप्रपंचनिषेधकवाक्यानुसारेणसत्यत्वप्रतिपादकसप्रपंचवाक्यंस्तुत्यर्थकत्वेननेय मित्यर्थः ॥ **तस्याइति** ॥ निष्प्रपंचतायाइत्यर्थः । दुःखमात्रप्रतिस्मृतेरितिवचनेननिष्प्रपंचतायादुःखहेतुत्वेनफलवत्त्वव्यभि चारान्नपुरुषार्थत्वमित्यर्थः । तथाचफलवत्सन्निधावितिन्यायानवकाशइतिभावः । प्रपंचस्य विद्यमानस्य तथाचमूर्च्छायांनिष्प्र पंचतैवनास्तीतितस्याअपुरुषार्थत्वमित्यर्थः ॥ **सममिति** ॥ तथाचतत्रापिविद्यमानप्रपंचाज्ञानमेवनत्वभावः अतोनिष्प्रपंचता याःसुषुप्तावपिनफलवत्त्वमित्यर्थः । ननुनिष्प्रपंचतायाःप्रयोजनमुत्सर्गतःबाधकादपोद्यते मूर्च्छायामपिमन्मतेनिष्प्रपंचतैव त

**तस्यामूर्च्छायामपुरुषार्थत्वस्यापिदर्शनात् । मूर्च्छायांप्रपंचस्याज्ञानमेवनत्वभावइतिचेत्**
**समंसुषुप्तावपि । यदिचमूर्च्छादुःखयोगेनैवापुरुषार्थः तर्हिसुषुप्तिरपिसुखयोगेनैवपुरुषार्थः।**

थाचमूर्च्छायांप्रसक्तंनिष्प्रपंचतायाःपुरुषार्थत्वंदुःखयोगरूपाद्बाधकादपोद्यतइत्याशंक्याह ॥ **यदिचेति** ॥ मूर्च्छायांनिष्प्रपंच तादुःखयोगेनापुरुषार्थभूतेतियावत् । तर्हिसुषुप्तौनिष्प्रपंचतायाःपुरुषार्थत्वदर्शनादित्युक्तमयुक्तमित्याह ॥ **तर्हीति** ॥ सुषुप्तेर पिनप्रपंचाभावरूपफलेनपुरुषार्थत्वं तस्यपुरुषेणानर्थ्यत्वात् किंतुसुखयोगेनैवेत्यपिप्राह्यानिष्प्रपंचतायाःसुषुप्तौपुरुषार्थप्रदत्वमे वनास्तीतिननिष्प्रपंचताप्रधानतुल्येतिभावः । ननु "द्वितीयाद्वैभयंभवती"तिश्रुतेर्द्वितीयाभावरूपनिष्प्रपंचतायादुःखराहित्या पादकत्वेनपुरुषार्थत्वमेवेतिचेत् । "तस्मादेकाकीनरमत" इतिश्रुतेर्निष्प्रपंचतायाअपिदुःखहेतुत्वादपुरुषार्थत्वंस्यादित्याह ॥

१ इतआरभ्यकानिचित्पत्राणिप्रत्यंतरसंवादंविनाशोधितानि ।

अस्तिचेति ॥ नन्वेकधैवानुद्रष्टव्यमित्यादिवाक्यस्वारस्यादभेदज्ञानस्यैवमोक्षहेतुत्वान्निष्प्रपंचतैवपुरुषार्थइत्यतआह ॥ संतिचेति ॥ तेन भेदज्ञानेन । तेन परमात्मनावा तुष्टः अलंबुद्धियुतः । ततः परमात्मनःप्रसादात् तथाचसप्रपंचतैवपुरुषार्थइति तदेवप्रधानमितितद्वाक्यानुसारेणैवनिष्प्रपंचवाक्यंअस्वातंत्र्यादिनार्थांतरेयोज्यमितिसिद्धमितिभावः । प्राबल्यं विधिरूपद्वैत

अस्तिच "द्वितीयाद्वैभयंभवती" तिश्रुतिरिवतस्मादेकाकीनरमतइत्यपिश्रुतिः । सतिचभेदज्ञानस्यमोक्षसाधनत्वे "पृथगात्मानंप्रेरितारंचमत्वातुष्टस्ततस्तेनामृतत्वमेती" त्याद्याःश्रुतयः । यदिचाद्वैतवाक्यस्यनिषेधवाक्यत्वात्प्राबल्यं तर्हि "क्ङितिचे" तिवृद्धिसूत्रात् (क्ङिति) चेतितन्निषेधसूत्रस्याऽग्नीषोमीयवाक्यादहिंसावाक्यस्यषोडशिग्रहणवाक्यादग्रहणवाक्यस्यसत्यज्ञानादिवाक्यादसद्वाइत्यादिवाक्यस्यप्राबल्यापातेनाहिंसापारमार्थिकोधर्मःअग्नीषोमीयहिंसातुव्यावहारिकोधर्मइत्यादिस्यात् ।

वाक्यादितिशेषः । निषेधकवाक्यस्यैवप्राबल्येऽतिप्रसंगमाह ॥ तर्हीति ॥ क्ङितिचेति ॥ "क्ङितिचे" तिकितिङितिचप्रत्ययेपरेतन्निमित्तकगुणवृद्धीनस्तइतिसुप्तिङ्कृत्तद्धितसाधारणेकितिपरेवृद्धिर्निषिद्धा । तदपवादकतया "किति चे" तिकितितद्धितेपरेपूर्ववृद्धिःस्यादितिवृद्धिर्विहितास्तिसानस्यादित्यर्थः । इत्यादीत्यादिपदेनग्रहणाग्रहणवाक्ययोरुभयोरपिसमत्वेनविकल्पएवा

श्रितोमीमांसकैःसोपिनस्यादितिग्राह्यं। प्रत्युतद्वैतवाक्यस्यैवपूर्वंअद्वैतवाक्यात्प्राबल्यंप्रतिपादितमस्तीत्याह॥ प्रत्यक्षेति॥ अनुपसंजातेत्यादिन्यायःपूर्वमुक्तोऽनुसंधेयः। ननुमिथ्यात्वानुमानस्योक्तरीत्याविश्वंसत्यमित्याद्युदाहृतश्रुतिविरोधेपि "असत्यमप्रतिष्ठं ते नाभाव"इत्यादिस्मृतिसूत्रविरोधोनास्ति। सर्वजगदत्यंतासत्त्ववादिशून्यवादिनिंदार्थत्वात्स्मृतेः। सूत्रस्यापितदभिमतसर्वासत्त्वनिरासकत्वादित्याशंक्यनिराकरोति॥ नचेति॥ ननुशून्यवादिनस्सकाशात्तववैलक्षण्याभावेनतन्मतनिरासकसूत्राणांत्वन्मत

प्रत्यक्षप्राबल्यप्रस्तावेउक्तप्रकारेणाऽद्वैतवाक्यात्द्वैतवाक्यस्यानुपसंजातविरोधित्वशीघ्रगामित्वविशेषविषयत्वनिरवकाशत्वादिनाप्राबल्याच्च। नचस्मृतिसूत्रेशून्यवादिनिरासार्थे तन्मतेजगतोत्यंतासत्वात् मन्मतेअसद्विलक्षणत्वादितिवाच्यं। अर्थक्रियाकारित्वादिनाशशशृंगादिवैलक्षण्यस्यतन्मतेपिसत्वात्

निरासायोदाहरणेनदोषइत्यतआवयोर्मतवैलक्षण्यमस्तीत्याह॥तन्मतइति॥असद्विलक्षणत्वादिति॥ अर्थक्रियाद्यन्यथानुपपत्त्याऽसद्विलक्षणस्वरूपांगीकारादितिभावः। त्वदभिमतमसद्वैलक्षण्यंशून्यवादिमतेप्यस्तीत्याह ॥ अर्थेति ॥ शशशृंगादीति ॥ शशशृंगादिरूपासदित्यर्थः। तन्मतेपि शून्यवादिमतेपि । ननुजगतिप्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वंमयांगीकृतमस्ति असतिशशशृंगादौतुनास्ति तस्यप्रतिपन्नोपाधेरभावात् अतोऽर्थक्रियाकारित्वादिनाऽसद्वैलक्षण्यस्यतन्मतेसत्त्वेपिप्र

तिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वेनधर्मेणासद्वैलक्षण्यंमयांगीक्रियतइतिचेत्तत्राह ॥ प्रतिपन्नोपाधाविति ॥ त्वन्मते पीति ॥ प्रतिपन्नोपाधौस्वरूपेणत्रैकालिकनिषेधप्रतियोगित्वांगीकारेशून्यवादिमतइवत्वन्मतेपिजगतोऽत्यंतासत्त्वमेवप्राप्तमिति शशशृंगवत्प्रतिपन्नोपाध्यभावएवप्राप्तोऽतःशून्यवादिनिरासकसूत्राणांत्वन्मतनिरासायोदाहरणंयुक्तमेवेतिभावः । किंचप्रतिप न्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वंजगत्यंगीकृत्यासद्वैलक्षण्यंयद्युच्यते तर्हित्वन्मते "वैधर्म्याच्चनस्वप्नादिवदि" तिस्वप्नाद्वैध र्म्योक्तिरयुक्ता। स्वप्नस्यत्वन्मतेप्रातिभासिकत्वेनप्रतिपन्नोपाधौनिषेधप्रतियोगित्वसद्भावेनानेनरूपेणस्वप्नजगतोःसाम्यादित्याह ॥

प्रतिपन्नोपाधौनिषेधप्रतियोगित्वेनतद्वैलक्षण्यस्यत्वन्मतेप्यभावात् । सूत्रेस्वप्नवैलक्षण्योक्त्य योगाच्च । व्यावहारिकसत्वेनस्वप्नवैलक्षण्यस्यतन्मतेपिसत्वात् । "द्वेसत्वेसमुपाश्रित्यबुद्धा नांधर्मदेशना । लोकेसंवृत्तिसत्यत्वंसत्वंचपरमार्थतः । सत्वंतुद्विविधंप्रोक्तंसांवृतंपारमार्थि कं । सांवृतंव्यावहार्यंस्यान्निवृत्तौपारमार्थिक" मितिबौद्धोक्तेः । तस्माच्छ्रुत्यादिबाधोदुर्वारः ।

सूत्रइति ॥ नन्वनेनरूपेणसाम्येपिव्यावहारिकसत्त्वप्रातिभासिकसत्त्वाभ्यांजगत्स्वप्नयोर्मन्मतेवैधर्म्यमस्तीत्यतआह ॥ व्याव हारिकेति ॥ तन्मतेपीति ॥ शून्यवादिमतेपीत्यर्थः । तथाचपुनस्तवतत्सालक्षण्यमेवेतिभावः । व्यावहारिकसत्त्वंशून्यवादि नाप्यंगीकृतमितिकथंज्ञायतइत्यतस्तद्वाक्यंपठति ॥ द्वेसत्त्वेइति ॥ देशना उपदेशः । संवृतिसत्यत्वंकिंनामेत्यतस्सत्त्वंविवि च्यदर्शयति ॥ सत्त्वंत्विति ॥ निवृत्तौ संवृतिशब्दोक्ताविद्यानिवृत्तौ । श्रुत्यादिविरोधमुपसंहरति ॥ तस्मादिति ॥

तत्तत्प्रमाणेति॥घटपटचक्षुर्मनोधर्मादिपदार्थप्रापकप्रत्यक्षानुमानागमेत्यर्थः । ननुतत्तत्प्रमाणैस्तत्तद्विषयस्यसत्त्वंसिद्ध्यतीत्ययुक्तं । तथाहि अग्निरासीदितिज्ञानंभवति । तत्राग्निरासीदित्यस्याग्निरिदानींनास्तिध्वंसप्रतियोगीत्यर्थः । तथा वृष्टिर्भविष्यतीति ज्ञानंभवति । तत्रवृष्टिर्भविष्यतीत्यस्यवृष्टिरिदानींनास्तिप्रागभावप्रतियोगिनीत्यर्थः । तथारूप्यंमिथ्येतिज्ञानंभवति । तत्ररूप्यं मिथ्येत्यस्यरूप्यंत्रैकालिकनिषेधप्रतियोगीत्यर्थः । तथाचाग्निरासीदित्यादिज्ञानेनविषयस्यसत्त्वंनसिद्ध्यति तत्रविषयभूतस्यध्वंसप्रतियोगिनःप्रागभावप्रतियोगिनश्चज्ञानकालेऽभावात् अत्यंताभावप्रतियोगिनश्चकदाप्यभावात् अतस्तेतेविषयभूतास्तत्तत्प्रमा

किंचत्वयापितत्तत्प्रमाणसिद्धाएवार्थाःपक्षीकर्तव्याः । तैश्चतेसत्त्वेनैवासिद्धाइतितत्त
न्मानबाधः । अग्निरासीद्वृष्टिर्भविष्यतिरूप्यंमिथ्येत्यादिधीरपिस्वविषयसत्त्वंगृह्णाति

णेनसत्त्वेनैवसिद्धाइत्येतदयुक्तमित्यतआह ॥ अग्निरासीदित्यादिना ॥ अयमर्थः नात्राग्निरासीदित्यादेरग्न्यादिप्रध्वंसादिप्रतियोगित्वमर्थः । येनप्रतियोगिप्राधान्येनार्थस्यविवक्षितत्वादग्न्यादेर्ध्वंसादिप्रतियोगिनस्तत्तज्ज्ञानविषयत्वमंगीकृत्यतस्यतदाऽसत्त्वंशंकनीयंस्यात् । नचैवं किंत्वभावप्राधान्येन । तथाचाग्निरासीदित्यस्याग्निप्रतियोगिकोध्वंसोऽस्तीत्यर्थः । तथावृष्टिर्भविष्यतीत्यस्यापिवृष्टिप्रतियोगिकप्रागभावोस्तीत्यर्थः । तथारूप्यंमिथ्येत्यस्यापिरूप्यप्रतियोगिकोत्यंताभावोस्तीत्यर्थः । एवंचात्र ध्वंसप्रागभावात्यंताभावानामेवविषयत्वात्तत्रतैस्तैर्ज्ञानैस्सत्त्वंविषयीक्रियतएवेतिसत्त्वेनैवतत्तत्प्रमाणसिद्धान्प्रध्वंसादीन्पक्षीकृत्य

मिथ्यात्वसाधनेतत्तन्मानविरोधस्तदवस्थएवेति ॥ अन्यथेति ॥ ध्वंसादिरूपविषयसत्त्वंअग्निरासीदित्यादिज्ञानेननगृह्यतेचेत्त
र्हितत्तज्ज्ञानानंतरंध्वंसाद्युचितार्थक्रियाभवति सानस्यादित्यर्थइत्येवंअग्निरासीदित्यादिकंयोज्यमितिसंप्रदायः । अन्येतुनप्रमा
णैर्विषयसत्त्वंसिद्ध्यति । अतीतादिग्राहकमानेविषयभूतार्थस्यसत्त्वाभावादित्यतआह ॥ अग्निरासीदिति ॥ नात्रसत्त्वंविद्य
मानत्वंकिंत्वबाध्यत्वं तच्चातीतादिष्वप्यस्तीतितद्गोचरज्ञानस्यापिस्वार्थसत्त्वग्राहकत्वमक्षतमेव । रूप्यस्यसद्विलक्षणतयातद्गतं
मिथ्यात्वमसदेवेत्यर्थइत्याहुः ॥ ७ ॥ मिथ्यात्वस्यागमादिबाधविवरणं ॥ २० ॥ सत्त्वसाधकप्रमाणापेक्षयामिथ्यात्वसा

अन्यथातदुचितप्रवृत्त्याद्ययोगादिति ॥ ७ ॥ विश्वमिथ्यात्वस्यागमादिबाधः
॥ २० ॥ किंचैतैरेवप्रयोगैःस्वप्रतिज्ञाहेतूदाहरणादिप्रापितानांसाध्यसाधनव्या
प्त्यादीनांमिथ्यात्वंनबोध्यतेचेत्सर्वमिथ्यात्वासिद्धिःबोध्यतेचेत्परस्परव्याहतिः

धकानुमानानांव्याहत्यादिनादौर्बल्याच्चनतद्बाधकत्वमित्याह ॥ किंचेति ॥ एतैः दृश्यत्वजडत्वपरिच्छिन्नत्वादिहेतुभिः । प्र
तिज्ञावाक्येनप्रापितस्यमिथ्यात्वरूपसाध्यस्य हेतुवाक्यप्रापितस्यसाधनस्य उदाहरणवाक्यप्रापितायाव्याप्तेः रुपनयादिवाक्यप्रा
पितानांचार्थानांमिथ्यात्वंनबोध्यते बोध्यतेवा । आद्यआह ॥ नबोध्यतइति ॥ द्वितीयेत्वाह ॥ बोध्यतइति ॥ विमतंमि
थ्येतिप्रतिज्ञारूपेणवाक्येनपक्षेमिथ्यात्वंविधीयते। अनुमानप्रयोगेणतुविश्वमिथ्यात्वंसाधयताविश्वांतर्गतस्यमिथ्यात्वरूपप्रतिज्ञा

र्थस्यात्यंताभावरूपमिथ्यात्वंसाध्यतेइतिव्याहतिरित्यर्थः ॥ बाधेति ॥ अनुमानेनविश्वांतर्गतमिथ्यात्वस्यापिअत्यंताभावप्रतियोगित्वरूपमिथ्यात्वबोधनेपक्षेऽभावप्राप्त्याबाधइत्यर्थः ॥ स्वरूपासिद्धीति ॥ अनुमानेनविश्वांतर्गतदृश्यत्वादिहेतूनांअत्यंताभावसाधनेपक्षेऽसत्त्वप्राप्त्यास्वरूपासिद्धिरित्यर्थः ॥ व्याप्यत्वेति ॥ उदाहरणवाक्यप्रापितस्यव्याप्यत्वस्यमिथ्यात्वबोधनेव्याप्त्यभावप्राप्त्याव्याप्यत्वासिद्धिरित्यर्थः । नन्वनुमानप्रयोगेणदृश्यत्वादीनांमिथ्यात्वबोधनेपिसाधकत्वमुपपद्यतएवमिथ्याभू

बाधस्वरूपासिद्धिव्याप्यत्वासिद्ध्यादिकंचस्यात्।परमार्थसत्वस्यैवसाधकत्वेतंत्रत्वात्।
तथाहिनतावद्धीमात्रंतत्रतंत्रं ।तुच्छस्यापितत्प्रसंगात्। नाप्यपरोक्षधीःअपरोक्षस
त्वधीर्वातंत्रं । नित्यातींद्रियेतदभावात् । ह्रदेप्रपंचेचापरोक्षभ्रांतिसिद्धेनधूमेनात्यंता
बाधेनचवह्नेःपारमार्थिकसत्वस्यचासिद्धेश्च । वह्नित्वेनाज्ञातस्यापिवह्नेर्दाहकत्वाच्च ।

तस्यैवमयासाधकत्वांगीकारादित्यतआह ॥ परमार्थेति ॥ परमार्थसत्त्वस्यसाधकत्वेतंत्रत्वंपरिशेषेणोपपादयति ॥ तथाहीत्यादिना ॥ तत्र साधकत्वे ॥ तुच्छस्यापीति ॥ शब्दाभासादिनाव्योमकमलादीनामपिज्ञानसंभवेनसाधकत्वप्रसंगइत्यर्थः ॥ नापीति ॥ तथाचतुच्छव्यावृत्तिरित्यर्थः । प्रपंचेत्वद्रीत्याऽपरोक्षभ्रांतिसिद्धेनात्यंताबाधेनपारमार्थिकत्वस्यसिद्धिःस्यादित्यर्थः । धीमात्रादेःसाधकत्वेव्यतिरेकव्यभिचारमाह ॥ वह्नित्वेनेति ॥ नारिकेलद्वीपवासिनोवह्नेर्वह्नित्वेनज्ञानाभावेपिदाहरूप

कार्यसिद्धेर्दर्शनादित्यर्थः । धीमात्रादेस्तंत्रत्वेऽन्वयव्यभिचारमप्याह ॥ अमृतत्वेनेति ॥ विषास्यमृतत्वज्ञानेसत्यपिसंजीवनरूपकार्यादर्शनादित्यर्थः ॥ अबाधितेति ॥ तथाचहृदेऽपरोक्षभ्रांतिसिद्धेनधूमेनवह्न्यसिद्धिः । अमृतत्वेनज्ञातेनापिविषेणसंजीवनासिद्धिःतज्ज्ञानेत्रिचतुरकक्षासुबाधसद्भावादितिभावः । इत्येतदप्यतएवनिरस्तं । प्रपंचेऽपरोक्षभ्रांति सिद्धात्यंताबाधस्यापिब्रह्मज्ञानपर्यंतमपिबाधाभावेनत्रिचतुरकक्ष्यास्वबाधितसत्त्वप्रकारकधीविषयत्वसत्त्वेनपारमार्थिकत्वसिद्धिःस्यादितिभावः । त्रिचतुरकक्ष्यास्वबाधितसत्त्वधियःसाधकत्वतंत्रत्वेदूषणांतरमाह ॥ गौरोहमिति ॥ तदेवोपपादयति ॥ गौरोहमित्यादा

अमृतत्वेनज्ञातस्यापिविषस्यासंजीवकत्वाच्च । अतएवनत्रिचतुरकक्ष्यास्वबाधितासत्वधीस्तंत्रं । गौरोहंनीलंनभइत्यादिभ्रांतिसिद्धेनगौरत्वनीलत्वादिनाआत्माकाशादेरपिअनित्यत्वस्पर्शवत्वाद्यापात्ताच्च । गौरोहमित्यादावपि तत्कक्ष्यासुप्रत्यक्षाबाधात् । यौक्तिकादिबाधस्यचत्वन्मतेप्रकृतेपिभावात् ।

वपीति ॥ गौरत्वादेरात्मादौसत्त्वधियःत्रिचतुरकक्ष्यास्वबाधितत्वेनआत्माऽनित्यःरूपवत्त्वादित्येवंगौररूपेणात्मन्यनित्यत्वसिद्धिःस्यात् । भौतिकंत्वेवरूपादिव्याप्तंनाशेनेतिवचनात् । तथानभःस्पर्शवन्नीलरूपवत्त्वादित्येवंनीलरूपेणाकाशेपिस्पर्शसिद्धिःस्यादितिभावः । ननुत्रिचतुरकक्ष्यास्वबाधितत्वंनामनप्रत्यक्षमात्रेणबाधाभावः किंतुबाधसामान्याभावः । तथाचनतत्रत्रिचतुरकक्ष्यास्वबाधः । आत्माकाशौनरूपवंतौविभुत्वादित्यनुमानबाधोस्तीतिचेत्तत्राह ॥ त्वन्मतइति ॥ प्रपंचेसत्त्वधियोप्यनुमान

बाधितायास्त्वयांगीकृतत्वान्नत्रिचतुरकक्ष्यास्वबाधितासत्त्वधीस्त्वन्मतेस्तीतिदृश्यत्वादीनांसाधकत्वंनस्यादित्यर्थः ॥ लोकप्रसिद्धिरिति ॥ सत्त्वेनलोकप्रसिद्धिरित्यर्थः । इष्टसिद्धिर्मायावादग्रंथविशेषः । तदप्येतेनैवनिरस्तं । गौरोहंनीलंनभइत्यादेरपि सत्त्वेनपरमलोकप्रसिद्धेःसत्त्वादित्यर्थः । एतेनेत्युक्तंविशदयति ॥ निपुणेनेति ॥ कथायांकुशलेनेत्यर्थः ॥ उक्तधीविषयेति॥ त्रिचतुरकक्ष्यास्वबाधितवादिप्रतिवादिप्राश्निकसत्त्वधीविषयेत्यर्थः । तथाचनिपुणबौद्धोक्तानांशून्यमेवाद्वितीयंतत्त्वमित्येतदर्थ

एतेनलोकप्रसिद्धिस्तंत्रमितीष्टसिद्ध्युक्तंनिरस्तं । एतेनैवत्रिचतुरकक्ष्यास्वबाधितावादिप्रतिवादिप्राश्निकानांसत्वधीस्तंत्रमितिनिरस्तं । निपुणेनबौद्धेनोक्तधीविषयव्यास्यादिमत्त्वेनव्युत्पादितैःशून्याद्वैतादिहेतुभिस्तात्सिद्ध्यापातात् । एतेनैवयादृश्यातवसत्वसिद्धिस्तादृशीधीर्ममतंत्रमितिखंडनोक्तंनिरस्तं । यादृश्याशब्देक्षप्रदोषहीनयातवब्रह्मणिसत्वसिद्धिस्तादृश्याप्रत्यक्षेक्षप्रदोषरहितयाममजगतिसत्वसिद्धेः ।

प्रतिपादकहेतूनामपिप्राश्निकादिभिस्त्रिचतुरकक्ष्यास्वबाधितत्वेनज्ञातत्वात्त्वांप्रतितदुक्तैरपिहेतुभिस्तवशून्याद्वैतासिद्धिःस्यादिति भावः ॥ यादृश्येति ॥ यादृश्याबुद्ध्यानभोनैल्यादिधीव्यावृत्तयाघटादौसत्त्वसिद्धिस्तादृशबुद्धिविषयत्वमेवममसाधकत्वेतंत्रमित्यर्थः । एतेनेत्युक्तंविशदयति ॥ यादृश्येति ॥ शब्देक्षप्रादोषाअर्थबाधादयः । प्रत्यक्षेक्षप्रदूरत्वादिदोषरहितेनप्रत्यक्षेण जगतिसत्त्वस्यासिद्धत्वात्तादृशधियस्त्वयासाधकत्वांगीकारेपारमार्थिकसत्त्वधियएवसाधकत्वप्राप्तेरित्यर्थः । ननुप्रत्यक्षेक्षप्रदोष

राहित्यमसिद्धं । शुक्तिरूप्यप्रत्यक्षदृष्टांतेनजगत्प्रत्यक्षेपिप्रत्यक्षत्वहेतुनादोषोनुमीयतेतेननजगतिसत्त्वसिद्धिरितिचेत्तत्राह ॥ अन्यथेति ॥ तर्हितवापिशब्देक्तदोषहीनवेदांतजन्ययाधियाब्रह्मण्यपिसत्त्वंनसिद्ध्येत् । तत्कुतइत्यतउक्तं ॥ पूर्वपक्षीति ॥ तेनेति ॥ स्वार्थानुमानेपराभावादितिभावः । स्वार्थानुमानेपरसिद्धसत्त्वानपेक्षायामपिपरार्थानुमानंतदपेक्षमस्त्वित्यतआह ॥ परार्थेति ॥ प्रयोगस्यज्ञानपूर्वकत्वेनस्वस्यज्ञानाभावेपरार्थप्रयोगएवायुक्तइतिभावः ॥ परेति ॥ परप्रसिद्धसत्त्वोपेतेनदृश्य

अन्यथाशुक्तिरूप्यादिप्रत्यक्षदृष्टांतेनजगत्प्रत्यक्षइवपूर्वपक्षिप्रतिपन्नश्रुत्यर्थदृष्टांते नत्वत्प्रतिपन्नेपिश्रुत्यर्थेदोषांतरशंकाकालांतरभाविबाधशंकाचस्यात् । नापिपरप्र सिद्धंसत्त्वंतत्रं तेनस्वार्थानुमानायोगात् । परार्थप्रयोगस्यचतत्पूर्वकत्वात् । परप्र सिद्धमात्रेणहेतुनावास्तवसाध्यासिद्धेश्च । नचमिथ्यात्वमपिपररीत्यैवनतुवास्त वमितिवाच्यं । बौद्धरीत्यामिथ्याभूतस्यात्मनइवजगतोवस्तुतस्सत्त्वापातात् ।

त्वादिहेतुनेत्यर्थः । वास्तवसाध्यं मिथ्यात्वं । असिद्धे स्तवेतिशेषः । तथात्वेबौद्धप्रसिद्धहेतुनात्वन्मतेजगतिवास्तवसत्त्वभंगित्वादिकमपिसिद्ध्येदितिभावः । पररीत्या बौद्धरीत्या । अतोबौद्धमतप्रसिद्धेनैवदृश्यत्वेनहेतुनामिथ्यात्वमपित्वद्रीत्यैवसाध्यंतेनमन्मतेतद्वास्तवमतोनोक्तदोषइतिभावः ॥ बौद्धरीत्येति ॥ परसिद्धेनपरंप्रतिमिथ्यात्वसिद्धावपितवप्रपंचमिथ्यात्वसिद्ध्यभावेन

वस्तुतस्त्वन्मतेजगतस्सत्यत्वमेवस्यात्बौद्धोक्तसाधनेनबौद्धमतएवात्मनोमिथ्यात्वेपित्वन्मतेतस्यसत्यत्ववदित्यर्थः ॥ मिथ्यात्वस्येति ॥ मिथ्यात्वमपिपररीत्यैव नवास्तवमित्यंगीकारे तद्बोधकस्यनेहनानेतिप्रमाणस्यत्वदभिमततत्वावेदकत्वंनस्यादिति भावः ॥ योपीति ॥ यःपदार्थःपरमतेऽसिद्धःस्वमतेसिद्धस्तत्रप्रतीकारोदूषणंस्यात्स्वमतेऽसिद्धोयमितिवादिनंप्रतिकःप्रतीकारःतेनैवासिद्धत्वांगीकारात्तद्दूषणंव्यर्थमित्यर्थः । तथाचमिथ्यात्वंवास्तवंमयानांगीक्रियतइत्युच्यतेचेदस्मदिष्टसिद्ध्यानतद्दूषणेना।

मिथ्यात्वस्यतत्वावेदकश्रुतिवेद्यत्वाच्च । तदुक्तंवार्तिकेबौद्धंप्रति "योपितावत्परासिद्धःस्वयंसिद्धोभिधीयते। भवेत्तत्रप्रतीकारःस्वतोसिद्धेतुकाक्रिये" ति । नापिव्यावहारिकसत्वंतंत्रं । प्रपंचमिथ्यात्वसिद्धेःप्राक्तदसिद्ध्यान्योन्याश्रयापातात् । प्रातिभासिकेनहेतुव्याप्त्यादिनाव्यावहारिकसाध्यसिद्ध्यदर्शनेनहेतुव्याप्त्यादेरनुमितिविषयसमसत्ताकत्वनियमेनव्यावहारिकेणपारमार्थिकासिद्धेश्च ।

स्साकंकृत्यमित्याशयः ॥ अन्योन्येति ॥ सिद्धेप्रपंचमिथ्यात्वेव्यावहारिकसत्त्वसिद्धिस्तत्सिद्धौचतस्यसाधकत्वेतंत्रत्वसिद्ध्या तादृशसत्त्ववतादृश्यत्वादिनामिथ्यात्वसिद्धिरित्यन्योन्याश्रयादित्यर्थः । व्यावहारिकेण दृश्यत्वादिहेतुना । पारमार्थिकासिद्धेः पारमार्थिकस्यमिथ्यात्वस्यासिद्धेरित्यर्थः । कुतोऽसिद्धिरितिचेत् हीनसत्ताकेनाधिकसत्ताकसाध्यसिद्धेरदर्शनादित्याशयेनोक्तं

प्रातिभासिकेनेति । नन्वेतदयुक्तं । याद्दच्छिकस्थलेआरोपितेनापिधूमेनव्यावहारिकवह्निसिद्धेर्दर्शनादित्यस्वरसादाह ॥ किंचे
ति ॥ उक्तदोषाइति ॥ सत्त्वेनव्यवहारमात्रंवस्तुतस्सत्त्वंनास्तीत्यंगीकारेहेत्वादिवाक्यप्रतिपाद्यस्यद्दश्यत्वादेःसत्त्वाभावप्रा
प्त्यास्वरूपासिद्धिव्याप्यत्वासिद्ध्यादयोदोषाउक्ताइत्यर्थः । बहुकालानुवृत्तभ्रांतिहेतुत्वेननभोनैल्यभ्रमहेतोरिवव्यावहारिकस
त्त्वविषयश्रुतीनामप्रामाण्यापातात् । अतोबहुकालानुवृत्तभ्रांतेर्नसाधकत्वप्रयोजकत्वं । नभोनैल्यछत्राकारत्वादिप्रत्यक्षस्यापि
साधकत्वापत्तेरित्यर्थः । संगृह्णाति ॥ तथाचेति ॥ साधकत्वप्रयोजकभूतंसत्त्वंयदायर्हिंव्यवहारासिद्धंअबाध्यत्वादिरूपंविव

किंचव्यावहारिकसत्वस्याबाध्यत्वरूपसत्वविशेषत्वेस्मादिष्टासिद्धिः । सत्वेनव्यवहारमात्रत्वेचो
क्तदोषाः । भ्रांतेर्बहुकालानुवृत्तिश्चाप्रयोजिका । तथाच व्यावहार्यंयदासत्वमस्माकंतर्हिंकाक्षतिः ।
नचेदसत्साधकत्वंनास्तीत्यत्रकिमागतं । तदुक्तंवार्तिकेबौद्धंप्रति "तस्माद्यन्नास्तिनास्त्येवयच्चास्ति

क्षितंतर्हिंअस्माकंकाक्षतिःइष्टापत्तिरितिभावः । नचेत् सत्त्वेनव्यवहारमात्रंवस्तुतस्सत्त्वंनास्तीत्यंगीकृतंचेत् असतस्साधकत्वं
नास्तीत्यत्रकिमायातं । हेत्वादिवाक्यप्रतिपाद्यस्यद्दश्यत्वादेःसत्त्वाभावात्स्वरूपासिद्ध्यादिदोषःस्यादतःसाधकत्वायोगइत्यभि
हिते नासतःसाधकत्वंमयोच्यतेद्दश्यत्वादेर्व्यावहारिकसत्त्वांगीकारात्तस्यैवसाधकत्वेतंत्रत्वादितित्वयेरितं । तत्रव्यावहारिकस
त्त्वस्वरूपविचारे वस्तुतस्सत्त्वंनास्तीत्युक्तंस्यात् । तथाचासतएवपुनःसाधकत्वोक्तेरसतःसाधकत्वंनास्तीत्यस्माभिरभिहितप्रमेये
दूषणंकिमायातमित्यर्थः । असतोपिसाधकत्वमित्येतांतुदुराशांउत्तरत्रापाकरिष्यामइतिभावः ॥ तस्मादिति ॥ यन्नास्तिशश

शृंगादि तन्नास्त्येव यदस्तितत्परमार्थतएवास्ति तस्मात्तत्सत्यमेव अन्यच्छशशृंगादिकंमिथ्यैवेतिसत्यद्वयकल्पना सत्यद्वैविध्यकल्पना पारमार्थिकसांवृतरूपसत्त्वद्वैविध्यकल्पनानयुक्ता । पारमार्थिकमिथ्याव्यतिरिक्तसांवृतसत्त्वोपेतवस्तुनोभावात् । सांवृतत्वोक्त्याशशशृंगवन्मिथ्यात्वमेवोक्तंस्यात् । तथाचप्रत्यक्षादिबाधः । तेनकारणेनलालावक्रासवादिशब्दवत्मिथ्यासांवृतशब्दयोस्तुल्यार्थत्वेपर्यायत्वेसतिशशशृंगंमिथ्याजगत्सांवृतंसत्यमित्युपन्यासःशिष्यवंचनार्थमेवेत्यर्थः । तथाचैवंभट्टाचार्यैर्बौद्धंप्रत्युक्तत्वात्त्वापिप्रच्छन्नबौद्धत्वात्सांवृतसत्त्वस्थानाभिषिक्तव्यावहारिकसत्त्वस्यापिमिथ्याशब्दपर्यायत्वात्तदुपन्यासोवंचनार्थएवे

परमार्थतः । तत्सत्यमन्यन्मिथ्यैवनसत्यद्वयकल्पना । तुल्यार्थत्वेपितेनैवमिथ्यासंवृतिशब्दयोः ।
वंचनार्थमुपन्यासोलालावक्रासवादिवदिति" । अज्ञानादेःसिद्धिपर्यंतसाधकेस्वरूपेणपरमार्थस
तिसाक्षिणिव्यावहारिकसत्वाभावाच्च । नचसाक्ष्यप्यविद्यावृत्तिप्रतिबिंबितएवाज्ञानादिसाधकः ।

तिभावः । तथाचव्यावहारिकसत्त्वंसाधकत्वोपयोगिनभवतीतिध्येयं । व्यावहारिकसत्त्वस्यसाधकतायांप्रयोजकत्वेसाक्षिणिव्यभिचारइत्याह ॥ अज्ञानादेरिति ॥ आदिपदेनसुखादि ॥ सिद्धीति ॥ स्वरूपसतःसत्त्वपर्यंतेत्यर्थः । साक्षिणि शुद्धचैतन्ये । सिद्धिपर्यंतसाधकइत्यनेनरूप्यादिसाधकाविद्यावच्छिन्नसाक्षिणोव्यावहारिकाद्वैलक्षण्यंसूचितमितिज्ञेयं ॥ साक्ष्यपीति ॥ अविद्याकाराऽविद्यावृत्तिर्जायते । तस्यांप्रतिबिंबितएवसाक्षीअविद्यादिकंसाधयति । तस्यचव्यावहारिकत्वान्नव्यभिचारइति

भावः । चैत्ररागःचैत्रगतःस्वशब्दःसमभिव्याहृतपरः । स्वशब्देनरागःतद्विषयकंयदनित्यज्ञानंअयमिच्छावान्प्रयत्नवत्त्वादित्य नुमानजन्यंतदतिरिक्तंयदध्यक्षंतद्वेद्यइत्यर्थः । घटादौतुपटविषयकंयदनित्यज्ञानंअस्मदादिज्ञानंवृत्तिरूपंतदतिरिक्तंयदध्यक्षंअ धिष्ठानचैतन्यरूपंतद्वेद्यत्वमस्तीतिज्ञेयं । अविद्यावृत्तिप्रतिबिंबितसाक्षिरूपाध्यक्षवेद्यत्वेनसिद्धसाधनतावारणाय अनित्यज्ञाना तिरेकिणेत्युक्तं । अविद्यावृत्तिप्रतिबिंबितंविशिष्टंसाक्षिचैतन्यंचानित्यमितिभावः । सुखादावपिरागवदिदमनुमेयमितिभावः ॥ नित्यधीति ॥ शुद्धसाक्षीत्यर्थः । तथाचतत्रव्यावहारिकसत्त्वाभावाद्व्यभिचारइतिभावः । सुखेच्छाज्ञानादीनामप्यविद्यावृत्ति

त्वयैव "चैत्ररागःस्वविषयानित्यज्ञानातिरेकिणा । तदध्यक्षेणसंवेद्यःप्रत्यक्षत्वाद्घटादिवदि"ति सु खादेर्नित्यधीवेद्यत्वोक्तेः । अज्ञानसुखादेर्ज्ञातैकसत्वाभावापाताच्च । अविद्यावृत्तिंप्रतितदप्रतिबिं बितस्यैवसाधकत्वाच्च । साक्षिगतसाधकतायाअज्ञानाधीनत्वेऽपारमार्थिकतयाप्रातीतिकस्याज्ञान

प्रतिबिंबितसाक्षिवेद्यत्वेसुखाद्युत्पत्त्यनंतरंकदाचिदविद्यावृत्तिविलंबेनतज्ज्ञानविलंबापत्त्यासुखादीनांज्ञातैकसत्त्वंनस्यादित्याह ॥ अज्ञानेति ॥ अस्तुवायथाकथंचित्सुखादेरविद्यावृत्तिप्रतिबिंबितसाक्षिवेद्यत्वं तथाप्यविद्यायानाविद्यावृत्तिप्रतिबिंबितसाक्षिवे द्यत्वं । आत्माश्रयानवस्थापत्तेरतःशुद्धसाक्षिवेद्यत्वमेववाच्यं । तथाचाविद्यासाधकशुद्धसाक्षिणिव्यभिचारःसुस्थइत्याशयेनाह ॥ अविद्यावृत्तिंप्रतीति ॥ साधकतायाः अज्ञानसाधकतायाः । शुद्धसाक्षिणःसाधकत्वाभावइतियावत् ॥ अन्योन्येति ॥

अज्ञानस्वरूपसिद्धौतदधीनस्यसाक्षिणस्साधकत्वस्यसिद्धिः तत्साधकत्वेसिद्धेऽज्ञानस्यप्रातीतिकत्वसिद्धिः अज्ञानस्यप्रातीतिकत्वेनसाक्षिणएवतत्सत्त्वसाधकत्वादित्यन्योन्याश्रयइत्यर्थः ॥ एतेनेति ॥ मयोच्यमानमसतःसाधकत्वंयथात्वदसंततं एवंभवदभिमतंसतस्साधकत्वंनममापिसंमतमित्येतदेतेनैवसत्यस्यसाक्षिणोह्यावयोर्मतेसाधकत्वांगीकारेणैवनिरस्तमित्यर्थः । विमतिर्विवादः । आनंदबोधः चित्सुखः ॥ नापीति ॥ क्वचित्पारमार्थिकीसत्तासाधकत्वेतंत्रं क्वचिद्व्यावहारिकीसत्ता क्वचित्प्रातिभासिकीसत्तेति सत्तात्रयमपितंत्रं । अथवाद्वयं प्रातिभासिकसत्त्वातिरिक्तंसत्त्वद्वयमित्यर्थः ॥ अननुगमादिति ॥ पारमार्थिक

सत्वस्यसाक्षिणासिद्धिंविनाऽयोगेनान्योन्याश्रयाच्च । एतेनतवासतइवममसतोपिसाधकत्वेविमतिरित्यानंदबोधाद्युक्तंनिरस्तं। नापिसत्तात्रयंद्वयंवातंत्रं । अननुगमात् । प्रयोज्यवैजात्याभावेन

सत्त्वाभावेपिव्यावहारिकसत्त्वोपेतादप्यर्थसिद्धेर्दर्शनाद्व्यभिचारइत्यर्थः । ननुतृणाभावेपिपर्णादिनावह्नेर्जायमानत्वेनव्यभिचारान्नवह्नौतृणादीनांकारणत्वंएवमेवयागस्यापिनस्वर्गसाधनत्वमित्याशंकायांयथातृणजन्यवह्नेःसकाशान्मणिजन्यवह्नौ यथावा यागजन्यस्वर्गात्दानादिजन्येस्वर्गेवैजात्यमंगीकृत्यव्यभिचारःपरिह्रियते एवमिहापिपारमार्थिकसत्त्वोपेतप्रमाणजन्यसिद्धितो व्यावहारिकादिसत्त्वोपेतप्रमाणजन्यसिद्धौवैजात्यकल्पनान्नव्यभिचारइत्याशंकांपरिहरति ॥ प्रयोज्येति ॥ तृणादिप्रयोज्यवह्नेस्तृणादिजन्यतावच्छेदकीभूतजातिविशेषस्यानुभवसिद्धत्वात्तृणेसतिताद्दशजात्युपेतताणोंवह्निविशेषइत्यस्यव्यभिचारोना

स्तीतिकल्प्यतेतद्वदिहपारमार्थिकसत्त्वादिप्रयोज्यजातिविशेषाणामभावेनतृणारणिमणिन्यायासंभवादितिभावः ॥ अपरमार्थेति ॥ पारमार्थिकसद्भिन्नव्यावहारिकादिसतइत्यर्थः ॥ असत्त्वेनेति ॥ सत्प्रभेदत्वाभावेनसत्त्वसामान्यंप्रतिअव्यक्तित्वादित्यर्थः । तथाचशशविषाणगोविषाणानुगतविषाणत्वसामान्यवत्सत्त्रयसद्वयानुगतसत्त्वसामान्यस्याप्यभावादित्यर्थः । तथाचपरमार्थसतएवसाधकत्वंसिद्ध्यतीतिद्रष्टव्यं ॥ विरोधादिति ॥ अबाध्यत्वादिरूपसत्त्वस्यबाध्यत्वादिरूपमिथ्यात्वाश्रयमृषार्थे

तृणारणिमणिन्यायासंभवाच्च । नापिसत्त्रयानुगतंसद्वयानुगतंवासत्वसामान्यंतंत्रं । अपरमार्थसतोसत्वेनतत्रसत्वस्याविरुद्धत्वात् । तदुक्तंवार्तिकेबौद्धंप्रति । "सत्यत्वंनचसामान्यंमृषार्थपरमार्थयोः । विरोधान्नहिसिंहत्वंसामान्यंवृषसिंहयोरिति" । अपरमार्थसतःअबाध्यत्वरूपसद्विशेषत्वेचशाबलेयस्यगोविशेषत्ववत्प्रपंचस्यापिब्रह्मवत्सद्विशेषत्वात्सद्वैलक्षण्यंनस्यात् । किंचयद्यारोपितानारोपितानुगतंसामान्यंस्यात्तर्हिब्राह्मणोयजेतेत्यादिसामान्यविधिंप्रतिब्राह्मण्यामब्राह्मणाज्जातआरो

वृत्तिर्नसंभवतिस्वाभाववतिस्ववृत्तेर्विरुद्धत्वादित्यर्थः ॥ वृषसिंहयोरिति ॥ वृषस्यसिंहप्रभेदत्वाभावादितिभावः । नन्वपरमार्थसतोपिअबाध्यत्वरूपसद्विशेषत्वात्तत्रसत्त्वसामान्यंसंभवतीत्यतआह ॥ अपरमार्थसतइति ॥ शाबलेयस्य शबलगोजन्यस्यगोरूपपदार्थस्य ॥ सद्वैलक्षण्यमिति ॥ अबाध्यत्वरूपसत्त्वाविरोधिनःअपारमार्थिकत्वस्यपारिभाषिकत्वापत्त्याऽपरमार्थसतोपिप्रपंचस्यवस्तुतःपरमार्थसद्विशेषत्वात्तत्रसद्वैलक्षण्यंनस्यादित्यर्थः ॥ सामान्यविधिमिति ॥ अनारोपितब्राह्मण्यवा

न्यजेतेतिविशेषाश्रवणादित्यर्थः । ब्राह्मण्यांब्राह्मणस्त्रियां । अब्राह्मणात्शूद्रांत्यजादेर्जातश्चंडालः । एतच्चात्यंतनिषिद्धतासूचनाय । ननुप्रतिलोमजानांयज्ञाधिकारेनिषेधवचनविरोधइत्यतआह ॥ निषेधस्यत्विति ॥ तथाचारोपितब्राह्मण्यवान्‌निषेधाविषयइतितस्यापिविधिविषयत्वापत्तिरितिभावः । तदनुगतं आरोपितानारोपितानुगतंसत्त्वसामान्यं । तस्यतंत्रत्वे सत्त्वसामान्यस्यतंत्रत्वे । स्वाप्नेन प्रातिभासिकत्वोपेतेन ॥ तत्फलस्येति ॥ ऐक्यापत्तिस्वर्गरूपफलस्येत्यर्थः । पारमार्थिकस्येत्येतत्‌द्वैत

पितब्राह्मण्यादिरपिनियोज्यःस्यात् । निषेधस्यतुआरोपितेनापिब्राह्मण्येनहीनोविषयःस्यात् । अस्तुवातदनुगतंसामान्यं तथापितस्यतंत्रत्वेस्वाप्नेनाद्वैतसाक्षात्कारेणाश्वमेधादिनाचतत्फलस्य द्वैतश्रुत्यादिनाचद्वैतस्य धूमाभासेनचवह्ने र्व्यावहारिकेणचविरुद्धधर्मेणपारमार्थिकस्यजीवेश्वरभेदस्य सिद्धिःस्यात् । अतएवधर्मितुल्यसत्त्वंवाअसद्विलक्षणत्वंवानतंत्रं । गौरवाच्च । ननुधूमाभास

स्यवह्नेरित्यत्राप्यनुषंजनीयं ॥ विरुद्धधर्मेणेति ॥ सर्वज्ञत्वाल्पज्ञत्वादिरूपविरुद्धधर्मेणेत्यर्थः । साधकत्वप्रयोजकीभूतस्यसत्त्वसामान्यस्यसत्त्वादितिभावः ॥ धर्मीति ॥ तादृशसत्त्ववान्‌धर्मी । तद्वान्‌हेतुःसाधकइत्यर्थः । अतएव धर्मिभूतयोर्विशिष्टयोर्जीवेशयोर्व्यावहारिकत्वेनतत्तुल्यसत्ताकेनासद्विलक्षणेनचविरुद्धधर्मरूपहेतुनापारमार्थिकजीवेश्वरभेदसिद्धिप्रसंगादेवेत्यर्थः । ननुव्यावहारिकेश्वरभेदसिद्धिर्भवत्येवेत्यस्वरसादाह ॥ गौरवाच्चेति ॥ सत्त्वेद्वैविध्याभावेनधर्मितुल्यसत्त्वासद्विलक्षण

त्वापेक्षयासत्त्वमात्रस्यसाधकत्वेतंत्रत्वोक्तौलाघवमित्यर्थः । धूमाभासेनपारमार्थिकवह्नेःसिद्धिःस्यादित्यत्रपरिहारंशंकते ॥ नन्विति ॥ कुतोव्याप्त्यभावइत्यतआह ॥ बहुलेति ॥ यथाधूममात्रेनवह्निव्याप्तिः किंतुबहुलोर्ध्वत्वाविच्छिन्नमूलत्वयुक्ते तथाआभासधूमेपिनवह्निव्याप्तिः किंत्वाभासभिन्नएवेत्यर्थः । व्याप्त्यर्थत्वात् व्याप्त्युपयोगित्वात् ॥ अस्याइति ॥ असतःसाधकत्वेसिद्धेधूमाभासस्यापिसाधकत्वंस्यादित्यतिप्रसंगवारणायबहुलोर्ध्वतादिवदाभासविविक्तत्वस्यापिव्याप्त्युपयोगित्वसिद्धिःतत्सिद्धौतदभावादेवासाधकत्वंधूमाभासस्यनासत्त्वादितिकल्पनायाःसिद्ध्याऽतिप्रसंगाभावेनासतःसाधकत्वसिद्धिरित्यन्योन्याश्र

स्यासाधकत्वंनासत्वात्किंतुव्याप्त्यभावात् बहुलोर्ध्वतादिवदाभासविवेकस्यापिव्याप्त्यर्थत्वादिति चेन्न । अस्याःकल्पनायाअसतःसाधकत्वसिद्धिसापेक्षत्वेनान्योन्याश्रयात् । आभासेप्यारोपितव्याप्तेरारोपिताभासविवेकस्यचसत्वाच्च । प्रकृतेपिदृश्यत्वस्यारोपितस्यब्रह्मण्यपिसत्वेनव्याप्त्यर्थ

यादित्यर्थः । आरोपितेति आभासविवेकस्यविशेषणं । तथाचव्यर्थमाभासविविक्तत्वविशेषणं । धूमाभासेव्यभिचारस्यतदवस्थत्वादितिभावः ॥ प्रकृतेपीति ॥ तथाचयथाह्रदादावारोपितेधूमेनव्याप्तिःकिंत्वाभासविविक्तेपर्वतवृत्तिधूमएव एवंब्रह्मण्यारोपितेदृश्यत्वेपिनव्याप्तिरस्तीतिव्याप्तिसिद्धयेप्रपंचेदृश्यत्वस्यसत्त्वंस्वीकार्यमित्यर्थः । साधकत्वार्थंवा साधकत्वोपयुक्तव्याप्त्यर्थंवा दृश्यत्वादेस्सत्त्वमावश्यकमितिनासतःसाधकत्वमितिभावः । किंच दृश्यत्वादिहेतोःसत्त्वमावश्यकं अन्यथाहेत्वाद्या

रोपस्यसर्वत्रसौलभ्येनासिद्ध्यादिविभागएवनस्यात् अतस्तदर्थंवास्तवसत्त्वमेववाच्यमित्याह ॥ हेत्वादीति ॥ ननुमिथ्यात्वानु मानेनासत्त्वेनबोधितानामपिपक्षहेत्वादीनांसाध्यव्याप्त्यादीन्प्रत्याश्रयत्वंभविष्यति वंध्यासुतोनवक्ताअत्यंताभावप्रतियोगित्वा दित्यत्रासतोपिसाधनंप्रत्याश्रयत्वदर्शनादित्यतआह ॥ आश्रयादेरिति ॥ आदिपदेनसाध्यसंसर्गग्रहणं । आश्रयसाध्यव्य धिकरणासिद्ध्योनदूषणमितिवचनेनआश्रयासिद्ध्यादेरदूषणत्वेनतस्यसत्त्वनियमाभावेपिव्याप्तिरेवहिप्रयोजिकेत्युक्तत्वेनतस्या

मेवहेत्वादिसत्वस्यापेक्षितत्वाच्च । हेत्वाद्यारोपस्यसर्वत्रसौलभ्येनासिद्ध्यादेरदोषत्वापाताच्च । आ श्रयादेस्सत्वनियमाभावेपिव्याप्त्यादेस्तन्नियमाच्च । नाप्यप्रातिभासिकत्वंतंत्रं तुच्छेऽतिप्रसक्तेः । नाप्यप्रातिभासिकसत्वंतंत्रं गौरवात् । व्यावहारिकतात्विकानुगतसत्वसामान्यस्याभावाच्च । नाप्यसद्विलक्षणत्वेसतिप्रातिभासिकवैलक्षण्यंतंत्रं अतिगौरवात् । अन्यथा प्रवृत्तौनसंसर्गग्रहो

श्चसदाश्रयकत्वनियमेनहेत्वादेःसत्त्वमावश्यकमितिभावः ॥ तुच्छइति ॥ असद्वैलक्षण्यघटितानिर्वाच्यत्वरूपप्रातिभासिकत्व स्यतुच्छेऽभावेनतस्याप्रातिभासिकत्वेनसाधकत्वंस्यादितिभावः ॥ गौरवादिति ॥ सत्त्वद्वैविध्यादिकल्पनमनादृत्यसत्त्वमात्र स्यैवसाधकतायांप्रयोजकत्वेलाघवमितिभावः । नन्ववस्तुसत्त्वमेवप्रयोजकं तत्राह ॥ व्यावहारिकेति ॥ पारमार्थिकसत्त्वाति रिक्तव्यावहारिकसत्वरूपव्यक्त्यभावादितिभावः ॥ अतीति ॥ उक्तसत्त्वापेक्षयेत्यर्थः ॥ अन्यथेति ॥ लघुनिसंभवेगुरुणोंगी

कारइत्यर्थः ॥ उपस्थितेति ॥ उपस्थितंयद्रूप्यत्वादिकंतस्यपुरोवृत्तिनियोऽसंसर्गः तदग्रहएवप्रवृत्तौहेतुःस्यात् । एवंचभ्रांतिर्न सिद्ध्येत् । संसर्गग्रहेभ्रमरूपंविशिष्टज्ञानंसिद्ध्येत् । एवंचसंप्रतिपन्नविशिष्टज्ञानेनैवप्रवृत्तिर्भवति तत्रासंसर्गस्याभावादेवतदग्र होस्ति तत्सादृश्यादसंसर्गाग्रहादिदंरजतमितिज्ञानादपिप्रवृत्तिर्भविष्यति विद्यमानस्याप्यसंसर्गस्याग्रहणसद्भावादितिप्राभाकरे णोक्तेत्वयावाच्यं निषेधद्वयगर्भत्वेनगौरवाल्लाघवात्संसर्गग्रहएवप्रवृत्तौहेतुरिति । एवंसति भ्रमरूपविशिष्टज्ञानसिद्धिरिति । तथाचलाघवानादरेणैतदपिनस्यात् साध्यंनसिद्धमित्यर्थः ॥ सदिति ॥ सतःसाधकत्वानंगीकारादितिभावः । नन्वसतःसाध

हेतुःकिंतूपस्थितासंसर्गाग्रहइतिभ्रांतिर्नसिद्ध्येत् । किंचासतःसाधकत्वंविप्रतिपन्नत्वात्साध्यं । तत्साधकंचनतावत्त्वन्मतेसत् । अपसिद्धांतात्नाप्यसत् प्रतिवादिनस्तत्साधकत्वेविप्रतिपत्यानव स्थानात् । नचसतःसाधकत्वेप्ययंदोषः । त्वन्मतेसतःसाक्षिणःसाधकत्वात् । उक्तंहि "साधकत्वं

कत्वमपिअसतैवसाधकांतरेणप्रतिवादिनंत्वांप्रतिसिद्ध्यतीतिचेत्तत्राह ॥ अनवस्थानादिति ॥ ननुसतःसाधकत्वमपिविप्रति पन्नत्वात्साध्यं तत्साधकंचमानं तावन्मांप्रत्यसिद्धं । तथाहि । नतावत्सतःसाधकत्वंसतासाध्यते ममासिद्धेः । नाप्यसता त वासिद्धेरित्याशंक्यनिराकरोति ॥ नचेति ॥ नसतःसाधकत्वंमयासाधनीयं त्वन्मतेसतःसाक्षिणोऽज्ञानादिसाधकत्वस्यासिद्ध त्वादित्याह ॥ त्वन्मतेपीति ॥ तथाचसतःसाधकत्वमुभयसंमतमित्यर्थः । अत्रानुव्याख्यानसंमतिमाह ॥ उक्तंहीति ॥

साक्षिणाऽज्ञानादिसिद्धिमिच्छतातेनमायावादिनासतस्साधकत्वंस्वीकृतमित्येवपरंतुतन्नसंभवति । अविशेषस्यसाधकतापुनःसाध्यैव नतुसिद्धा सर्वशक्तिरहितस्यशून्यवत्साधकताऽयोगादित्यर्थः ॥ औत्सर्गिकेति ॥ धूमादिग्राहकस्यज्ञानस्योत्सर्गतःप्रमाणत्वात्प्रामाण्यस्यस्वार्थसत्त्वपर्यंतत्वात्प्रमाणसिद्धानांसतांधूमादीनांसाधकत्वस्यतत्साधकत्वेपर्यवसानादित्यर्थः ॥ उपायांतरेति ॥ लोकमर्यादासिद्धोपायातिरिक्तोपायाभावेनेत्यर्थः ॥ स्वच्छायेति ॥ यथास्वकीयाच्छायास्वेनैवोलंघितुंनशक्यतेएवंपर्वतवर्तिनएवसाधकत्वंनतुबाष्पारोपितधूमस्येत्येवंलोकसिद्धंयत्सतःसाधकत्वंतदप्युलंघितुंनशक्यतइत्यर्थः । नन्वसतःसाध

सतस्तेनसाक्षिणासिद्धिमिच्छता। स्वीकृतंह्यविशेषस्साध्यासाधकतापुनरिति"। औत्सर्गिकप्रामाण्येनसिद्धत्वाच्च। तत्रापिव्यवहारेउपायांतराभावेनस्वच्छायावदुर्लंघ्यलोकमर्यादासिद्धत्वाच्च। नच सिद्धिरप्यसतीत्युक्तेनिस्तारः। अन्योन्याश्रयात् । अन्यथा प्रतीतिरप्यत्यंतासतीतिसुवचत्वेन

कत्वंनास्तीतिवदतांलौकिकानामयमभिप्रायः। असतोजायमानासिद्धिः सतीप्रमारूपा नभवतीति मयात्वसतोऽसत्सिद्धिरुच्यतइति नममलोकमर्यादोलंघनमित्यतआह ॥ नचेति ॥ अन्योन्येति ॥ असतःसाधकत्वेसिद्धेऽसतःसाधकत्वंनास्तीतिलोकप्रसिद्धेर्विषयांतरपरत्वं लोकप्रसिद्धेर्विषयांतरपरत्वेच तद्विरोधाभावादसतोपिसाधकत्वंसिद्ध्यतीत्यन्योन्याश्रयइत्यर्थः ॥ अन्यथेति ॥ लोकमर्यादातिक्रमइत्यर्थः ॥ प्रतीतिरिति ॥ असच्चेन्नप्रतीयेतेतिप्रतीत्यन्यथानुपपत्तिरूपार्थापत्त्याप्रपंचेऽसद्वै

लक्षण्यंसाध्यतेतन्नस्यात् । लोकमर्यादासिद्धायारूप्यादिप्रतीतेरप्यत्यंतासत्त्वस्यशून्यवादिनावक्तुंशक्यत्वादित्यर्थः ॥ सल्लक्षणेति ॥ सतस्साधकस्ययल्लक्षणंपक्षवृत्तित्वादिरूपंतद्योगित्वंसाधकत्वेतंत्रंसल्लक्षणायोगित्वमसाधकत्वेतंत्रमित्यर्थः । तच्चपर्वतवृत्तिधूमेऽस्तिअतस्तत्रसाधकत्वंनतुतदाभासइतिनातिप्रसंगः । प्रकृतेदृश्यत्वादौचसल्लक्षणयोगित्वमस्तीतिसाधकत्वंयुक्तमिति भावः ॥ असत्त्वइति ॥ दृश्यत्वादिभिरेवप्रयोगैःप्रपंचांतर्गतस्यहेत्वादेरपिमिथ्यात्वबोधनेनासत्त्वापत्त्यासतःसाधकस्ययल्ल

प्रतीत्याअसद्वैलक्षण्यंनसिध्येत् । एतेनसल्लक्षणयोगित्वायोगित्वेएवसाधकत्वासाधकत्वयोस्तंत्रे नतुसत्वासत्वेइतिखंडनोक्तंनिरस्तं । हेतुव्याप्त्यादेरसत्त्वेऽसिद्ध्यव्याप्त्याद्यसल्लक्षणापाताच्च । एतेनमिथ्यात्वाविशेषेपिस्वप्नवद्धेतुतदाभासव्यवस्थेतिनिरस्तं । तद्वदेववास्तवसाध्यासिद्ध्यापातात् ।

क्षणंपक्षवृत्तित्वव्याप्तिमत्त्वादिरूपंतद्योगित्वाभावेनपक्षवृत्तित्वव्याप्त्यादिराहित्यरूपासत्साधकलक्षणयोगित्वप्राप्तेर्नसाधकत्वंयुक्तमित्यर्थः ॥ स्वप्नवदिति ॥ यथास्वप्नप्रतीतयोर्धूमतदाभासयोरुभयोरपिमिथ्यात्वाविशेषेपितत्रकश्चनसद्धेतुःसाधकत्वेनव्यवह्रियतेकश्चनतदाभासोऽसाधकत्वेन एवमिहापिदृश्यत्वादेर्धूमाभासादेश्चमिथ्यात्वाविशेषेपिहेतुतदाभासव्यवस्थयासाधकत्वाद्युपपत्तेरित्यर्थः । एतेनेत्युक्तमेवविशदयति ॥ तद्वदेवेति ॥ स्वप्नदृष्टधूमादिनावास्तववह्निसिद्ध्यदर्शनादिहापिदृश्यत्वादिनावा

स्तवमिथ्यात्वरूपसाध्यसिद्धिर्नस्यादित्यर्थः । उपसंहरति ॥ तस्मादिति ॥ असत्यादिति ॥ स्वबोधितमिथ्यात्वकविश्वांतर्गतत्वेनासत्यदृश्यत्वादेस्सकाशान्नसत्यभूतमिथ्यात्वादिसिद्धिरितिबाधादिकंदुर्वारमितिभावः ॥ साधकंचेदिति ॥ किंचिद्धेत्वादिकंचेद्यदिसाधकंतर्हितस्यपरमार्थास्तितापारमार्थिकसत्त्वंअवश्यमपेक्षितंभवेदेव । परमार्थसत्त्वस्यैवसाधकत्वेतंत्रत्वादितिभावः । नन्वपरमार्थसतोपिसाधकत्वंकिंनस्यादित्यतआह ॥ सिद्धिर्नेति ॥ सवितृसुषिरादावपिसत्यस्यैवसाधकत्वमित्यनुपद

तस्मान्नासत्यात्सत्यसिद्धिः । तदुक्तंवार्तिकेबौद्धंप्रति "साधकंचेदवश्यंचपरमार्थास्तिताभवेत् । सिद्धिर्नापरमार्थेनपरमार्थस्ययुज्यतइति" । उक्तंचबौद्धाधिकारे "लोकस्यापिव्यतिक्रमेविचारस्ययादृच्छिकवाङ्मात्रत्वापत्तेरिति" ॥ असतःसाधकत्वबाधकविवरणं ॥ २१ ॥ ७ ॥ नन्वसत्यमपिप्रतिबिंबंबिंबस्य स्वाप्नार्थश्चशुभाशुभयोः स्फटिकलौहित्यंचोपाधिसंनिधानस्य रेखारोपितवर्णश्चार्थ

मेववक्ष्यतइतिभावः ॥ लोकस्यापीति ॥ सदसतोःसाधकत्वासाधकत्वातिक्रमेविचारस्यदैववशसंपन्नवनस्थवेणुनिस्सृतस्वनवद्यादृच्छिकवाङ्मात्रत्वापत्त्याप्रमाणसिद्धत्वाभावापातेनार्थनिश्चायकत्वाभावापातात् । अतोलोकमर्यादानुसारेणैवसतएवसाधकत्वंनासतइत्यंगीकार्यमितिभावः ॥ असतस्साधकत्वबाधकविवरणं ॥ २१ ॥ प्रतिबिंबंबिंबस्येति ॥ अयंप्रदेशोबिंबवान्क्वचित्स्थलेप्रतिबिंबयुक्तत्वादित्येवंबिंबानुमापकत्वंप्रतिबिंबेदृष्टमित्यर्थः । स्वाप्नार्थःस्वाप्नमंत्रादिरूपः । उत्तरत्रस्वाप्नमंत्रो

पीतिव्यवहारादितिज्ञेयं ॥ अर्थभेदस्येति ॥ वृक्षहस्तिरूपार्थभेदस्येत्यर्थः ॥ त्वन्मतेपीति ॥ स्वच्छदर्पणादिषुप्रतिफलनेनप रावृत्तानायनरश्मयोग्रीवास्थमुखेनसंबद्धाग्रीवास्थमेवमुखंगृह्णंति । तत्रैवदर्पणस्थत्वंग्रीवास्थमुखभिन्नत्वादिकंचारोपयंति । य थोक्तंत्वया । "दर्पणाभिहतादृष्टिःपरावृत्यस्वमाननं । व्याप्नुवंत्याभिमुख्येनव्यत्यस्तंदर्शयेन्मुखमिति" । लिंगालिंगिभावस्तुवृ क्षशिंशुपावदितिपरैरंगीकारात् । अतोग्रीवास्थमुखस्यैवप्रतिबिंबतायास्त्वयोक्तत्वात्तस्यप्रतिबिंबस्वरूपस्यसत्यत्वादित्यर्थः ॥

स्य वर्णदैर्घ्यादिकंचनगोनागइत्यादावर्थभेदस्य शंकाविषंचमरणस्य सवितृसुषिरादिचारिष्टादेः साधकंदृष्टमिचेन्न । प्रतिबिंबस्वरूपस्यत्वन्मतेपिसत्यत्वात् । स्वाप्नस्यचमन्मतेसत्यत्वात् । त्वन्मते पिपुरुषंकृष्णंकृष्णदंतंपश्यतीत्यादिश्रुत्याज्ञानमेवसूचकं । अन्वयव्यतिरेकाभ्यांचस्वाप्नकामिन्या दिज्ञानमेवार्थक्रियाकारीत्युपपत्तेः । स्फटिकलौहित्यस्यापिप्रतिबिंबत्वात् । रेखायाश्चवर्णे पदस्या

ज्ञानमेवेति ॥ तच्चसत्यमेवेतिभावः । ननुस्वाप्नकामिन्यादेश्चरमधातूत्सर्गाद्यर्थक्रियाहेतुत्वदर्शनात्स्वाप्नपदार्थस्यैवसाधकत्वंन तुतज्ज्ञानस्येतिचेत्तत्राह ॥ अन्वयेति ॥ जाग्रतिअन्वयव्यतिरेकाभ्यांतज्ज्ञानस्यैवार्थक्रियाहेतुत्वंदृष्टंनस्वरूपसत्कामिन्यादेः अतस्तदृष्टांतेनस्वप्नेपितथात्वंकल्प्यतेऽतस्सत्यस्यैवसाधकत्वमित्यर्थः ॥ लौहित्यस्यापीति ॥ लोहितिमविशिष्टजपाकुसुमस्य तदवयवसमुदायस्यवेत्यर्थः । तेनगंधरसादेरिवनरूपस्यप्रतिबिंबोदृष्टचरइतिचोद्यानवकाशः । पदस्यार्थइववर्णोरेखायाःसंकेति

तत्वेनेत्यर्थः । वर्णस्यरेखास्मारितत्वेहेतुरयं । वर्णश्चसत्यएवेतिभावः । अत्रपदस्यार्थसंकेतितत्वेनेतिपररीत्यैव । स्वमतेस्वाभाविकीशक्तिरेवेत्यंगीकारात् । नित्ययोगोपिशब्दानामर्थेनैवेत्युक्तेः ॥ अतएवेति ॥ रेखायावर्णेसंकेतितत्वादेवेत्यर्थः । रेखास्मारितवर्णेषुदीर्घत्वंस्वतोस्त्येवतच्चक्षुरादिवत्स्वरूपसदेवार्थविशेषधीजनकंनतुज्ञाततयेत्येकःपक्षः । वस्तुतोदीर्घत्वंवर्णेषुनास्त्येव किंत्वारोपितमेव तच्चज्ञातंसदेवतथेत्यन्यःपक्षः । तत्राद्यपक्षेदीर्घत्वंनिर्वक्ति ॥ दीर्घत्वादिकमिति ॥ वर्णेषुदीर्घत्वंनामदीर्घध्वनिसंनिहितत्वमेवनान्यदित्यर्थः ॥ तद्व्यक्तत्वरूपमिति ॥ दीर्घध्वनिव्यक्तत्वाख्योधर्मइत्यर्थः । तथाचवस्तुतोदीर्घोयोध्वनि

र्थइव संकेतितत्वेनरेखास्मारितवर्णस्यैवार्थबोधकत्वात् । अतएवरेखांदृष्ट्वावर्णमुच्चारयंति । नगो

नागइत्यादौदीर्घत्वादिकंस्वरूपसदेवार्थविशेषधीहेतुश्चेदीर्घध्वनिसाहित्यरूपंवातद्व्यक्तत्वरूपंवादी

र्घत्वंवर्णगतंसत्यमेवहेतुः । नध्वनिगतंवर्णेष्वारोपितंहेतुः । ज्ञातंसद्धेतुश्चेद्वक्ष्यमाणरीत्यासवितृसु

षिरादिज्ञानमिवार्थानवच्छिन्नंसत्यंज्ञानमेवहेतुः । एतेन "यथासत्यत्वाविशेषेपिचक्षुषारूपज्ञानमे

स्तद्व्यक्तत्वरूपोधर्मोवर्णेष्वस्तितदेवदीर्घत्वंनततोतिरिक्तं तत्सत्यमेवेतिभावः । तथाचैतादृशदीर्घत्वंपारिभाषिकमितिभावः । द्वितीयेऽसत्यस्यैवसाधकत्वंप्राप्तमितिचेत्तत्राह ॥ ज्ञातंसदिति ॥ आरोपितंसदित्यर्थः । ननुज्ञेयभेदानवच्छिन्नस्यज्ञानमात्रस्यातिप्रसंगेनतदवच्छिन्नस्यसिद्ध्यंगतायांविशिष्टस्ययद्भवतीतिन्यायेनासतोप्यर्थस्यहेतुत्वंप्राप्तमेवेत्यतउक्तं ॥ अर्थानवच्छिन्नमिति ॥ एतच्चोत्तरत्रापाकरिष्यामइतिभावः ॥ एतेनेति ॥ आद्यपक्षानुसारेणवर्णेषुदैर्घ्यस्यसत्त्वेन द्वितीयेतुसत्यस्यैतज्ज्ञानस्यै

वसाधकत्ववचनेनेत्यर्थः ॥ यथेति ॥ असतःसाधकत्वेपरेणोक्ते ऽसत्त्वाविशेषाद्धूमाभासस्यापिवह्निसाधकत्वंस्यादित्यतिप्रसंगेस्माभिरभिहितेसति यथेत्यादिवाचस्पतिनाजल्पितमित्यर्थः । सदर्थभेदरूपंप्रमेयं ॥ धात्विति ॥ साचसत्यैवेतिभावः । धातुव्याकुलतायांचभयं भयेचविषशंकारूपंज्ञानमेव हेतुस्तच्चसत्यमेवेतिहृदयं ॥ आत्मवदिति ॥ अबाधादितिभावः । ननुसत्यभूतस्यमंत्रस्यकथंस्वप्नेभानमित्यतआह ॥ स्वप्नमिति ॥ नन्वथापिभारतयुद्धादौघटोत्कचादिसृष्टमायिकगजादेरर्थक्रियाका

वजायतेनतुरसज्ञानंतथैवासत्वाविशेषेपिवर्णदैर्घ्यादिनासत्यंज्ञायते नतुधूमाभासादिने" तिवाचस्पत्युक्तंनिरस्तं । शंकाविषेपिशंकानिमित्तभयजन्याधातुव्याकुलतैवमरणहेतुः नतुविषं । स्वाप्नमंत्रोपिफलसंवादीचेत्स्वप्नप्रतीतत्वेप्यात्मवत्सत्यएवस्वयंप्रतिभातवेदवदृष्टाभासते । भारतयुद्धादौघटोत्कचादिभिःशक्तिविशेषात्सृष्टमर्थक्रियाकारिगजादिकंसत्यमेव । सवितृसुषिररज्जुसर्पादिज्ञानमेवचारिष्टभयादिहेतुर्नत्वर्थः । सत्यप्यर्थेतदज्ञानेभयाद्यभावात् । नचैवमनुमितिंप्रत्यपिहे

रित्वंदृष्टमितिचेत्तत्राह ॥ भारतयुद्धादाविति ॥ वक्ष्यमाणरीत्येतिपूर्वमुक्तं तदुपपादयति ॥ सवित्रिति ॥ नन्वर्थएवहेतुःकिंनस्यादित्यतआह ॥ सत्यप्यर्थइति ॥ अभावादिति ॥ ज्ञानस्यैवहेतुत्वंनार्थस्येतिभावः ॥ एवमिति ॥ ज्ञानस्यैवारिष्टादिहेतुत्वंनार्थस्येत्यंगीकारइत्यर्थः ॥ अनुमितिमिति ॥ प्रमानुमितिंप्रतीत्यर्थः ॥ व्याप्त्यादीति ॥ अतद्गुणसंविज्ञान

बहुव्रीहिणाऽबाधितत्वंग्राह्यं । तथाचाबाधितत्वज्ञानमेवेत्यर्थोद्रष्टव्यः । यथाश्रुतेतुव्याप्त्यादिप्रमायानहेतुत्वंतथात्वेगंधप्रागभावाव च्छिन्नोघटोगंधवान्पृथिवीत्वादित्यत्रव्याप्त्यादिप्रमाजन्यायाअप्यनुमितेर्बाधितत्वेनप्रमात्वाभावादसंगतिःस्यादित्यवधेयं ॥ नतुहे त्वादीति ॥ अबाधितविषयत्वमित्यर्थः ॥ तज्ज्ञानेति ॥ अबाधितत्वज्ञानेत्यर्थः। तथाचहेत्वाभासव्यावृत्त्यर्थंअबाधितत्वप्रमायाए वानुमितिप्रमांप्रतिप्रयोजकत्वेवाच्येप्रमात्वघटकाबाधितत्वरूपार्थस्यापितत्प्रयोजकत्वंप्राप्तमित्यर्थः । इत्येवंव्याचक्षते । वस्तुतस्तु व्याप्त्यादिज्ञानमेवेत्यादियथास्थितएवास्तुगंधप्रागभावावच्छिन्नोघटोगंधवान्इत्यत्रतुबाधादनुमितिरेवनोत्पद्यतइतितार्किकैरंगी

तुव्याप्त्यादिज्ञानमेवकारणंनतुहेत्वादीतिवाच्यं । तज्ज्ञानमात्रस्यहेत्वाभासेपिसत्त्वात् । त्वन्मते वृत्तिरूपस्यतत्प्रतिबिंबितचैतन्यरूपस्यवाज्ञानस्यापिमिथ्यात्वाच्च । सत्यसर्पादेस्त्वभिसर्पणदंश

कृतत्वेनातिप्रसंगाभावादितिसंप्रदायः । ज्ञानमात्रस्यहेत्वाभासेपिसत्त्वात्प्रमानुमितेरभावात्तत्प्रमायाएवहेतुत्वेवाच्येप्रमात्वस्यार्थस त्ताघटितत्वाद्धेतुव्याप्त्यादीनामपिहेतुत्वंप्राप्तमेवेतिसंप्रदायः। किंच न हेत्वादिज्ञानमात्रस्यप्रमानुमितिंप्रति हेतुत्वं । तथाहि। हेत्वा दिज्ञानं त्वन्मतेवृत्तिर्वा वृत्तिप्रतिबिंबितचैतन्यंवा विशिष्टं तदुभयमपिमिथ्याभूतमेव । ततश्चनमिथ्याभूतस्यहेतुव्याप्त्यादिज्ञानेप्र मात्वंनास्तीतिचेन्न । तत्रव्याप्त्यादिज्ञानस्यजनकत्वाभावात् यज्जातीयानंतरं नियमेनकार्योत्पत्तिसत्त्वमेवजनकत्वमभिप्रेतमितिन दोषइतिज्ञेयं । ननुभयादिरूपार्थक्रियातावत्सर्पजन्या साकथंसर्पभिन्ना तज्ज्ञानात्स्यादतोऽसतःसर्पस्यैवकारणत्वमित्यतोनभयादि

कंसर्पकार्यमित्युच्यतेकिंतुसर्पज्ञानकार्यमिति सन्निहितेपिसर्पेतमजानानस्यभयाद्यदर्शनात् सर्पकार्यंत्वभिसर्पणादिकमेवेत्याह ॥ सत्येति ॥ अतिप्रसंगइति ॥ सर्पाभावघटादिज्ञानस्यापिभयहेतुत्वापत्तिरित्यर्थः ॥ हेतुःस्यादिति ॥ अवच्छिन्नस्ययद्भवति तत् अवच्छेदकस्यापिभवतीतिनियमादित्यर्थः । अस्यनियमस्यव्यभिचारमाह ॥ घटेत्यादिना ॥ घटावच्छिन्नस्यघटात्यंताभावस्य घटदेशमृत्पिंडभिन्नदेशत्वेपिघटस्यतदभाववदित्यर्थः । घटावच्छिन्नस्यध्वंसस्यघटकालभिन्नकालत्वेपिघटस्यतदभाववदित्य

नादिरेवार्थक्रियानतुभयादिः । नन्वर्थानवच्छिन्नस्यज्ञानस्यहेतुत्वेऽतिप्रसंगः । अवच्छिन्नस्यहेतुत्वेऽर्थोपिहेतुःस्यादितिचेन्न । घटावच्छिन्नस्यघटात्यंताभावध्वंसादेर्घटदेशकालभिन्नदेशकालादित्वेपि अवच्छेदकस्यघटस्यतदभाववत् घटेच्छाब्रह्मज्ञानयोर्घटज्ञानवेदांतसाध्यत्वेपिघटब्रह्मणोस्तदभाववत्। घटप्रागभावस्यघटंप्रति विशेषदर्शनाभावस्यचभ्रमंप्रति विहितनिषिद्धकरणाभावयोः प्रत्यवाया

र्थः ॥ घटब्रह्मणोरिति ॥ घटस्यनित्यस्यब्रह्मणश्चघटज्ञानवेदांतसाध्यत्वाभाववदित्यर्थः ॥ विहितनिषिद्धकरणाभावयोरिति ॥ विहितकरणाभावनिषिद्धकरणाभावयोरित्यर्थः ।प्रत्यवायादिमित्यादिपदेनप्रत्यवायाभावसंग्रहः । ततश्चघटप्रागभावस्यघटं प्रतिहेतुत्वेपिघटस्यतदभाववत् विशेषदर्शनाभावस्यभ्रमंप्रतिहेतुत्वेपि अवच्छेदकस्यविशेषदर्शनस्यतदभाववत् विहितकरणाभावस्यप्रत्यवायहेतुत्वेपिअवच्छेदकस्यविहितकरणस्यप्रत्यवायंप्रतिहेतुत्वाभाववत् निषिद्धकरणाभावस्यप्रत्यवायाभावंप्रतिहे

तुत्वेपि अवच्छेदकस्य निषिद्धकरणस्य प्रत्यवायाभावहेतुत्वाभाववत् स्वर्गकामनायायागंप्रतिहेतुत्वेपिअवच्छेदकस्यस्वर्गस्ययागहेतुत्वाभाववत् अतीतादिवस्तुस्मृत्यादेर्दुःखादिकंप्रतिहेतुत्वेपिअवच्छेदकस्यातीतादेःतदभाववत् असद्विषयकपरोक्षज्ञानस्यतद्व्यवहारंप्रतिहेतुत्वेपिअत्यंतासतस्तद्व्यवहारंप्रतिहेतुत्वाभाववदितिविवेकः । नचस्वर्गस्यातीतादेरसतश्चयागदुःखव्यवहारान्प्रतिहेतुत्वंकिंनस्यादितिवाच्यं। कामनावत्कामनाविषयस्यापिस्वर्गस्यजनकत्वेतस्यपूर्ववृत्तित्वघटितत्वात्सुखापरपर्यायस्यस्वर्गस्यप्राक्स

दिंप्रति स्वर्गकामनायाश्चयागंप्रतिअतीतादिस्मृत्यादेर्दुःखादिकंप्रतिअसद्विषयकपरोक्षज्ञानस्यचतद्व्यवहारंप्रतिहेतुत्वेपि अवच्छेदकस्यघटस्य विशेषदर्शनस्य विहितनिषिद्धकरणयोः स्वर्गस्या तीतादे रत्यंतासतश्चतदभाववत् चिकीर्षितघटबुद्धेर्घटहेतुत्वेपिघटस्यतदभाववत् ब्रह्मज्ञानस्यतदज्ञाननिवर्तकत्वेप्युदासीनस्वभावस्यब्रह्मणस्तदभाववत्। ब्रह्मज्ञानस्यजगत्प्रतिपरिणामिकारणत्वेपिब्रह्मणस्तदभाववच्चा र्थावच्छिन्नस्यहेतुत्वेपिअवच्छेदकार्थस्यकुरूणांक्षेत्रेवसतीत्यत्रकुरूणामिव

त्त्वापत्त्यातत्कामनैवव्याहन्येत। सिद्धेइच्छाविरहात् अतीतस्यापिदुःखजनकत्वेकार्याव्यवहितपूर्वसमयेसत्त्वापत्तिः असतोजनकत्वेतुनिस्स्वरूपत्वव्याघातइत्यवधेयं ॥ चिकीर्षितेति ॥ कर्तुमिष्टेत्यर्थः। अनागतेतियावत्। अवर्तमानत्वोपपादनायेदंविशेषणं। तथाचघटबुद्ध्यभावेघटंकरिष्यामीतीच्छानुदयेनघटोत्पत्त्यनुपपत्तेर्घटबुद्धेर्घटंप्रतिहेतुत्वेपिघटस्यतदभाववदित्यर्थः । ब्रह्मणस्तदनिवर्तकत्वेहेतुरुदासीनस्वभावस्येति। कर्तृत्वकरणत्वाद्युदासीनस्वभावस्यानिवर्तकत्वाद्यनुपपत्तेरित्यर्थः॥ अर्थावच्छिन्नस्येति ॥

ज्ञानस्येतिशेषः ॥ ताटस्थ्येनेति ॥ उपलक्षणत्वेनेत्यर्थः । संगृह्णाति ॥ तथाचेति ॥ सर्पपूर्वकंनैवकारणमितिसंबंधः । तस्यदृष्टांतः फलेच्छेति। फलंस्वर्गापरपर्यायसुखमित्यर्थः। फलेच्छासाध्ययागादौफलस्यापिकारणत्वे तस्यप्राक्सत्त्वापत्त्याकामनैवायुक्ता। सिद्धेइच्छाविरहादितिभावः। ननुकेवलस्यातिप्रसंगित्वादसतोर्थस्यावच्छेदकत्वमंगीकृत्य अवच्छेदकत्वंनामव्यावर्तकत्वं तच्चव्यावृत्तिप्रत्ययजनकत्वमित्यसतोपिहेतुत्वंप्राप्तमित्याशंकते ॥ नन्विति ॥ यतइति ॥ व्यावृत्तिधीजनकत्वंनव्यावर्तकत्वं सत्यपिदंडविशिष्टदेवदत्तेतदज्ञानेव्यावृत्त्यज्ञानात् अतोव्यावृत्तिधीहेतुधीविषयत्वमेवव्यावर्तकत्वं दंडविशिष्टोदेवदत्तइतिज्ञाना

ताटस्थ्येनाहेतुत्वोपपत्तेः। तथाच रज्जुसर्पादिधीसाध्यभयादौसर्पपूर्वकं। फलेच्छासाध्ययागादौफ

लवन्नैवकारणं। नन्वथापिमिथ्यार्थज्ञानंप्रतिव्यावृत्तिधीहेतुत्वरूपव्यावर्तकत्वमस्तीत्यसतोपिहेतुते

तिचेन्न। यतोव्यावृत्तिधीहेतुधीविषयत्वमेवव्यावर्तकत्वं। सत्यपिदंडेतदज्ञानेव्यावृत्त्यज्ञानात्। नन्व

देवदत्तेऽदंडिव्यावृत्तिधीर्जायते तद्विषयत्वंनामतत्प्रकारत्वंविवक्षितं। अन्यथाविशेष्येऽतिव्याप्तेः । अतोऽविशिष्टात्व्यावृत्तिधीहेतुभूतायाधीः दंडप्रकारिका देवदत्तविशेष्यका विशिष्टधीः तत्प्रकारत्वंदंडेस्ति एवमिहापिसर्पज्ञानेऽसर्पज्ञानाद्व्यावृत्तिबुद्धिर्भवति तज्जनिकायाधीःइदंसर्पज्ञानमित्येवंसर्पप्रकारिकातज्ज्ञानविशेष्यकाऽनुव्यवसायरूपाविशिष्टधीः तत्प्रकारत्वंसर्पेऽस्ति अतोनमिथ्यार्थस्यव्यावृत्तिधीजनकत्वं किंतुतज्ज्ञानस्यैवप्राप्तमितिनकोपिदोषः। सत्यपिदंडइत्येतत् दंडविशिष्टेदेवदत्ते तदज्ञाने दंडप्रकारकदेवदत्तविशेष्यकविशिष्टज्ञानाभावेऽविशिष्टाद्व्यावृत्त्यज्ञानादितिव्याख्येयं । नन्वथापिज्ञानस्यैवहेतुत्वांगीकारेपिअ

सत्यस्यैवहेतुत्वंसिद्ध्यति ज्ञानस्यभयादिजनकत्वेऽतिप्रसंगभयायसर्पाद्यवच्छिन्नत्वंकारणतावच्छेदकंवाच्यं । तथाचावच्छेदकीभूतस्यसर्पादेर्मिथ्यात्वेन तदवच्छिन्नज्ञानस्यापिमिथ्यात्वंप्राप्तमित्याशंकते ॥ नन्विति ॥ स्यादिदंयद्यवच्छेदकस्ययद्धर्मवति तत्अवच्छिन्नस्यापीतिनियमःस्यात् नचैवंव्यभिचारादित्याह ॥तुच्छस्येति॥ अवच्छेदकीभूतस्यतुच्छस्य तुच्छत्वेपितदवच्छिन्नज्ञाने तुच्छवैलक्षण्येचतुच्छत्वस्यादर्शनादित्यन्वयः। अविद्यानिवृत्तिःपंचमप्रकारावा । आत्मैवाज्ञानहानिरितिवचनात् अधिकर

थाप्यवच्छेदकस्यामिथ्यात्वेऽवच्छिन्नस्यापितन्नियमादसत्यस्यहेतुतेतिचेन्न । तुच्छस्यज्ञानेतुच्छाद्वैलक्षण्येचतुच्छत्वस्य प्रातिभासिकाद्वैलक्षण्येचप्रातिभासिकत्वस्यपंचमप्रकारायामात्मस्वरूपभूतायां वाऽनिर्वचनीयाज्ञाननिवृत्तौचचतुर्थप्रकाररूपानिर्वचनीयत्वस्य पारमार्थिकात्मस्वरूपेतद्भिन्नेवानृतद्वैतस्याभावेततोव्यावृत्तौचानृतत्वस्यादर्शनात् । तत्रावच्छेदकानामसदादीनांताटस्थ्येऽत्रापिविषय

णातिरिक्ताभावाभावादात्मस्वरूपावेति मतद्वयसद्भावादाह ॥ पंचमेति ॥ चतुर्थप्रकारानिर्वचनीयत्वाभावोपपादनायपंचमप्रकारेत्यादिविशेषणं । अत्रापिमतद्वयसद्भावादाह ॥ परमार्थिकेति ॥ अनृतंयद्द्वैतंतस्याभावेइत्यर्थः । ततः अनृतात् द्वैतात् । अनृतद्वैताभावस्यानृतव्यावृत्तेश्चपारमार्थिकत्वात् पारमार्थिकात्मस्वरूपत्वमेव । तद्भिन्नत्वेपिनाद्वैतहानिः अभावरूपधर्मानाद्वैतंघ्नंतीतिमंडनवचनादितिध्येयं ॥तत्रेति॥ तत्र तुच्छज्ञानादौ । असदादीनांताटस्थ्ये उपलक्षणत्वे अत्रापि

सर्पज्ञानादौ विषयस्योपलक्षणत्वमेवास्त्वित्यर्थः ॥ अर्थानवच्छिन्नमेवेति ॥ एवंचावच्छेदकस्यमिथ्यात्वेऽवच्छिन्नस्यापित न्नियमादसत्यस्यापिहेतुतेतिचोद्यानवकाशइतिभावः ॥ अतिप्रसंगइति ॥ विषयातिरिक्तस्यव्यावर्तकस्यज्ञानेऽभावात्विषयस्य चव्यावर्तकत्वानंगीकारेज्ञानमात्रस्यैवभयादौहेतुत्वांगीकारापातेनसर्पाभावघटादिज्ञानमपिभयादिहेतुःस्यादित्यतिप्रसंगइत्यर्थः । विषयावच्छेदंविषयरूपंव्यावर्तकं ॥ स्वरूपातिरिक्तेति ॥ विषयतत्संबंधयोर्ज्ञानेनसहस्वरूपसंबंधातिरिक्तद्विष्ठसंबंधस्याभा

स्तथास्तु । वस्तुतस्त्वर्थानवच्छिन्नमेवज्ञानंहेतुः। नचातिप्रसंगः। विषयावच्छेदमनपेक्ष्यस्वतएवस र्पज्ञानस्यासर्पज्ञानाद्व्यावृत्तेः। तथाहि सर्पज्ञानमसर्पज्ञानात्तावद्व्यावृत्तं व्यावृत्तिश्चव्यावर्तकाधीना नचाविषयस्तत्संबंधोवाव्यावर्तकः। स्वरूपातिरिक्तद्विष्ठसंबंधाभावात्।असंबद्धस्यचाव्यावर्तकत्वा त्। अथसंबंधांतरमंतरेणविशिष्टव्यवहारजननयोग्यंस्वरूपमेववा ज्ञानमात्रनिष्ठधर्मोवासंबंधः।

वादित्यर्थः ॥ असंबद्धस्येति ॥ विषयस्यतत्संबंधस्यचज्ञानेनासंबद्धस्येत्यर्थः । ज्ञानंप्रत्यव्यावर्तकत्वात् । अन्यथातिप्रसंगः स्यादित्यर्थः । स्वरूपमेवसंबंधइत्यन्वयः । किमिदंस्वरूपसंबंधत्वमित्यतस्तन्निर्वक्ति ॥ संबंधांतरमिति ॥ घटसंयुक्तेपटेस्वरूप संबंधत्वंमाभूदितिसंबंधांतरमंतरेणेत्युक्तं । घटवद्भूतलस्यचत्वरीयघटाभावेनसहसंबंधांतरशून्यत्वसद्भावेनस्वरूपसंबंधप्रसंगवा रणायविशिष्टप्रत्ययजनकत्वमित्युक्तं । विशिष्टप्रत्ययाजनकेनित्यातींद्रियाभावभूतलयोः स्वरूपसंबंधेऽव्याप्तिवारणाययोग्ये

त्युक्तं । योग्यत्वंसहकारिविरहप्रयुक्तकार्याभावः । एतादृशयोग्यतायास्तत्रापिसद्भावान्नाव्याप्तिः । अयमात्मेतिआत्मविषयकज्ञानस्यात्मनाविषयविषयिभावलक्षणस्वरूपसंबंधसद्भावात्तत्राव्याप्तिःस्यात् समवायस्यैवसंबंधांतरस्यसत्त्वादतउद्देश्यप्रतीतिनिर्वाहकेतिसंबंधांतरेविशेषणंदेयं । दंडीदेवदत्तः रूपीघटइत्यत्रसंयोगसमवाययोरुद्देश्यविशिष्टप्रतीतिनिर्वाहकत्वेसत्यपि अयमात्मेतिविषयविषयिभावरूपा याउद्देश्यप्रतीतिःतन्निर्वाहकत्वंसतोपिसमवायस्यनास्तीतिउद्देश्यप्रतीतिनिर्वाहकसंबंधांतरमंतरेणविशिष्टव्यवहारजननयोग्यत्वस्यसत्त्वान्नाव्याप्तिरितिसंप्रदायविदः ॥ ज्ञानमात्रनिष्ठेति ॥ सर्पज्ञानमात्रनिष्ठेत्यर्थः । सचक्षीरमाधुर्यादिवदाख्यातुमशक्योवा तद्व्यवहारजननशक्तत्वरूपोवा वक्ष्यमाणरीत्याद्रष्टव्यः । एतच्चद्वितीयपक्षाभिप्रायेण । प्रथमपक्षे

**तर्हिविषयमनंतर्भाव्यज्ञानएवविशेषःसिद्धः । किंचसर्पज्ञानमसर्पज्ञानाद्धर्म्यंतरसंबंधमनपेक्ष्यविलक्षणं । तज्जनकविलक्षणजन्यत्वात् । यवांकुरात्कलमांकुरवत् । तज्जन्यविलक्षणजनकत्वात् । यवबीजा**

तुज्ञानमेवविशेषइतिबोध्यं ॥ **सर्पज्ञानमिति** ॥ रज्जावितिशेषः । धर्मीविषयः । तथाचसंबंधांतरमनपेक्ष्येत्यर्थः । अतएवोत्तरत्रतथैवव्यवहारः स्वतएवेतियावत् ॥ **तदिति** ॥ असर्पज्ञानजनकसामग्रीविलक्षणसामग्रीजन्यत्वंपक्षे । दृष्टांतेतुयवांकुरजनकसामग्रीविलक्षणसामग्रीजन्यत्वंकलमांकुरेऽस्तीतिज्ञातव्यं ॥ **तदिति** ॥ असर्पज्ञानजन्यंयत्संतोषादिकार्यंतद्विलक्षणंयद्भयादिकार्यंतज्जनकत्वंपक्षेस्ति । दृष्टांतेतुयवबीजजन्यंयद्यवांकुररूपंकार्यंतद्विलक्षणंयत्कलमांकुररूपंकार्यंतज्जनकत्वंकलमबीजेस्तीतिज्ञातव्यं ॥ **विलक्षणेति** ॥ तथाचधर्म्यंतरसंबंधमनपेक्ष्यविलक्षणत्वरूपंसाध्यंविनापीत्यर्थः ॥ **यवबीजेत्यादि** ॥ यवबीजवि

लक्षणजन्यंकलमांकुरंयवांकुरविलक्षणजनकंकलमबीजंतेअपीतिविवेकः। तथाचस्वाभाविकवैलक्षण्यंविनैवधर्म्यंतरसंबंधेनतज्जनकविलक्षणजन्यत्वंचेत्तर्हियवांकुरजनकबीजविलक्षणसामग्रीजन्यमपिकलमांकुरंकदाचित्कलमांकुरत्वरूपस्वाभाविकविशेषंविनैवोपलक्षणभूतचैत्रादिधर्म्यंतरसंबंधित्वमात्रेणयवांकुराद्विलक्षणंस्यात् तथास्वाभाविकंवैलक्षण्यंविनैवधर्म्यंतरसंबंधमात्रेणैवतज्जन्यजनकविलक्षणजनकत्वंचेत्तर्हियवबीजजन्ययवांकुरकार्यविलक्षणजनकमपिकलमबीजंकदाचित्कलमबीजत्वरूपस्वाभाविकवैलक्षण्यंविनाप्युपलक्षणीभूतचैत्रादिसंबंधित्वमात्रेणयवबीजाद्विलक्षणंस्यात्। नचोभयत्रापीष्टापत्तिरितिवाच्यं। चैत्रादि

त्कलमबीजवत्। नचबिलक्षणविषयसंबंधेनैवहेत्वोरुपपत्तेरप्रयोजकत्वं। तथात्वेहियवबीजतदंकुरविलक्षणजन्यजनकेकलमांकुरतद्बीजेअपिकदाचिद्यवांकुरतद्बीजाभ्यांकलमांकुरत्वतद्बीजत्वरूपस्वाभाविकवैलक्षण्यंविनोपलक्षणभूतचैत्रादिसंबंधित्वमात्रेणविलक्षणेस्यातां। साक्षात्कारोपिपरोक्षज्ञानादन्यसंबंधित्वमात्रेणविलक्षणःस्यात्। गृहमपिसंस्थानविशेषंविनाविचित्रकाकहंसो

संबंधित्वाज्ज्ञानेपिकलमांकुरत्वतद्बीजत्वदर्शनमात्रेणांकुरांतरात्बीजांतराच्चवैलक्षण्यानुभवस्यसार्वजनीनत्वादित्यर्थः। कादाचित्कविषयसंबंधमात्रेणहेत्वोरुपपत्तावुच्यमानायांअतिप्रसंगांतरमाह ॥ साक्षात्कारोपीति ॥ अन्येति ॥ चैत्रादिसंबंधित्वमात्रेणेत्यर्थः। पुनस्तत्रैवदूषणांतरमाह ॥ गृहमिति ॥ गृहंविचित्रकारणजमितिसंबंधः। कादाचित्कविचित्रकाकहंसा

द्युपलक्षणत्वमात्रेणेत्यर्थः ॥ विचित्रकार्यकारीति ॥ इतरगृहासाध्यातपवारणादिरूपकार्यविशेषकारिस्यादित्यर्थः ॥ अभावस्येति ॥ यथाघटप्रागभावइत्यादौप्रतियोगिनोऽभावंप्रत्युपलक्षणत्वंतथेत्यर्थः । ननुघटादेःप्रागभावंप्रत्युपलक्षणत्वमेवनविशेषणत्वं तयोरेककालत्वाभावात् प्रकृतेतुविषयस्यज्ञानंप्रतिविशेषणत्वमेवाकिंनस्यादित्यतआह ॥ अतीतादीति ॥ तथादर्शनात् विषयाभावेपिज्ञानदर्शनादित्यर्थः । तदेवोपपादयति ॥ नहीति ॥ अनिर्वाच्यः रूप्यवत्प्रातिभासिकः । व्यावहारिकस्तुदूरापास्तइत्यपिशब्दार्थः । तथाचविषयस्यनविशेषणत्वंयुक्तंकिंतूपलक्षणत्वमेवेतिभावः । किंप्रकृतइत्यतआह ॥ उपलक्षणेन

पलक्षणत्वमात्रेणविचित्रकारणजंविचित्रकार्यकारिचस्यात् । अपिच ज्ञानस्यस्वकारणादुत्पत्तौ स्वकार्यकरणेचविषयः अभावस्यप्रतियोगीवोपलक्षणं । अतीतादिज्ञानेऽसद्विषयकपरोक्षज्ञानेच तथादर्शनात् । नहितत्रार्थः अनिर्वाच्योप्यस्ति । उपलक्षणेनचान्योन्यावर्तकउपस्थाप्यः काकेनसंस्थानविशेषइवेतिस्वतोविशेषसिद्धिः । एवंचयथाप्रतियोगिनमनंतर्भाव्यैवघटस्याभावः अभावांतरात्यथाचविषयमनंतर्भाव्यैवशिलोद्धरणकृतिर्माषोद्धरणकृतितः । यथाचातीतादि

चेति । उपलक्षणीभूतविशेषणंचेत्यर्थः ॥ स्वतइति ॥ उपलक्षणीभूतसर्पादिविषयोपस्थाप्योज्ञानेविशेषःसिद्धइत्यर्थः ॥ एवंचेति ॥ यथेत्यस्य तथासर्पज्ञानमपीतिदूरस्थेनतथाशब्देनान्वयः ॥ अनंतर्भाव्येति ॥ प्रतियोगयघटितस्वरूपतयेत्यर्थः । तस्योपलक्षणत्वेनाभावस्वरूपानंतर्गतत्वादितिभावः । अभावांतरादिति । अस्याविलक्षणमित्यनेनाग्रेतनेनसंबंधः ।

यथाचेत्यादौसर्वत्रविषयमनंतर्भाव्येत्यस्यानुषंगः ॥ **ज्ञानांतरादीति** ॥ अतीतानागतज्ञानंवर्तमानवस्तुज्ञानांतरात् अस
द्विषयकपरोक्षज्ञानव्यवहारौसद्विषयकापरोक्षज्ञानव्यवहाराभ्यामित्यर्थः । ज्ञानव्यवहारौज्ञानांतरादितोविलक्षणाविति लिंगव
चनव्यत्ययेनान्वयः ॥अन्यथेति॥ परोक्षापरोक्षज्ञानस्मृत्यनुभवादीनांवैलक्षण्यानंगीकारेपरोक्षापरोक्षज्ञानस्मृत्यनुभवकार्याणां
संकरापत्त्याऽसंकीर्णव्यवहारादिकंचनस्यात् । तथाऽभावस्याभावांतराद्वैलक्षण्यानंगीकारेतयोस्सांकर्यापत्त्यादोषाभावगुणाभाव
कार्याणांभ्रमादीनामपिसंकरःस्यादित्यर्थः। नन्वभावकृत्यतीतादिज्ञानेषुप्रतियोगिविषयाभ्यांकृतासंकरसंभवात्तत्कार्येष्वसंकरोपप

**ज्ञानमसद्विषयकपरोक्षज्ञानव्यवहारौचज्ञानांतरादितः । यथाचघटस्मृतिर्घटानुभवात् ।**
**यथाचघटस्यपरोक्षज्ञानंतदपरोक्षज्ञानाद्विलक्षणं अन्यथातत्तत्कार्यसंकरःस्यात् । नचा**
**भावाद्यवच्छेदकप्रतियोग्यादिविशेषादसंकरः । ध्वंसादेःकृतेरतीतादिज्ञानस्यचकालेप्र**
**तियोगिविषययोरसत्वात् । पूर्वक्षणेऽसतश्चनियतपूर्ववृत्तित्वरूपकारणत्वव्याघातात् ।**

त्तिरित्याशंक्यनिराकरोति ॥ **नचेति** ॥ कुतोनचेत्यतआह ॥ **ध्वंसादेरिति** ॥ आदिपदेनप्रागभावः । प्रागभावप्रध्वंसाभाव
कालेप्रतियोगिनोरसत्त्वात्कृतेःकालेविषयस्यासत्त्वात्। कृत्यपरपर्याययत्नस्यसिद्धवस्तुकर्मकत्वाभावेनकृतेःकालेपिविषयाभावाद
तीतादिज्ञानकालेचविषयस्यासत्त्वादितियोजना । ननुप्रध्वंसादेःकालेप्रतियोग्यादेरसत्त्वेपिकदाचित्सत्त्वमस्त्येवेत्यतआह ॥ **पू**
**र्वक्षणइति** ॥ अयमर्थः कदाचित्प्रतियोगिनःसत्त्वेपिध्वंसनिर्वाह्यकार्यापेक्षयापूर्वकालप्रतियोगिनोऽसत्त्वेनप्रतियोगिसंकीर्ण

स्वरूपस्यध्वंसादेःकारणस्यासिद्ध्याध्वंसादिकार्याणामसंकरोनस्यात्। एवंचकृत्युत्तरकालेशिलोद्धरणरूपविषयस्यसत्त्वेपिकृतिकाले तस्यासत्त्वेनअसंकीर्णस्वरूपालाभात्कृतिकार्याणामसंकरोनस्यात् । कार्यापेक्षयापूर्वक्षणेऽसतोऽविद्यमानस्यासंकीर्णस्वकार्यंप्रति नियतपूर्वक्षणवृत्तित्वरूपंकारणत्वंव्याहतमिति । ननुध्वंसादेःकालेप्रतियोग्यादीनामसत्त्वेनविशेषणत्वायोगेपितेषांतत्रोपलक्षण त्वंभविष्यति तथाचोपलक्षणीभूतप्रतियोग्यादिसंबंधमात्रेणध्वंसादिस्वरूपाणामसांकर्येसतितत्कार्येप्यसांकर्यंभविष्यतीत्यतआह ॥ उपलक्षणेति॥ अन्यथासंस्थानविशेषंविनाकाकहंसाद्युपलक्षणसत्त्वमात्रेणगृहंविचित्रकारणजंविचित्रकार्यकारिचस्यात् कल मबीजांकुरतद्बीजेअपिउपलक्षणीभूतचैत्रादिसंबंधमात्रेणविलक्षणेस्यातामित्यतिप्रसंगःस्यादितिभावः । इदमुपलक्षणं काकादिकं उपलक्षण भेदमात्रेणचविलक्षणकार्याद्ययोगात् । अत्यंतासतश्चकदाप्यभावात् । शिलोद्धरणार्थंमाषोद्धारप्र यत्नेकृतेपितदनिष्पत्तेश्च । तथासर्पज्ञानमपिविषयमनंतर्भाव्यैव असर्पज्ञानाद्विलक्षणं । उक्तप्रमाणैरनुभवे ह्युपलक्षणंस्वोपलक्ष्यगृहादिनाकदाचित्संबद्धंसदुपलक्षणंदृष्टं । प्रतियोग्यादिकंचध्वंसादिनाकदाप्यसंबद्धमितिनोपलक्षणमित्य पिद्रष्टव्यं । शिलोद्धरणकृतेर्माषोद्धरणकृतितोवैलक्षण्येहेतुमाह ॥ शिलोद्धरणार्थमिति॥ माषोद्धरणेयावान्प्रयत्नःतावतिप्रय त्नेकृतेपीत्यर्थः । यदिशिलोद्धरणकृतेर्माषोद्धरणकृतितोवैलक्षण्यंनस्यात्साम्यंस्यादितियावत् । तर्हिमाषोद्धरणकृतितःशिलोद्धर णनिष्पत्तिःस्यान्नचैवं ततोवैलक्षण्यंतयोरनुभवसिद्धमितिभावः । विषयकृतवैलक्षण्याभावस्तुपूर्वमेवोपपादितइतिद्रष्टव्यं ॥ वि षयमिति ॥ विषयांतर्भावंविनास्वतएवविलक्षणंविशेषयुक्तमित्यर्थः । नन्वसौज्ञानगतोविशेषःयद्यौपाधिकस्तर्हिवक्तव्यइतिचे

त्तत्राह ॥ तस्यजातिरूपस्येति ॥ तस्याप्रामाणिकत्वंनमंतव्यमित्याशयेनोक्तंउक्तप्रमाणैरिति । ननुज्ञानेविशेषःस्वतोनयुक्तः घटज्ञानमित्यादिविषयविशेषनिरूपितत्वेनैवव्यवहाराज्जातिविशेषस्यसत्त्वेतुकदाचिद्विषयसंबंधंविनाव्यवहारःस्यात् तेनज्ञायतेस विशेषोऽप्रामाणिकइतितत्राह ॥घटज्ञानमिति॥ यथामाधुर्यादेःस्वतोविलक्षणत्वेपिक्षीरादिसंबंधंविनापिप्रकारांतरेणप्रतिपादयितुमशक्यत्वात्क्षीरादिनैवनिरूपणंतथाज्ञानस्यस्वतोविलक्षणस्यापिघटादिसंबंधंविनाप्रकारांतरेणनिरूपयितुमशक्यत्वात्घटादिना निरूपणंयुक्तं । तावतानानुभवसिद्धविशेषापलापःकार्यइत्यर्थः । किंचसविशेषआख्यातुंचशक्यतइत्याशयेनाह ॥ किंचेति ॥

**नचसिद्धस्य तस्यजातिरूपस्यविशेषस्याख्यातुमशक्यत्वात् । घटज्ञानमितिव्यवहारः क्षीरमाधुर्यंचाक्षुषज्ञानमितिवद्युक्तः । किंचत्वन्मतेतत्तद्वृत्तेस्तत्तदाकारत्वेनचैतन्यस्यचतत्तत्प्रतिबिंबितत्वेनवातदभिव्यक्तत्वेनवाममतुतत्तज्ज्ञानस्यतत्तदीयस्वभावत्वेनवातत्तद्व्यवहारजननशक्तत्वेनवास्वतएववैलक्षण्यं । नहि**

तत्तदाकारत्वेन तत्तत्प्रतिबिंबितत्वेनस्वतएववैलक्षण्यमितिसंबंधः ॥ तत्तदीयेति ॥ घटपटीयस्वभावत्वादिरेवविशेषइत्यर्थः । नन्वेवंघटीयस्वभावस्यज्ञानस्यस्वकार्यंप्रतिकारणत्वाद्घटादेरपिकारणत्वेननिवेशःप्राप्तः तद्व्यवहारजननशक्तत्वस्यवाज्ञानगतविशेषत्वेतत्कार्येपितत्कारणत्वेननिवेशःप्राप्तएवेत्यतआह ॥ नहीति ॥ घटीयस्वभावस्यतदभावस्येतिसामानाधिकरण्यं । अयमत्रविवेकः । त्वन्मतेघटाकारवृत्तिरस्तितत्रघटाकारवृत्तेर्यत्कार्यमस्तितत्कारणत्वेनघटादेरपिननिवेशः । तत्रदृष्टांतोगवयेति ।

गवयाकाररेखाचवर्ततेतस्यायत्कार्यंतत्रकारणत्वेनप्रसिद्धगवयस्यननिवेशस्तद्वत्ज्ञानस्यतदीयस्वभावत्वेपितत्तदीयस्वभावोपेत ज्ञानकार्ये नघटादेःकारणत्वेनप्रवेशः । तत्रदृष्टांतः घटीयस्वभावस्यतदभावस्येति । घटीयस्वभावस्यघटाभावस्ययत्कार्यंतत्कार णत्वेनघटादेर्नप्रवेशस्तद्वत्तथाज्ञानस्यतद्व्यवहारजननशक्तत्वेनस्वतोवैलक्षण्येतद्व्यवहारजननशक्तस्यज्ञानस्यकार्येतच्छब्दोदितघ टादेःकारणत्वेननप्रवेशः । तत्रदृष्टांतो दाहशक्तेरिति । दाहशक्तिमतोवह्नेरित्यर्थः । यथादाहशक्तिमतोवह्नेर्यत्कार्यंहिमनिवार णादितत्रकारणत्वेननवह्नेःप्रवेशस्तथेत्यर्थः । अत्रसर्वस्यापितत्तद्विषयसंबंधंविनाव्यवहर्तुमशक्यत्वादेवतत्तद्व्यवहारोनतुतद्बला

गवयाकाररेखायाघटीयस्वभावस्यतदभावस्यवादाहशक्तेर्वायत्कार्यंतद्धेतुकोटौगवयादेर्निवेशः । त स्माद्रज्जौसर्पज्ञानस्यभ्रमत्वेनाधिकजन्यत्वेपिसर्पज्ञानत्वेनतद्धेतुजन्यत्वात्स्वतएवासर्पज्ञानात्वैलक्षण्य मितिनकोपिदोषः । तदुक्तं·सर्पभ्रमादावपिहिज्ञानमस्त्येवतादृशं ॥ तदेवार्थक्रियाकारितत्सदेवार्थ

त्कारणकोटौप्रवेशोस्यकल्प्यइत्याशयः ॥ तद्धेतुजन्यत्वादिति॥ सर्पज्ञानेयाक्लृप्तसामग्रीतज्जन्यत्वादित्यर्थः । यद्यपिसर्पज्ञान हेतुसर्पसन्निकर्षजन्यत्वंरज्जुसर्पज्ञानेनास्ति रज्जुसन्निकर्षस्यैवसर्पज्ञानहेतुत्वमित्यंगीकारात्तथापि सर्पज्ञानहेतुर्द्विविधः सर्पसन्नि कर्षोदोषश्चेति रज्जुसर्पज्ञानेचदोषरूपसर्पज्ञानकारणमस्त्येवेतिभावः । तथाचोक्तंसुधायां । सचायंविशेषः सत्यसर्पज्ञानेसमीची नसामग्र्याजातोमिथ्यासर्पज्ञानेत्वसमीचीनयेतिनकश्चिद्दोषइति । तदेतदाह । भ्रमत्वेनाधिकजन्यत्वेपीति । तज्जन्यत्वादिति ।

विषयकृतवैलक्षण्याभावोपपादनायेतिज्ञातव्यं । तादृशंमिथ्याभूतसर्पाद्यनवच्छिन्नंस्वतएवासर्पज्ञानाद्व्यावृत्तमित्यर्थः । खंडनकारोक्तासत्कारणत्वसाधकयुक्तिमनूद्यदूषयति ॥ अंतर्भावितसत्त्वंचेदिति ॥ अयंकारिकार्थः । अंतर्भावितंसत्त्वंयस्मिंस्तदंतर्भावितसत्त्वं सत्ताविशिष्टमितियावत् । दंडादि । तथाअंतर्भावितंसत्त्वंयस्मिन्नभवतितन्नांतर्भावितसत्त्वंसत्तोपलक्षितमितियावत् । दंडादि । तथाचसत्ताविशिष्टंवाकारणंसत्तोपलक्षितंवाकारणंनाद्यइत्याह ॥अंतर्भावितेति॥ अंतर्भावितसत्वंसत्ताविशिष्टं दंडादिकारणंचेत्तर्हिततः सत्ताविशिष्टंकारणमित्यभ्युपगमात्सत्ताविशिष्टेसत्तायाआत्माश्रयेणाभावात्सत्ताविशिष्टमसदेवेतिप्राप्तं

कारकमिति ॥ अंतर्भावितसत्वंचेत्कारणंतदसत्ततः नांतर्भावितसत्त्वंचेत्कारणंतदसत्ततइत्यादिखंडनोक्ता

तथाचासतःकारणत्वसिद्धिः। नद्वितीयइत्याह॥ नांतर्भावितेति॥नसमासोयंनांतर्भावितसत्वंसत्त्वोपलक्षितंसत्ताविरहितंदंडादिकंकारणंचेत्तर्हिततःसत्तोपलक्षितंकारणमित्यभ्युपगमादसदेवकारणमितिप्राप्तं । सत्तायाउपलक्षणत्वमात्रेणवस्तुतोदंडादौसत्तायाअभावादितिप्राप्तेरितिभावः । यद्वाकारणमित्युभयत्रभावप्रधानोनिर्देशः । कारणत्वंअंतर्भावितसत्त्वंअंतर्भावितसत्त्वोपेतंभवति सत्तामंतर्भाव्यकारणत्वंवर्ततेवानवा कारणत्वाश्रयकोटौसत्तावर्ततेवानवेत्यर्थः। सत्तायांकारणत्वंवर्ततेवानवेतियावत् । आद्ये तर्ह्यसदेवकारणमितिप्राप्तं । कुतः ततःसत्तायांकारणत्वस्वीकारात् । सत्तायांचसत्ताविरहात् । एवंचसत्ताविरहितत्वेनासत्याएवसत्तायाःकारणत्वंप्राप्तमितिअसतःकारणत्वसिद्धिः। द्वितीयेतर्ह्यसदेवकारणमित्यायातं कुतः ततः सत्तायांकारणत्वास्वीकारात् । अयं

भावः । सत्ताजातिस्तावत्द्रव्यंसत् गुणः सन् कर्मसदित्यनुगतव्यवहारजनकत्वेनाभ्युपेया । प्रकारांतराभावात् । एवंचसत्तायांकारणत्वाभावेऽनुगतव्यवहारजनकत्वमेवनस्यात् । जनकत्वस्यकारणत्वरूपत्वात् । तथाचसत्तास्वरूपएवप्रमाणाभावप्राप्त्या सत्तावार्तायाएवलोपेनसर्वेषामपिकारणानांदंडादीनामसत्त्वप्राप्त्याऽसतामेवकारणत्वसिद्धिरिति ॥ असत्कारणतेति ॥ एतस्यस्वव्याहतेत्यादिनान्वयः । तदीयग्रंथेतदीयप्रमेयेपूर्वपक्षिणाकेनचिच्छ्लोकेनदूषितेसतितेनोक्तमस्ति । त्वद्ग्रंथैवान्यथाकाराअक्षराणिकियंत्यपि । तस्मादस्माभिरप्यस्मिन्नर्थेनखलुदुष्पठेति । अस्मिन्नर्थेऽस्मदभिमतविषयेपित्वद्ग्रांथैवकियंत्यक्षराणिस्थापयित्वाऽन्यथाकारादुष्पठानखलुसुपठैवेतितदर्थः । एतमेवखंडनकारोक्तंन्यायंहृदिनिधायाह ॥ अस्येत्यादिना ॥ तत्प्रकारस्तु अंऽसत्कारणता । अस्यैवश्लोकस्याकारप्र(क्षेपे)श्लेषेणपठितुंशक्यत्वात् अंतर्भावितसत्वंचेदधिष्ठानमसत्ततः । तर्भावितसत्त्वंचेदनसत्कारणंततः । नांतर्भावितसत्त्वंचेदनसत्कारणंततइतिअकारप्रश्लेषेणपठितुंशक्यत्वादित्यर्थः । कारिकार्थस्त्वित्थं अंतर्भावितसत्त्वंअबाध्यत्वरूपसत्ताविशिष्टंदंडादिकारणंचेत्तर्हिततःसत्ताविशिष्टस्यकारणत्वाभ्युपगमात् अनसत्कारणं असत्कारणंनकिंनामसदेवकारणमित्यायातं । अबाध्यत्वरूपसत्ताविशिष्टेऽबाध्यत्वरूपसत्तायाःसत्त्वात् आत्माश्रयत्वस्यप्रमेयत्वादेःस्ववृत्तित्वइवादोषत्वात् । नांतर्भावितसत्त्वंचेत् सत्त्वोपलक्षितंकारणंचेत् तर्हिततस्सत्तोपलक्षितस्यकारणत्वांगीकारादेवानसत्कारणं सदेवकारणमितिसिद्ध्यति । अबाध्यत्वरूपसत्त्वोपलक्षितेपिअबाध्यत्वरूपसत्तायाःसत्त्वादित्यर्थः । एवंद्वितीययोजनायामपिकारणत्वंसत्तायांवर्ततेनवेत्यर्थः । तत्रकारणत्वंसत्तायांवर्ततइतिपक्षेप्यनसत्कारणंसिद्ध्यति सत्तायामप्यबाध्यत्वरूपसत्ता

याःस्वीकारेणसत्तायांसत्तारहितत्वाभावात् । कारणत्वंसत्तायांनास्तीतिपक्षेप्यनसत्कारणंसिद्ध्यति सत्तायांकारणत्वाभावेतस्याः स्वज्ञानंप्रत्यपिकारणत्वाभावप्रसंगेनसत्तास्वरूपस्यैवाप्रामाणिकत्वंस्यात् अतःकारणभिन्नासत्तासतितिष्ठतीत्यंगीकार्यं तथाचसत्ता याएवकारणत्वसिद्धिरितिकिंचिद्द्रष्टव्यं ॥ अंतर्भावितेति ॥ अयमिहकारिकार्थः । अंतर्भावितसत्त्वंचेदधिष्ठानंसत्ताविशिष्टम धिष्ठानमितियावत् । तर्ह्यधिष्ठानमसदेवेतिप्राप्तंसत्ताविशिष्टेऽधिष्ठानेआत्माश्रयप्रसंगेनसत्तायाअभावात् । नांतर्भावितसत्त्वंचेद धिष्ठानंसत्तोपलक्षितंसत्ताविरहितंचेदधिष्ठानमितियावत् । तर्ह्यधिष्ठानमसदेवेतिप्राप्तमितित्वदुक्तन्यायेनाधिष्ठानस्याप्यसत्त्वाप त्तिःस्यादित्यर्थः । यद्वाउभयत्राप्यधिष्ठानमितिभावप्रधानः । तथाचांतर्भावितसत्त्वंचेदधिष्ठानमित्यादेःसत्तामंतर्भाव्याधिष्ठानत्वं

नांतर्भावितसत्वंचेदधिष्ठानमसत्ततइत्यपिपठितुंशक्यत्वाच्चस्वव्याहता । कथमसतःसज्जायेतेत्यादिश्रुत्या

वर्ततेनवा अधिष्ठानत्वाश्रयकोटौसत्तावर्ततेवानवेत्यर्थः । सत्तायामधिष्ठानत्वंवर्ततेवानवेतियावत् । आद्येऽसदधिष्ठानंसत्तायां सत्ताभावेनासत्त्वात् । द्वितीयेसत्तायामधिष्ठानत्वंनास्तिचेत्तर्हिअसदेवाधिष्ठानमितिप्राप्तंअसत्तायांचसत्ताया व्याघातेनाभावा दसत्ताऽसत्येवेति। तथाचासत्यायामेवासत्तायामधिष्ठानत्वंप्राप्तमितिअधिष्ठानमसदितिप्रसिद्ध्यतीत्युपपादनंद्रष्टव्यं। अथवाअधि ष्ठानत्वस्यसत्तायामभावेतद्विरुद्धासत्त्वप्राप्त्यासर्वथात्यंतासत्त्वप्राप्तेः सत्तास्वरूपमेवकुत्रापिनास्तीतिप्राप्तंतथाचयदधिष्ठानत्वेनसंम तंकिंचित्तत्रापिसत्तानास्तीतिप्राप्त्याधिष्ठानमसदेवापन्नमितिभावः। असत्कारणताश्रुत्यादिविरुद्धाचेत्याह ॥कथमिति॥ असदेवेद

मग्रआसीदित्यादिनाऽसतःकारणत्वंपूर्वपक्षय्य कथंनुखलुसोम्यैवंस्यात्कथमसतःसज्जायेतेत्यादिनाऽसतःकारणत्वंनिषिद्धमित्यर्थः ॥नासतइति॥ असतःकारणत्वंनयुज्यतेऽदृष्टत्वादितिसूत्रार्थः। विरुद्धाऽन्यत्रनिरस्ताचअसत्कारणतेतिवर्तते। उपसंहरति ॥तस्मादिति॥ असत्त्वइति ॥ दृश्यत्वादिहेतुभिर्हेतुवाक्यादिप्रापितानांसाधनव्याप्त्यादीनांमिथ्यात्वबोधनेनतेषामसत्त्वेप्राप्तेऽसिद्ध्यादिदुर्वारमित्यर्थः॥ असतःसाधकत्वाभावेबाधकोद्धारविवरणं ॥ २२ ॥ दृग्दृश्ययोस्संबंधानुपपत्तिरूपतर्कंनिराकर्तुमुत्थापयति ॥ अनुकूलेति ॥ मायिभिक्षवइत्यस्याऽऽहुरित्यनेनसंबंधः । विज्ञानवादिमतेज्ञानज्ञेययोरधिष्ठानाध्यस्तभावेनाऽभेदात्

नासतोऽदृष्टत्वादित्यादिसूत्रेणअसद्भ्यःशशविषाणादिभ्यःसदुत्पत्त्यदर्शनादित्यादिस्वीयभाष्येणचविरुद्धाऽन्यत्रनिरस्ताच। तस्माद्धेतुव्याप्त्यादीनामसत्वेऽसिद्ध्यादिदुर्वारमिति ॥असतःसाधकत्वाभावेबाधकोद्धारः ॥ २२ ॥ अनुकूलतर्कहीनाश्चमिथ्यात्वहेतवः । अत्रकेचिन्मायिभिक्षवः"अन्यच्चेत्संविदोनीलंनतद्भासेतसंविदि ॥ भासतेचेत्कुतःसर्वंनभासेतैकसंविदि ॥ नियामकंनसंबंधंपश्यामोनीलतद्धियो"

ज्ञानातिरिक्तज्ञेयप्रपंचःपरमार्थसन्नास्त्येव । यद्यऽस्तीतिकश्चिद्ब्रूयात्तदातंप्रतिकथयतिविज्ञानवादी ॥ अन्यच्चेदिति ॥ संविदःप्रतीतेःसकाशात् नीलरूपादि अन्यच्चेदितिसच्चेदित्यपिग्राह्यं । तथाचसंविन्नीलयोर्भेदेनीलंसंविदिनभासेतसंविदिनीलस्यभानंनस्यात् । ननुभिन्नस्याऽपिभानमस्तुकोदोषइत्यतआह ॥ भासतेचेदिति ॥ भिन्नमपिभासतेचेद्विज्ञानतत्वस्यैकत्वात्तस्मिन्भासमानेसतिनीलेतरस्यधवलपीतादेरपिभानंस्यात् । ननुनीलसंविदिनीलस्यसंबंधोऽस्तीतिनीलंभासते धवलादेस्तुनतत्रसंबंधइतिनभानमित्यतआह ॥ नियामकमिति ॥ नीलस्यनीलबुद्धेश्चवक्ष्यमाणरीत्याऽन्यःसंबंधोनसंभवति येनविषयनियमः

स्यात् । तस्मात्संविदिनीलादेरारोपितत्वमेवसंबंधइति सत्यत्वेनीलादेर्विज्ञानसंबंधानुपपत्तिरूपोविपक्षेबाधकतर्कोस्तीत्यर्थः ॥ आत्मेति ॥ आत्माविज्ञानस्वरूपमेवनैल्याद्यात्मनाख्यायतइतिवदद्भिर्विज्ञानवादिभिरित्यर्थः ॥ ग्राह्येति ॥ ग्राह्यस्यनीलादेस्सर्वथाऽलीकत्वमभिदधानाःविज्ञानवादिनोग्राह्यलक्षणाभावं तद्रूपांयुक्तिंवदंति नीलतद्धियोःसंयोगादेःसंबंधस्या(सं)भावाद्विषयविषयिभावएववक्तव्यः । अर्थस्यचविज्ञानाद्भेदेग्राह्यस्यविषयस्ययल्लक्षणं विषयत्वंतस्याभावः विषयत्वंनिर्वक्तुमशक्यमिति यावत् । तथाचाऽर्थस्यविषयत्वंनस्यादितिविषयस्याऽऽरोपितत्वमेवसंबंधइत्याशयः ॥ भिक्षित्वेति ॥ इमंतर्कंतैर्भिक्षारूपेण

रित्यादिवदद्भिरात्मख्यातिवादिभिरुक्तंग्राह्यलक्षणाभावाख्यंतर्कंभिक्षित्वाहुः। दृश्यस्यसत्यत्वेनतावज्ज्ञानंतदसंबद्धंप्रकाशकं अतिप्रसंगात् नापिसंबद्धं अत्मगुणस्यज्ञानस्यज्ञेयेनसंयोगसमवाययोरयोगात् । अन्यस्यचसंबंधस्याऽभावात् विषयविषयिभावस्यचाऽद्दिष्टत्वेना

गृहीत्वेतियावत् । अतएवपूर्वमायिभिक्षवइतिभिक्षास्वभावस्तेषामुक्तः । तथाचविज्ञानवाद्युक्तयुक्तिच्छर्दिमात्रमित्यत्रतात्पर्यं । ननुदृग्दृश्ययोःसंबंधाभावेपिअसंबद्धस्यैवप्रकाशनमस्त्वित्यतआह ॥ दृश्यस्येति ॥ अतिप्रसंगादिति ॥ घटज्ञानंपटादेःनीलज्ञानंधवलादेरपिप्रकाशकंस्यादित्यर्थः । दृग्दृश्ययोराध्यासिकंसंबंधंवक्तुंसंबंधांतरंनिराकरोति ॥ नापीति ॥ आत्मेति ॥ गुणत्वान्नज्ञेयेनघटादिनासंयोगः । आत्मगुणत्वान्नसमवायःसंभवतीत्यर्थः ॥ अन्यस्येति ॥ संयोगसमवायातिरिक्तोद्दिष्टसंबं

धाभावादित्यर्थः ॥ असंबंधत्वादिति ॥ संबंधोहिसंबंधिभ्यांभिन्नस्तावाश्रितश्चैकश्चेति तल्लक्षणाभावादितिभावः ॥ दुर्निरू पत्वाच्चेति ॥ विषयत्वस्येतिशेषः । अनेनग्राह्यलक्षणाभावरूपस्तर्कएवविवृतइतिज्ञातव्यं ॥ ज्ञानाकारेति ॥ ज्ञानेस्वाकारार्प कत्वमित्यर्थः । ज्ञेयस्यघटादेर्यःपृथुबुध्नोदराकारःसएवज्ञानेभासतइतितत्सिद्धांतः । आकाराकारिणोरभेदेनज्ञानार्पकत्वमेवो-क्तंस्यात् । तच्चेंद्रियादिषुज्ञानहेतुष्वतिव्याप्तंअतउक्तं ॥ दृश्यमानत्वेसतीति ॥ एतज्ज्ञानेनदृश्यमानत्वेसतीत्यर्थः । इंद्रि

संबंधत्वात् दुर्निरूपत्वाच्च । तथाहि विषयत्वंकिंज्ञानजन्यफलाधारत्वं[1] ज्ञानजन्यहानादिबुद्धिगोचरत्वंवा[2] ज्ञानकर्मत्वंवा[3] ज्ञानाकारार्पकत्वंवा[4] दृश्यमानत्वेसतितत्त्वंवा[5] ज्ञानजन्यव्यवहारयोग्यत्वंवा[6] यत्संनिकृष्टक रणेनयज्ज्ञानमुत्पद्यतेसतस्याविषयइतिवा[7] यस्यांसंविदियोऽर्थोवभासतेसतस्याविषयइतिवा[8] संबंधांतरमं तरेणयोयज्ज्ञानावच्छेदकःसतस्यविषयइतिवा । आद्येपिफलंनतावज्ज्ञातता अनंगीकारात् अतीतादा

यादेःस्वकर्मकज्ञानेनदृश्यमानत्वेपिस्वजन्यैतज्ज्ञानेनदृश्यमानत्वाभावान्नातिव्याप्तिरितिभावः ॥ संबंधांतरमिति ॥ योयज्ज्ञा नावच्छेदकःसतस्यविषयइत्येवोक्तेज्ञातर्यतिव्याप्तिः । ज्ञानावच्छेदकोहिज्ञेयःज्ञाताचभवति यज्ञदत्तीयंज्ञानंघटीयंज्ञानमिति व्यवहारात् । अतोज्ञातर्यतिव्याप्ति (परिहाराय)वारणायसंबंधांतरमंतरेणेत्युक्तं । सतुज्ञाताविषयविषयिभावातिरिक्तद्विष्ठसमवाय रूपसंबंधांतरेणैवज्ञानावच्छेदकोनतमंतरेणेतितद्व्यवच्छेदइतिभावः ॥ अतीतादाविति ॥ असतिधर्मिणिधर्माजननादितिभावः

॥ गगनादाविति ॥ तज्ज्ञानानंतरंव्याप्तत्वेनतत्रहानादेरभावादव्याप्तिरितिभावः ॥ कलधौतेति ॥ रूप्यज्ञानादिविषयस्य रूप्यमलादेरूप्येणसहोपादीयमानत्वाद्रूप्यज्ञानविषयत्वंस्यादित्यर्थः ॥ अभिज्ञेति ॥ प्रत्यभिज्ञेत्यर्थः । तस्याअपिज्ञानजन्य त्वादितिद्रष्टव्यं । प्रत्यभिज्ञाव्यवहारयोर्ज्ञातृनिष्ठत्वेनज्ञेयेतदाश्रयत्वाभावादसंभवइत्यर्थः ॥ हानादीति ॥ कंटकादिज्ञानं कंटकादिस्वरूपमेवप्रकाशयति ततःकंटकांतरेऽनिष्टसाधनत्वंजानतःपुरुषस्यतदृष्टांतेनपुरोवृत्तिकंटकेपितदनुमानंभवति तदनंतरं हेयबुद्धिर्भवतिइत्यस्तिक्रमः ततश्चहानादिबुद्धीनांअनिष्टसाध(नता)नानुमितिजन्यत्वेनकंटकादिप्रत्यक्षाजन्यत्वादसंभवइत्यर्थः ।

वसंभवाच्च । नापिहानादिः गगनादौतदयोगात् कलधौतमलादेरपितज्ज्ञानविषयत्वापाता च्च । नाप्यभिज्ञाभिलपने । तयोर्ज्ञेयानिष्ठत्वात् । नद्वितीयः । हानादिबुद्धीनांतदजन्यत्वात् । गोचरतायाएवाऽव्याप्यनिरूपणाच्च । नतृतीयः । ईश्वरज्ञानस्याऽतीतादिज्ञानस्यचकर्मकार काजन्यत्वात् । नचतुर्थःज्ञानतदाकारयोरभेदेनसर्वेषांज्ञानहेतूनांविषयत्वापातात् । नपंचमः ।

नतृतीयः । ईश्वरज्ञानविषयेघटेऽतीतादिज्ञानविषयेचघटेज्ञानकर्मत्वंनास्तीत्यव्याप्तिः॥कुतइत्यतआह॥ईश्वरेति॥ क्रियांकुर्वद्धि कारकं । कर्मचकारकविशेषः । एवंचेश्वरज्ञानस्यनित्यस्यकर्मजन्यत्वाभावेनविषयस्यैवाभावेअतीतादिज्ञानस्यचतदजन्यत्वात्तद्वि षयेज्ञानकर्मत्वाभावेनाव्याप्तिरित्यर्थः ॥ ज्ञानहेतूनामिति ॥ ज्ञानतदाकारयोरभेदेनज्ञानस्वरूपार्पकत्वमेवोक्तंभवति । तच्चज्ञा नजनकेंद्रियादिष्वतिव्याप्तमित्यर्थः ॥ नपंचमइति ॥ एतज्ज्ञानेनदृश्यमानत्वेसतितत्त्वमितिविवक्षायांनेंद्रियादावतिव्याप्तिः ।

तेषामेतज्ज्ञानेनदृश्यमानत्वाभावादितिपंचमोनेत्यर्थः॥ दृश्यमानतायाइति॥ दृश्यमानत्वस्यदृग्विषयत्वरूपत्वादित्यर्थः॥योग्यतायामिति॥ततश्चस्वज्ञानविषयीभूतायांयोग्यतायामव्याप्तिरितिभावः ॥संविदोविषयत्वमिति॥ सप्तम्याविषयार्थत्वाद्यस्यांसंविदिविषयभूतायामित्यर्थप्राप्त्यासंविदोविषयत्वमापन्नमित्यर्थः॥सतिसप्तमीति॥ यस्यांसंविदिसत्यांयोर्थोविभासतेविषयोभवतीत्यर्थप्राप्त्याआत्माश्रयादित्यर्थः॥यत्समवेतमिति॥ रूपज्ञानंयन्निरूपितसमवायवदित्यर्थः ॥विनैवेति॥ रूपज्ञानात्मसमवाययोः

दृश्यमानतायाएवाद्याप्यनिरूपणात् । नषष्ठः । योग्यतायांयोग्यतांतराभावात् । नसप्तमः । नित्येश्वरज्ञानस्यनिर्विषयत्वापातात् । अष्टमेपिसंविदीतिनतावदधिकरणसप्तमी । ज्ञानस्यज्ञेयंप्रत्यनधिकरणत्वात् । नापिविषयसप्तमी । तस्यैवनिरूच्यमानत्वात् संविदोविषयत्वमर्थस्यविषयित्वमितिवैपरीत्यापाताच्च । नापिसतिसप्तमी । भासमानतायाएवाद्याप्यनिरूपणात् । ननवमः । यत्समवेतंरूपज्ञानमित्यत्ररूपज्ञानात्मसमवायस्यसंबंधांतरंविनैवरूपज्ञानावच्छेदकस्यतद्विषयत्वापातात् । तस्मात्सत्यत्वेदृश्यत्वानुपपत्तेर्दृग्दृश्ययोराध्यासिकएवसंबंधइतिअत्रोच्यते

संयोगसमवाययोरभावादित्यर्थः। तथाचतस्यवस्तुगत्यारूपज्ञानादिकंप्रत्यवच्छेदकत्वेन इदंरूपमितिजायमानस्य केवलरूपज्ञानस्यापिविषयःस्यादित्यतिव्याप्तिरितिभावः । तस्मात् विषयत्वस्यदुर्निरूपत्वादित्यर्थः॥ दृश्यत्वानुपपत्तेरिति॥ दृग्विषयत्वानुपपत्तेरित्यर्थः॥सिद्धांताभिधानंप्रतिजानीते॥अत्रोच्यतइति ॥ दृग्दृश्ययोराध्यासिकसंबंधःत्वयाकस्मात्स्वीकृतइतिप्रष्टव्यं संबं

धांतरानिरूपणादितिचेन्न। इंद्रियसन्निकर्षजन्यवृत्तिज्ञानद्वारकएवसंबंधोऽस्तु किमाध्यासिकसंबंधदुर्व्यसनेन । नन्विन्द्रियसन्निकर्षजन्यवृत्तिद्वारकसंबंधोऽप्रामाणिकइतिचेन्न। अस्यसंबंधस्य तवाप्यावश्यकत्वात्। तथाहि । त्वन्मतेसर्वमपिदृश्यंघटादिकंसर्वगतं यदज्ञानानावृतंब्रह्मचैतन्यं तत्रैवाध्यस्तं एवंचानावृतब्रह्मचैतन्यस्यसर्वान्प्रत्यविशिष्टत्वात्तत्रारोपितंघटादिकंसर्वंसर्वेषांसर्वदाप्रकाशेतनतुकश्चित्पदार्थःकदाचित्कंचित्प्रत्येवकाशेत इत्यतिप्रसंगेऽभिहिते यत्सन्निकृष्टेंद्रियजन्यवृत्तिर्यदाकारायदाचभवति सएव तंप्रत्येव कदाचिदेवप्रकाशतेनसर्वदेत्यतिप्रसंगःपरिहर्तव्यः।तथाचेंद्रियसन्निकर्षजन्यवृत्तिस्तवाप्यावश्यकी।एवंचदृश्यत्वेपिसत्यत्वमेवाऽस्तुनमिथ्यात्वं संबंधानुपपत्तिस्तुनास्ति । इंद्रियसन्निकर्षजन्यवृत्तिद्वारकसंबंधसंभवात् । एवंचतवाप्यावश्यकेनानेनसंबंधे (नैवोपपत्तावाध्या )नोपपत्त्या आध्यासिकसंबंधदुर्व्यसनेनप्रयोजनाभावात्। ननुनवयं ब्रह्मात्मकानावृतैकदृगध्यस्तत्वंअभिदध्महे येनतस्यसर्वान्प्रत्यऽविशिष्टत्वात्सर्वदासर्वस्यसर्वप्रकाशेतेत्यतिप्रसंगपरिहारायतत्तदाकारकवृत्तिद्वारकसंबंधापेक्षाममाप्यावश्यकीस्यात्। किंतुघटाद्यधिष्ठानभूतानांचैतन्यानांभेदांगीकारेण तत्तदर्थास्तत्तदधिष्ठानभूतेषुचैतन्येष्वध्यस्ताइत्युच्यंते। एवंचवृत्तिंविनैतादृशेनचैतन्येनैवघटादेःसाक्षादेवसंबंधांगीकारेणतेनैवप्रकाशोघटते अतोऽतिप्रसंगाभावान्नतदर्थंवृत्तिद्वारकसंबंधानुसरणमितिचेन्न।यथाविज्ञानवादिनातत्तदर्थास्तत्तज्ज्ञानेध्यस्ताइत्युच्यंते। यथाहुर्विज्ञानवादिनः। "तत्तज्ज्ञानेषुतेतेर्थाअध्यस्ताइतिनोमतमितितथात्वयातेतेर्थाः तेषुतेष्वनेकेषुअधिष्ठानचैतन्येषुअध्यस्ताइतिनह्युच्यते । किंतुब्रह्मात्मकानावृतैकदृगध्यस्तत्वमेव तत्राऽतिप्रसंगपरिहारायवृत्तिरनुसरणीयैव । ननुविज्ञानवादिमतइवममतेपिघटादेस्तत्तदधिष्ठानचैतन्येषुअनेकेषुअध्यासोस्तु अतो

नवृत्तिरपेक्षितेतिचेन्न । अनेकेष्वधिष्ठानेषुत्वन्मतेऽध्यासायोगात् । तथाहि । अध्यासाधिष्ठानभूताःअनेकाश्चैतन्यरूपब्रह्म दृशःकिंसत्यभूतशुद्धब्रह्मरूपा उतघटाद्युपाधिविशिष्टाः अथवोपाध्युपलक्षिताः। नाद्यः। एकमेवेत्यादिश्रुतिविरोधेन तत्रभेदाभा वात् । नद्वितीयः। उपाधिविशिष्टानांचैतन्यरूपब्रह्मदृशांभेदेपि विशिष्टानांघटादिवन्मिथ्यात्वेनाधिष्ठानत्वायोगात् । अध्यस्ता धिकसत्ताकत्वस्यैवाधिष्ठानत्वौपयिकत्वात्।नतृतीयः। यद्यप्युपाध्युपलक्षितायाब्रह्मचैतन्यरूपदृशःसत्यत्वमस्ति उपाधेरुपलक्षणमा त्रत्वात् । तथाचाधिष्ठानत्वमुपपद्यते तथाप्युपाध्युपलक्षितायाःअधिष्ठानभूतायाःसत्यायादृशअभेदस्य(एकमेव)इत्यादिश्रुतिसि द्धत्वान्नानेकत्वमुपपद्यते ॥ तथाचानावृत्तैकदृगध्यस्तत्वेवाच्येतत्रोक्तातिप्रसंगवारणायवृत्ति(रावश्यक्येव)रपेक्षणीयैव । उपाध्युप

**सर्वस्यापिदृश्यस्यब्रह्मामैकदृगध्यस्तत्वेपिकस्यचित्कदाचित्कंचित्प्रतिप्रकाशायत्वयापितत्तत्संनिकृष्टेंद्रि**

लक्षितेउपाधिकृतोभेदोस्तीतिनवृत्तिरपेक्षितेतिचेन्न। कथंचिदेवभेदेपिवृत्तिरावश्यक्येव । तथाहि । तत्तदर्थानांतत्तदधिष्ठानचै तन्येष्वध्यासमंगीकृत्यास्मदभिमतवृत्तिद्वारकसंबंधानंगीकारे त्वन्मतेऽस्मदभिमतवृत्तिद्वारकसंबंधात्प्रागेवघटादीनांतत्तदधिष्ठा नचैतन्येस्वतएवाध्यस्तत्वेनआध्यासिकसंबंधस्यसत्त्वाद्धटादिरूपदृश्यप्रतीतिःसर्वदास्यादेव । अतोध्यस्तत्वसंबंधेसत्यपिदृश्या प्रतीतेरतिप्रसंगपरिहारार्थंवृत्तिद्वारकसंबंधोंगीकार्यएव । तत्रापिप्रपंचस्यसत्यत्वेपिइंद्रियसन्निकर्षजन्यवृत्तिद्वारकसंबंधेनैवदृ श्यत्वोपपत्तेराध्यासिकसंबंधांगीकारोव्यर्थएव सचसंबंधोविषयविषयिभावएव। विषयत्वनिरूपणंकरिष्यामइत्याशयेनाह ॥ सर्व स्यापीत्यादिना॥दृश्याप्रतीतेरित्यंतेन ॥ वृत्तेरनावश्यकत्वेघटप्रकाशश्चैतन्यसंबंधादेवसाक्षाद्भवतीत्युच्यते तत्रविकल्पयति

॥ किंचेति ॥ अतंत्रत्वेति ॥ (चैतन्याभिव्यंजकत्वेनावश्यकयाइंद्रियजन्ययावृत्त्यैवघट)चैतन्याभिव्यंजकेंद्रियवृत्त्यैवघट प्रकाशोपपत्तावतिप्रसंगाभावेनघटादेश्चैतन्येऽध्यासकल्पनायाव्यर्थत्वेनाध्यासिकसंबंधस्यव्यर्थत्वापातात् । नहिवृत्तिप्रतिबिंबितचैतन्येघटादिरध्यस्तइतिभावः ॥ आवश्यकेनेति ॥ घटाधिष्ठानचैतन्यंघटप्रकाशकमितिमतेपि तदभिव्यक्त्यर्थंघटाकार

यजन्यतत्तदाकारवृत्तिद्वारकएवाऽनावृतदृक्संबंधःस्वीकृतः । तथाचसत्यत्वेपितद्वारकएवसंबंधोऽस्तु किमाध्यासिकसंबंधदुर्व्यसनेन। नहित्वन्मतेविज्ञानवादिमतइवतत्तदर्थास्तत्तज्ज्ञानेऽध्यस्ताः। सत्यायाःशुद्धदृशःस्वतोभेदाभावादुपाधिविशिष्टायाभेदेपिघटादिवन्मिथ्यात्वेनतदधिष्ठानत्वायोगात्। उपाध्युपलक्षितायास्सत्यत्वेप्यऽभेदात् । कथंचिद्भेदेपिवृत्तिद्वारकसंबंधात्प्रागध्यस्तत्वरूपे संबंधेसत्यपिदृश्याप्रतीतेः। किंचकिंघटाकारवृत्तिप्रतिबिंबितंचैतन्यंघटप्रकाशकं किंवातदभिव्यक्तं घटाधिष्ठानचैतन्यं। नाद्यः। आध्यासिकसंबंधस्याऽतंत्रत्वापातात्। नांत्यः। आवश्यकेनवृत्तिप्रतिबिंबितेनैवप्रकाशोपपत्तौतेनाधिष्ठानचिदभिव्यक्त्यादिकल्पनायोगात्। किंचघटाधिष्ठानस्यसत्यस्यचि

वृत्तिप्रतिबिंबितचैतन्यस्याऽनुसरणीयत्वात् तेनैवघटाधिष्ठानचैतन्येनसत्यस्यघटस्यप्रकाशोपपत्तौतेनाऽधिष्ठानचैतन्याभिव्यक्तिकल्पनायोगादित्यर्थः। अधिष्ठानचैतन्यमध्यस्तस्यप्रकाशकमितिमतेदोषांतरमाह ॥ किंचेति ॥ सत्यस्येत्यधिष्ठानत्वोपपादनाय

॥ नाभिव्यक्तिरिति ॥ वृत्तिप्रतिबिंबितचैतन्येनेतिशेषः। तथाचनतेनघटादेःप्रकाशःस्यादित्यर्थः ॥ नतदधिष्ठानत्वमिति॥ तथाचनतदपिघटादिप्रकाशकमित्यर्थः॥ आत्माश्रयादिति ॥ स्वावच्छिन्नस्यस्वाधिष्ठानत्वेस्वस्याप्यधिष्ठान(त्वप्रसंगेना)त्वेनात्माश्रयइत्यर्थः। केचित्त्वात्माश्रयशब्दोऽन्योन्याश्रयपरः। तथाचघटस्याध्यासेसतिघटस्वरूपसिद्धौचैतन्यस्यघटावच्छिन्नत्वं । तदवच्छिन्नेचैतन्येसतिअधिष्ठानलाभेनघटादेरध्यासइत्यन्योन्याश्रयादित्यर्थः । तथैवक्वचित्पाठश्चेत्याहुः । दोषांतरमाह ॥ किंचे

न्मात्रस्यचरमसाक्षात्कारात्पूर्वंनाभिव्यक्तिः । अभिव्यक्तस्यतुघटाधिष्ठानचैतन्यस्यनतदधिष्ठानत्वंआत्माश्रयात्।किंचघटप्रकाशिकायादृशोघटवन्मिथ्यात्वेनतदधिष्ठानत्वं सत्यत्वेदोषाजन्यत्वेनप्रमात्वात्सत्यंस्वविषयंप्रतिनाधिष्ठानत्वमित्युभयतःपाशारज्जुः । यत्तूक्तंज्ञानज्ञेययोर्नसंबंधइतितन्न । गुणगुण्यादेस्संयोगासंभवेसमवायवत्ज्ञानज्ञेययोरुभयासंभवेऽन्यस्यसंभवात् ।

ति ॥ घटाधिष्ठानचैतन्यंघटप्रकाशकमितिमतेमिथ्याभूतस्यघटवद्घटाधिष्ठानत्वाभावेनघटाप्रकाशकत्वात्सत्यमेवघटाधिष्ठानचैतन्यरूपंज्ञानंघटप्रकाशकमितिवाच्यं । तस्यचसत्यत्वेनदोषाजन्यतयाऽबाधितार्थविषयकत्वरूपप्रमात्वयोगित्वेन तद्विरुद्धं यत्स्वविषयमिथ्यात्वापादनशीलंस्वविषयंप्रत्यधिष्ठानत्वंतन्नसंभवतीत्यर्थः । उभयतः । प्रकाशकदृशोमिथ्यात्वेसत्यत्वेचेत्यर्थः । पाशारज्जुरितिक्वचित्पाठः । गलबंधकरज्जुरित्यर्थः । पाशेतिपाठएवस्वरसः । "(पाशास्याद्गलबंधिके)"त्यभिधानात् । ननुदो

षाजन्यत्वंनप्रमात्वप्रयोजकं।चैतन्यस्यसर्वत्रदोषाजन्यत्वात् किंतुदोषाजन्यवृत्त्यवच्छिन्नत्वं प्रकृतेचतदभावान्नविषयस्यसत्यत्वमतोमिथ्याभूतस्वविषयंप्रत्यधिष्ठानत्वंसत्यायादृशोयुक्तमितिनोभयतःपाशारज्जुरितिचेन्मैवं। घटाकारवृत्तेरपिसंभावितेंद्रियादिदोषाजन्यत्वात्। आविद्यकत्वरूपप्रधानोदोषएवास्तीतिचेन्न। अविद्यायादोषत्वासंमतेः। अन्यथाऽद्वैतागमविषयकश्रोत्रादिवृत्तेरप्यविद्यारूपदोषजन्यत्वेनाप्रमात्वापत्त्याऽद्वैतागमस्याप्यसिद्धिप्रसंगःस्यादितितरंगिण्युक्तंद्रष्टव्यं। स्वरूपसंबंधस्थलेपिसंयोगसमवायातिरिक्तमपिसंबंधंसाधयति॥ अभाववद्भूतलमिति॥ विशेषणविशेष्यकेति॥ विशेषणविशेष्यभा

**अभाववद्भूतलंज्ञातोघटःइष्टोघटःघटस्याभावइत्यादिकापरस्परासंयुक्तासमवेताविशेषणविशेष्यविषयकविशिष्टधीः। विशेषणविशेष्यतत्संबंधविषयिका। विशिष्टधीत्वात्। दंडीतिविशिष्टधीवत्। उक्ताजन्यप्रमाविशेषणविशेष्यसंबंधनिमित्तका अबाधितविशिष्टजन्य**

वावगाहीत्यर्थः। परस्परासंयुक्तेत्यादिकमेवपक्षः। अभाववद्भूतलमित्यादितद्विवरणरूपमितिद्रष्टव्यं। संयोगसमवायाभ्यामर्थांतरता(परिहाराय)वारणायपक्षेपरस्परासंयुक्तेत्यादिविशेषणं। दृष्टांतेसं(योगमा)युक्तत्वमादायसाध्यपर्यवसानं। पक्षेतुसंयोगसमवायातिरिक्तमादायेतिविवेकः॥ उक्तेति॥ अभाववद्भूतलमित्याद्या परस्परासंयुक्तासमवेतविशेषणविशेष्यकविशिष्टधीरित्यर्थः। ईश्वरप्रमामादायबाधवारणायजन्येत्युक्तं॥ संबंधनिमित्तकेति॥ तज्जन्येत्यर्थः। अबाधितपदाभावेऽ

त्ररजतत्वमितिभ्रमेव्यभिचारः । अत्रशुक्तौरजतत्वसंयोगसमवाययोर्बाधेनसाध्याभावात् अतोऽबाधितपदं । ईश्वरधियांव्यभिचारवारणायहेतौजन्यपदं ॥ विमताधीरिति ॥ अभाववद्भूतलमित्यादिकापरस्परासंयुक्तेत्यादिरूपाजन्यप्रमाधीरित्यर्थः । तेननबाधः ॥ तत्सिद्धेरिति ॥ ज्ञानज्ञेययोःसंयोगसमवायातिरिक्तद्विष्ठसंबंधसिद्धेरित्यर्थः । ननुपल्लीस्थितगोमतिचैत्रेगोमांश्चैत्रइतियदाविशिष्टधीर्भवति तदाविप्रकृष्टगवांतद्वतश्चैत्रस्यचसंयोगसमवायाभावादन्यस्यसंबंधस्यतत्राक्लृप्तत्वाद्विशिष्टधीत्वंव्यभिचारीत्यतआह ॥ गोमांश्चैत्रइति ॥ गोमांश्चैत्रइत्यादावपितेनैवहेतुनासंयोगाद्यतिरिक्तसंबंधसाधनान्नव्यभिचार

धीत्वात् । संमतवत् । विमताधीःअबाधितविशेषणविशेष्यसंबंधविषयिका । अबाधितविशिष्टधीत्वात् । दंडीतिप्रमावदित्यनुमानात्तत्सिद्धेः । गोमांश्चैत्रइत्यादिधीरपिपक्षएव । उक्तंहि "षष्ठीस्थानेयोगे"त्यत्रमहाभाष्ये "एकशतंषष्ठ्यर्था" इति । तेचस्वस्वामिभावादयःसंबंधाःषष्ठीदंडकेपठिता

इत्यर्थः । ननुसंयोगादेरेवसंबंधत्वात्तस्यचज्ञानज्ञेयादिष्वभावात्तत्रसंबंधानुमानंबाधितमित्याशंकांसंयोगाद्यतिरिक्तसंबंधसाधकाभियुक्तवचसानिराकरोति॥ उक्तंहीति ॥ केतेएकशतंषष्ठ्यर्थसंबंधाइतिशंकायामाह ॥ तेचेति ॥ कैयटे महाभाष्यटीकायां । ( षष्ठीदंडकपाठाश्रयणेनेदमुक्त ) मितिकैयटवाक्यस्याऽर्थानुवादोयं । कःषष्ठीदंडकशब्दार्थइत्याशंकायांकैयटटीकाकारेण बृहद्विवरणकारेणोक्तं "( षष्ठीदंडकोनामग्रंथविशेष )" इति । ननुसंयोगादेरन्यस्यसंबंधत्वेतस्यक्लृप्तपदार्थेषुअनंतभावात्तदाधि

कथंस्यादित्यतआह ॥ प्रमितेति ॥ अयंचसंबंधःउक्तानुमानत्रयेणप्रमितोतस्तादृशसंबंधसमावेशेनैवपदार्थाःपरिगणनीयाइ त्याशयः । उक्तानुमानानांबाधकांतरमाशंक्यनिराकरोति ॥ नचेति ॥ संयोगसमवायातिरिक्तसंबंधकल्पनइतिशेषः ॥ अन्यो न्याश्रयादिति ॥सिद्धेद्वित्वेतद्बाधितत्वात्संयोगाद्यतिरिक्तसंबंधसाधकानुमानानामप्रामाण्यं । तस्मिंश्चसिद्धेतद्बाधाभावात्संबं धद्वित्वसिद्धिरित्यन्योन्याश्रयादित्यर्थः । संयोगसमवायातिरिक्तसंबंधसाधकानुमानस्ययदिसंबंधद्वित्वंबाधकमित्युच्यते । तर्हिइहतंतुषुपटइत्यादिप्रत्ययःविशेषणविशेष्यभावसंबंधनिबंधनः । अबाधितत्वेनप्रमितत्वादित्यनुमानेनसमवायोपिनासि

इत्युक्तंकैयटे । प्रमितवस्त्वनुसारेणहिप्रक्रियाकल्प्या नतुस्वकल्पितप्रक्रियानुरोधेनप्रमितत्यागः ।

नचसंबंधद्वित्वमेवबाधकं । अन्योन्याश्रयात् । अन्यथासंबंधैक्यंसमवायबाधकंस्यात् । नाप्यऽ

तीतादौसंबंध्यभावोवाज्ञानज्ञेययोर्विप्रकर्षोवाबाधकः । अस्यसंबंधस्यसमवायवत्संबंध्यभाव

द्ध्येत् । संयोगरूपसंबंधस्यममतेएकत्वेनतद्विरुद्धत्वादितिबाधकेऽभिहितेऽन्योन्याश्रयेणतद्बाधकंपरिहरणीयं । तन्ममापितुल्य मित्याशयेनाह ॥ अन्यथेति ॥ ज्ञानज्ञेययोरतिरिक्तसंबंधकल्पनेबाधकांतरमाशंक्यनिराचष्टे ॥ नापीति ॥ अतीतादिरूपज्ञेयेन साकंज्ञानस्यसंबंधोनसंभवतिसंबंधिनोरतीतानागतयोरभावादित्यर्थः ॥ विप्रकर्षइति ॥ ज्ञानस्यात्मनिष्ठत्वेनांतरत्वाज्ज्ञेयस्यचबा ह्यपदार्थत्वेनतयोर्विप्रकृष्टत्वात्संबंधोनयुक्तइत्यर्थः ॥ अस्येति ॥ संयोगसमवायातिरिक्तोयंसंबंधोनुमानेनसिद्ध्यन्संबंध्यभावविप्र कर्षौयथास्वस्यबाधकौनस्यातां तथैवस्वापेक्षिताशेषनिर्वाहकतयैवसिद्ध्यति यथासमवायोऽबाधितेहप्रत्ययत्वाद्यनुमानेनसिद्ध्यन्

स्वापेक्षितैकत्वादियुततयैवसिद्ध्यतितद्वदित्यर्थः।उक्तानुमानसिद्धसंयोगाद्यतिरिक्तसंबंधस्यसंबंध्यभावोविप्रकर्षोवाबाधकइतियद्यं गीक्रियतेतर्ह्यबाधितेहप्रत्ययत्वाद्यनुमानेनसमवायोपिनसिद्ध्येत् पृथक्सिद्धयोर्युतसिद्धयोरेवसंयोगसंबंधदर्शनात् । अपृथग्दृष्टयो स्तददर्शनात् ।अपृथक्सिद्धिरयुतसिद्धिर्वासमवायसंबंधस्यबाधिकास्यादितिशंकिते तत्रत्वयासमवायःसिद्ध्यन् धर्मिग्राहकप्रमाणे नापृथक्सिद्धसंबंधत्वेनैवसिद्ध्यतीतिवाच्यं।तत्सममममापीत्याह॥ अन्यथेति ॥ ज्ञानज्ञेययोःप्रसिद्धसंबंधातिरिक्तसंबंधानंगीकारे

विप्रकर्षाद्यविरुद्धत्वेनैवधर्मिग्राहकेणसिद्धेः । अन्यथाहिपृथक्सिद्धयोरेवसंयोगसंबंधदर्शनात्अपृ थक्सिद्धिःसमवायसंबंधस्यबाधिकास्यात् । ध्वंसादेश्चातीतादिनामिथ्यात्वलक्षणांतर्गतस्यात्यंता भावस्यचप्रतियोगिनावेदांतनिष्ठशक्तितात्पर्ययोश्चब्रह्मणा( ज्ञात्राश्रि )जीवाश्रिताज्ञानस्यचाऽज्ञेयेन ब्रह्मणाव्यवहारस्यचव्यवहर्तव्येनब्रह्मणामुमुक्षायाश्चमोक्षेणत्वदुक्तदूषणस्यचदूष्येणत्वद्वाक्यस्यचा ऽर्थेनज्ञानस्यज्ञेयेनसंबंधोनेतित्वद्वाक्योक्तसंबंधाभावस्यत्वज्ज्ञानेनाऽसंबंधात्स्वन्यायस्वक्रियास्ववचनवि

स्वन्यायविरोधादिस्यादित्याह ॥ ध्वंसादेरित्यादिना॥ आवश्यकत्वोपपादनाय॥ मिथ्यात्वेत्यादि॥ अर्थेनासंबंधादित्यंतं स्वन्यायविरोधोदाहरणं । ज्ञानस्येत्यादिकंस्वक्रियास्ववचनविरोधयोः । तत्रज्ञानस्यज्ञेयेनसंबंधानिरूपणन्यायेनध्वंसप्रागभावा देःप्रतियोगिनापिदुर्निरूपणीयःस्यादितिस्वन्यायविरोधः । ज्ञानज्ञेययोःसंबंधाभावंप्रतिपादयितुंज्ञानस्यज्ञेयेनसंबंधोनास्तीतिप्रा गुक्तंयद्वाक्यंतत्प्रयोगरूपायाक्रियातत्प्रतिपाद्यस्यसंबंधाभावरूपार्थस्यैतद्वाक्यजन्यज्ञानस्यचसंबंधान्मूकोहमितिस्वक्रियाविरो

धः।ज्ञानज्ञेययोःसंबंधाभावरूपार्थस्यज्ञानज्ञेययोस्संबंधोनास्तीत्येतद्वाक्यजन्यज्ञानेनसंबंधंबोधयितुंएतद्वाक्यंप्रयुङ्क्ते ज्ञानज्ञेययोः संबंधोनास्तीतिवदतिचेतिमेमातावंध्येतिवत्स्ववचनविरोधः । तथाचयथाध्वंसप्रतियोग्यादिषुनाध्यासिकसंबंधः किंत्वन्यएव तथाज्ञानज्ञेययोरपीत्यर्थः । ननूक्तेषुध्वंसादिषुआध्यासिकसंबंधोभविष्यतीतिसंबंधाभावप्रयुक्ताःस्वन्यायविरोधादयोनस्युरित्य तआह ॥ नहीत्यादिना ॥ एतेनेति ॥ स्वन्यायविरोधादिनेत्यर्थः ॥ न्यायइति ॥ "न्यायेदृढेऽन्यसामान्यात्किंदृढेऽन्यदपिबा ध्यता )" मितिखंडनकारिकापाठः । तदर्थस्त्वित्थं । ज्ञानज्ञेययोःसंबंधानुपपत्त्याआध्यासिकसंबधोंऽगीकार्यइतिमदीयेन्याये

रोधाःस्युः । नहिज्ञेयंज्ञानइवप्रतियोगि(शक्त्या)क्याज्ञेयेष्यमाणव्यवहर्तव्यादयःअभावशक्त्यज्ञानेच्छा व्यवहारादावध्यस्ताः । एतेन । "न्यायेदृढे( न्यसामान्यात्किंदृढेऽन्यदपि )न्यायसाम्यात्किमन्यदपिबा ध्यतां।नममत्वंमुमुक्षूणामनिर्वचनवादिना" मितिनिरस्तं। स्वव्याहतस्यन्यायाभासतयादार्ढ्याभावात् ।

स्वतएवदृढेसतिध्वंसप्रतियोग्यादेःप्रसिद्धसंबंधाभावात्संबंधांतरंयथांगीकार्यंतथात्वयापिज्ञानज्ञेययोरप्यतिरिक्तःसंबंधोंऽगीक्रि यतांन्यायसाम्यादितिध्वंसप्रतियोग्यादेरन्यसाम्यापादनात्किं त्वदीयन्यायादार्ढ्यंसहमेवस्वीकरिष्यामीतिभवदापादनंव्यर्थंस्या दितिभावः। मदीयेन्यायेपूर्वोक्तेदृढेसतितन्न्यायाद्ध्वंसप्रतियोग्यादीनामतिरिक्तसंबंधवत्त्वंबाध्यतां तत्राप्येतन्न्यायादाध्यासिकएव संबंधोऽस्तु । ननुध्वंसप्रतियोग्यादीनामाध्यासिकसंबंधवत्त्वेमिथ्यात्वंप्राप्तमितिचेन्न । इष्टापत्तेरित्याशयवानाह ॥ नममत्व मिति ॥ अस्माकंकुत्रापिपदार्थेपक्षपातोनास्तीत्यर्थः । दृढेऽन्यदपिबाध्यतामित्याशंक्यखंडयति ॥ स्वव्याहतस्येति ॥ व्या

वहारिकव्यवस्थोच्छेदस्येत्यर्थः ॥ अन्यथेति ॥ स्वव्याहतस्यापिन्यायस्यदार्ढ्यइत्यर्थः ॥ जातीति ॥ यदिमहान
ससाधर्म्याद्धूमवत्त्वात्पर्वतोऽग्निमान्स्यात्तदाह्रदसाधर्म्यात्द्रव्यत्वान्निरग्निकःकिंनस्यादितिजात्युत्तरं । इदंचस्वव्याहतं ।
यदिसाधकसाधर्म्यात्पक्षधर्मत्वादेःद्रव्यत्वहेतुःसाध्यसाधकःस्यात्तदाऽसाधकानुमानसाधर्म्यात्पंचम्यंतत्वादेःसाध्यासाधकोपि
किंनस्यादित्यापादनसंभवेनस्वन्यायविरोधात् ।एवंचजातिवादीवदिष्यति मदीयेज्ञानेस्वतएवदृढेसाम्यापादनंव्यर्थंअहमेवतत्स्वी
करिष्यामीति दृढत्वेतद्विरुद्धत्वाद्भवदीयंस्वन्यायविरोधापादनमेवबाधितमित्यर्थः । मुमुक्षायाश्चमोक्षेणेत्यत्रशंकांपरिहरति ।
नचेति । इच्छायाविषयेणातिरिक्तोविषयविषयिभावसंबंधोनांगीक्रियते किंतर्हिघटविषयकज्ञानजन्यत्वमेवेच्छायाघटविषय
अन्यथाजातिवाद्यपीत्थंवदेत् । नचेच्छायास्तज्ज्ञानजन्यत्वादन्यस्तत्संबंधोनेतियुक्तं । ज्ञानेसंनिकर्षाधी
नस्येवस्मृतावनुभवाधीनस्येवचइच्छायांज्ञानाधीनस्यविषयसंबंधस्यानुभवात् । अन्यथाघटपटावविति
कत्वं नतुज्ञानस्येवेच्छायाःसविषयकत्वमस्तीत्यर्थः । अन्योविषयविषयिभावःकुतोनयुक्तइत्यतआह ॥ज्ञानइति ॥ ज्ञा-
नेइंद्रियसन्निकर्षाधीनंसविषयकत्वमस्तिवास्तवं तदपिनस्यात् तत्रघटसन्निकृष्टेंद्रियजन्यत्वमेवघटविषयकत्वमितिवक्तुंशक्य
त्वात् स्मृतावपिघटविषयकानुभवजन्यत्वमेवसविषयकत्वमस्तुनवास्तवमिति अनुभवाधीनमनुभूयमानंवास्तवंसविषयकत्वंन
स्यादित्यर्थः । तथाचयथाज्ञानादौसन्निकृष्टकरणजन्यत्वाद्यधीनं स्मृतौचजनकानुभवाधीनंसविषयकत्वमस्ति तथेच्छायामपि
स्वजनकज्ञानाधीनंसविषयकत्वमस्तीतिसएवसंबंधस्तत्रवक्तव्यइतिभावः ॥ अन्यथेति ॥ घटविषयकज्ञानजन्यत्वेनैवेच्छाया

घटीयत्वंनवास्तवं तद्विषयकत्वमस्तीतियद्युच्यते तर्हिघटपटावितिसमूहालंबनज्ञानानंतरंपटोमेभूयादितीच्छायाअपिघटीयत्वं स्यात् । घटविषयसमूहालंबनज्ञानजन्यत्वादितिभावः । नित्येति । नित्यायाईश्वरेच्छायाघटादिविषयसंबंधोनस्यात् तद्विषयकज्ञानजन्यत्वाभावादिनाजन्यत्वादितिभावः । अनित्येच्छायामियंव्यवस्थेतिपरोवदिष्यति अतोदूषणांतरमाह ॥ पुत्रादीति ॥ घटविषयकज्ञानजन्यत्वमेवेच्छायास्तद्विषयकत्वमितियद्युच्यते तर्हिपुत्रादिविषयकज्ञानजन्यत्वान्निर्विषयस्यसुखादेरपिपुत्रादिविषयकत्वव्यवहारःस्यादित्यर्थः । अज्ञानस्याऽज्ञेयेनेत्यत्रशंकांपरिहरति ॥ अज्ञानस्येति ॥ तद्विषय

ज्ञानजन्यायाःपटेच्छायाघटीयत्वापातात् । नित्येश्वरेच्छायाविषयाऽऽसंबंधापाता

च्च । पुत्रादिधीजन्यसुखादेस्तद्विषयत्वापाताच्च । अज्ञानस्यचतज्ज्ञाननिवर्त्यत्वाति

रिक्ततद्विषयत्वाभावेतन्निवर्त्यत्वमेवनस्यात् तस्यसमानविषयकज्ञाननिवर्त्यत्वात् ।

त्वेति ॥ वास्तवेत्यर्थः । अज्ञानस्यापिवास्तवमज्ञेयविषयकत्वंनास्ति किंनाम तज्ज्ञाननिवर्त्यत्वमेवतद्विषयकत्वमितिनवाच्यं । तथात्वेतद्विषयकज्ञाननिवर्त्यत्वमेवनस्यात् कुतइत्यतआह ॥ तस्येति ॥ अज्ञानस्येत्यर्थः ॥ समानेति ॥ स्वविषयविषयकेत्यर्थः । तथाचाज्ञानस्यस्वविषयविषयकज्ञाननिवर्त्यत्वनियमेनस्वविषयेत्युक्त्यावास्तवंसविषयकत्वमंगीकार्यमितिभावः । ज्ञानस्याज्ञानविषयविषयकत्वेननिवर्तकत्वानंगीकारे "अतद्विषयज्ञानेनतदज्ञाननिवृत्तौघटज्ञानेनापिनिवर्तेते"तिभगवत्पादोक्तातिप्रसंगोद्रष्टव्यः । नन्वज्ञानस्यसविषयकत्वंतदास्यात् यदिविषयाच्छादकत्वंस्यात् नचैवं किंनाम यथांधकारस्यगृह

धरूपंप्रतियोगित्वादिकंवाऽनियामकंसत्संबंधकार्यकारि तद्द्वाऽपिविषयत्वतयैवाऽस्तु ।

भावाभावादेरपिसंबंधोमिथ्यैवेतिचेन्न । प्रपंचमिथ्यात्वसिद्धेःप्राक्तदसिद्ध्याऽन्योन्या

बंधांतरमिति ॥ प्रतियोगित्वादिकमित्यादिपदेनानुयोगित्वसंग्रहः ॥ इहापीति ॥ दृग्दृश्ययोर्विषयविषयिभावसंबंधोपिस्वभाव संबंधोवा( स्वरूपमेववा )ऽसंबंधरूपोवासंबंधकार्यका(रीभवत्वित्य)रिस्यादित्यर्थः । ननुप्रतियोग्यभावादी(नांसंबंधस्याकल्पि तत्वदर्शनात् )नामकल्पितस्यसंबंधस्यदर्शनाज्ज्ञानज्ञेययोरप्यकल्पितआध्यासिकसंबंधातिरिक्तस्संबंधःसिद्ध्यतीत्युक्तं तदयुक्तं प्र तियोग्यभावादिसंबंधस्यापिमिथ्यात्वेनदृष्टांतासंमतेरित्याशंकते ॥ भावाभावादेरिति ॥ आध्यासिकसंबंधइत्यस्यज्ञानज्ञेय योःसंबंधोऽस्ति । सचाऽध्यस्तइतितयोरध्यासएवसंबंधइतिचार्थद्वयंपरेणस्वीकृतं तत्राऽऽद्यार्थाऽभिप्रायेणेयंशंकेतिज्ञातव्यं ॥ प्रपं

चेति॥दृग्दृश्ययोः संबंधानुपपत्त्याज्ञेयमात्रस्याध्यासिकत्वेसिद्धेतन्मध्यपतितस्यप्रतियोग्यभावादिसंबंधस्यापिमिथ्यात्वंसिद्ध्यति तन्मिथ्यात्वेसिद्धेकुत्रापिसत्यसंबंधस्याकल्पनाज्ज्ञानज्ञेययो(रप्याध्या)राध्यासिकसंबंधःसिद्ध्यतीत्यन्योन्याश्रयइत्यर्थः॥ घटस्येति॥ ज्ञानज्ञेयसंबंधस्यमिथ्यात्वंनसिद्ध्यति यस्संबंधस्सधर्मिसमसत्ताकोदृष्टः यथाघटस्याभावइत्यत्रघटप्रतियोगिकोऽभावधर्मिकःसंबंधोऽभावसमसत्ताकोदृष्टः। एवमेवघटस्यज्ञानमित्यत्रापिज्ञानस्यधर्मित्वात्तत्समसत्ताकएवस्वीकार्यः ज्ञानंचचैतन्यमेवेतिनसंबंधमिथ्यात्वसिद्धिरित्यर्थः॥ संयोगवदिति॥ यथाविभक्तयोर्घटपटयोस्संयोगआरोपितस्तद्वदित्यर्थः। अन्येत्व

श्रयात्। घटस्याभावइत्यादावभावसमसत्ताकसंबंधवत्घटस्यज्ञानमित्यत्रापिज्ञानसमसत्ताकसंबंधस्यस्वीकार्यत्वाच्च। अस्तुवासंयोगादिवत्तवविषयत्वमपिमिथ्यैव। नचतावताप्रस्तुतदृश्यमिथ्यात्वसिद्धिः। ज्ञानस्यैवज्ञेयस्यसत्यत्वेपितत्संबंधमिथ्यात्वोपपत्तेः।

न्यतरकर्मादिजन्यत्वाभावेनविभुद्रव्ययोस्संयोगाभावादजन्यसंयोगस्यचाप्रामाणिकत्वात्तत्संयोगस्तार्किकैकदेशिमतेआरोपितस्तद्वदित्यर्थःइत्याहुः॥ तथाचयथासंयोगसंबंधस्यमिथ्यात्वेपिसंबंधिनोस्सत्यत्वमेवंविषयत्वरूपसंबंधस्यमिथ्यात्वेपिप्रपंचमिथ्यात्वंनसिद्ध्यति। दृश्येतिहेतुगर्भं। ज्ञानेनसत्यतयाप्रमितत्वादित्यर्थः। ननुसंबंधमिथ्यात्वमेवसंबंधिनोर्मिथ्यात्वमाक्षिपतीतिशंकायांसंयोगस्यमिथ्यात्वेपिसंबंधिनोस्तदभावादितिदूषणेसत्येवदूषणांतरमाह॥ ज्ञानस्यैवेति॥ ज्ञेयस्यदृश्यप्रपंचस्यसत्यत्वेपि तत्संबंधस्यमिथ्यात्वमस्तु संबंधिनःसत्यत्वेपिसंबंधस्यमिथ्यात्वंतुतवापिसंमतमित्याशयेनोक्तं॥ ज्ञानस्येति॥ यथादृग्दृश्ययो

मिध्येएकस्याश्चैतन्यरूपदृशः सत्यत्वेपितत्संबंधस्यमिथ्यात्वंस्वीकृतं । एवंदृग्दृश्ययोरुभयोस्सत्यत्वेपिततसंबंधस्यमिथ्यात्वोपपत्ते रित्यर्थः । ननुज्ञेयंज्ञानेऽध्यस्तं मिथ्याभूतसंबंधप्रतियोगित्वात् यन्मिथ्याभूतसंबंधप्रतियोगितदपरस्मिन्नारोपितंयथारजतंमि थ्याभूततादात्म्यरूपसंबंधप्रतियोगिशुक्तावध्यस्तमितिचेत्तत्राह ॥ नचेति ॥ दंडचैत्रयोर्विभक्तयोर्यःसंयोगआरोपितोयदातदा मिथ्याभूतसंबंधप्रतियोगीचैत्रोऽपरस्मिन्दंडेऽध्यस्तोनभवतीतिचैत्रेव्यभिचारइत्यर्थः । ननुतात्विकसंबंधप्रतियोगीपरस्मिन्नध्य स्तइतिनोऽभिप्रायः । नचदंडचैत्रादेरारोपितःसंयोगस्तात्विकः अतोनदंडेचैत्रस्याध्यासो तोनचैत्रेव्यभिचारइत्यतःस्वरूपासि

नचसंयोगादिरपित्वन्मतेतात्विकः । नचतावतादंडेचैत्रोध्यस्तः । नचा
ध्यासिकसंबंधोपितात्विकःयेनेच्छादौक्लृप्तसंबंधत्यागेनज्ञानेसआश्रीयेत ।

द्धिरित्याह ॥ नचेति ॥ इच्छादौइच्छेष्यमाणादौक्लृप्तसंबंधोहिविषयविषयिभावः ।इच्छेष्यमाणादौक्लृप्तस्याविषयविषयिभावसंबं स्यत्यागेनज्ञानज्ञेययोराध्यासिकसंबंधकल्पनंहिज्ञेयमिथ्यात्वसिद्ध्यर्थं। नचतदंगीकारेपिज्ञेयमिथ्यात्वसिद्धिः।तत्साधकस्यतात्विक संबंधप्रतियोगित्वादित्यस्यस्वरूपासिद्धत्वादितिभावः । ननुदृष्टानुसारेणघटतदभावादिष्विवधर्मिसमसत्ताकःसंबंधोज्ञानज्ञेययोर स्त्वित्ययुक्तं। तत्राभावादेःप्रतियोग्यादिनाताद‍ृशसंबंधःसंभवतीतिकल्प्यते।घटतदभावयोरेकसत्ताकत्वात्। ज्ञानस्यज्ञेयेनसंबंधस्त थानभवति।तथाहि।ज्ञानज्ञेययोरुभयोरपिसंबंधित्वात्ससंबंधःकिंज्ञानसमसत्ताकोवाज्ञेयसमसत्ताकोवा । नाद्यः। ज्ञानस्यचैतन्यरू

पतयास(त्य)त्त्वेनसंबंधस्यापिसत्यत्वापत्तेः।द्वितीयेज्ञेयस्यमिथ्यात्वेनसंबंधस्यापिमिथ्यात्वापत्तेरिति परस्परप्रतिबंधादित्यतआह॥ नचेति ॥ नियमाकेति ॥ संबंधस्यसत्तासंबंधिसत्तयासमाना नतुयावत्संबंधिसत्तया । नियामकाभावादित्यर्थः । तथाचज्ञानसम सत्ताकस्तात्विकएवसंबंधःस्वीकार्यइतिभावः।ज्ञानज्ञेययोस्तात्विकसंबंधाकल्पनेबाधकंचाह ॥ दृग्दृश्ययोरिति ॥ दृग्दृश्ययोःसंबं धोनेत्येतद्वाक्यप्रतिपाद्यार्थस्यएतद्वाक्यजन्यज्ञानेनासंबंधेनश्रवणादिरूपक्रियायाश्चश्रोतव्येनासंबंधेनचरमवृत्तिरूपसाक्षात्कार रूपक्रियायाश्चसाक्षात्कर्तव्येनब्रह्मणाऽसंबंधेनतववाक्यप्रयोगरूपायाक्रियासाविरुद्ध्येतेत्यर्थः ॥ असंबंधेनेति ॥ ब्रह्मज्ञानरू

नचाभावादेःप्रतियोग्यादिनासंबंधोस्ति नतुज्ञानस्यज्ञेयेनेतियुक्तं । नियामकाभावात् । दृग्दृश्य योस्संबंधोनेत्येतद्वाक्यजज्ञानस्यस्वज्ञेयेन श्रवणमननादीनांच श्रोतव्यादिरूपेणब्रह्मणाचरमसा क्षात्कारस्यचसाक्षात्कर्तव्येन ब्रह्मणाअसंबंधेनस्वक्रियादिविरोधापाताच्च । नहिदृग्दृश्ययोस्संबंधो नेतिवाक्यज(न्य)ज्ञाने दृग्दृश्यसंबंधाभावश्चरमसाक्षात्कारादौचब्रह्माध्यस्तं । ब्रह्मणिअध्यस्तस्य

पधर्मिसमसत्ताकसंबंधाभावेनेत्यर्थः । तथाचोक्तस्थलेतादृशसंबंधासिद्धिरेवज्ञानज्ञेययोस्तादृशसंबंधानंगीकारेबाधिकेत्याशयः । ननूक्तस्थलेप्याध्यासिकसंबंधएवस्वीक्रियतइतिचेत्तत्राह ॥ नहीति ॥ श्रवणमननादीनांचरमसाक्षात्कारस्यचेत्यत्रशंकते ॥ ब्रह्मणीति ॥ यथाकथंचिदेकस्यैकत्राध्यासमंगीकृत्याध्यासिकसंबंधोस्माभिरुच्यते तत्रसाक्षात्कारादौब्रह्मणोऽध्यासाभावेपि साक्षात्कारश्रवणादिरूपक्रियायाब्रह्मण्यध्यासोंगीक्रियते तावतैवब्रह्मसाक्षात्कारादीनांब्रह्मीयत्वंभविष्यतीत्यर्थः ॥ तदिति ॥ ब्र

ह्मेत्यर्थः॥तत्त्वेति॥ब्रह्मीयत्वापातादित्यर्थः॥सर्वस्यापिब्रह्मण्यध्यस्तत्वेन घटसाक्षात्कारस्यापिब्रह्मण्यध्यस्तत्वादितिभावः। यदिसाक्षात्कारस्यब्रह्मण्यध्यासोंगीक्रियते तर्हिंन्यायसाम्याद्वेदतात्पर्यादेरपिधर्मादावध्यासःस्यात्। प्रकृतेपिज्ञेयप्रपंचएवज्ञानाध्यासापातइत्याह ॥ धर्मादावित्यादिना ॥ दृग्दृश्ययोःसंबंधोनेत्यादिनोक्तंसंगृह्णाति ॥ एवंचेति ॥ तदर्थस्य दृग्दृश्यसंबंधाभावस्य अनध्यासादित्यन्वयः। अन्यः आध्यासिकसंबंधादन्योविषयविषयिभावः । ननुज्ञानज्ञेययोराध्यासिकसंबंधादन्यस्संबंधएव नसंभवति । तथाहि । ज्ञानंप्रकाशःप्रकाशस्यचविप्रकृष्टेनप्रकाश्येनसंबंधाभावस्यप्रदीपादौदृष्टत्वादत्रापिविप्रकृष्टेनप्रकाश्येन

तत्साक्षात्कारत्वेघटसाक्षात्कारस्यापितत्त्वापातात्। धर्मादौतत्तात्पर्यादेरनध्यासाच्च। इहापिज्ञेये
ज्ञानाध्यासापाताच्च।एवंच "दृग्दृश्ययोर्नसंबंधइतिवाक्योत्थसंविदि॥ अनध्यासात्तदर्थस्यसंबंधोन्य
स्तयोर्मतः" ॥ यद्यपिज्ञानंप्रकाशस्तथापीच्छादिवदांतरत्वेनप्रदीपवैलक्षण्यात् परोक्षवृत्तौदर्शनाच्च

विषयविषयिभावसंबंधोनयुक्तः। तथाचज्ञानंविप्रकृष्टेनविषयेणनसंबध्यते प्रकाशत्वात्प्रदीपवदित्यनुमानविरोधइतिचेत्तत्राह। यद्यपीत्यादिना। यथेच्छायाआंतरायाबहिष्ठविषयविषयकत्वं एवंप्रकाशरूपज्ञानस्यापि। आंतरत्वेनप्रदीपवैलक्षण्यात्।तथापरोक्षस्थलेंतःकरणवृत्तेर्बहिर्निस्सरणाभावेनतद्विषयिणीवृत्तिरंतरेवभवतीतित्वन्मतरहस्यं। एवंचांतरायांपरोक्षवृत्तौविप्रकृष्टेनापिविषयेणसंबंधस्यत्वन्मतेदर्शनाच्च विप्रकृष्टे(नापि)नप्रकाश्येनाध्यासिकसंबंधातिरि(क्तोपि)क्तोविषयविषयिभावसंबंधोयुक्तएवेत्यर्थः। तथाचत्वदीयानुमाने आंतरत्वाभावउपाधिरित्युक्तंभवति । यदिप्रदीपदृष्टांतेनप्रकाशरूपज्ञानस्यविषयेणसंबंधाभावःकथ्यते

तर्हिंप्रदीपेप्रकाश्यस्यघटादेरध्यासा(दर्शनात्त)भावात्तद्दृष्टांतेन प्रकाशरूपेज्ञानेपिज्ञेयस्याध्यासोनयुक्तःस्यादित्याह॥ अन्यथेति ॥ ज्ञानविशेषेज्ञेये( नसहाध्यताति )नातिरिक्तसंबंधस्त्वयाप्यभ्युपगतइतिसर्वत्रज्ञानेसएवास्त्वित्याह ॥ किंचेति ॥ नियमइति ॥ येन दृश्यप्रपंचस्यदृश्यध्यासःसिद्ध्येदित्यर्थः।यज्ज्ञेयंतज्ज्ञानेऽध्यस्तमितिनियमःकुतोनास्तीत्यतोव्यभिचारादित्याह॥ अनध्यस्तस्येति ॥ तुच्छस्यस्वज्ञानेशब्दादिजन्यज्ञानेऽनध्यासादित्यन्वयः । तदुपपादनायोक्तमनध्यस्तस्येति । तुच्छस्याऽनध्यस्तत्वांगीकारात् । अध्यस्तेप्रातिभासिकसत्वमंगीकृत्यासद्वैलक्षण्यांगीकारात् तुच्छस्यचाध्यासांगीकारेप्रातिभासिक( सत्वाद्या )

विप्रकृष्टेनापिप्रकाश्येनसंबंधोयुक्तः। अन्यथादीपवदेवाध्यासिकसंबंधोनस्यात्। किंचतवापिमतेज्ञे
यस्यनस्वज्ञानेऽध्यस्तत्वानियमः॥ अनध्यस्तस्यतुच्छस्याविद्यानिवृत्तिः पंचमप्रकारेतिमतेऽविद्यानिवृत्ते

ताद्यापत्तेरितिभावः । पंचमप्रकारेति । "नसन्नासन्नसदसन्नानिर्वाच्यश्चतत्क्षयः । यक्षानुरूपोबलिरित्याचार्याःप्रत्यपीपदन्नि"तिवचनादितिभावः । अविद्याया अनिर्वाच्यत्वेनसदसद्वैलक्षण्यात्प्रतियोगितदभावयोर्वैलक्षण्यस्यावश्यकतयातन्निवृत्तेःपंचमप्रकारत्वंतैरंगीकृतमितिध्येयं। अविद्यानिवृत्तेःस्वज्ञानेऽनध्यासादित्यन्वयः । अध्यस्तत्वेप्रातिभासिकसत्वापत्त्यापंचमप्रकारत्वभंगइतिभावः। अभावस्यस्वज्ञानेऽनध्यासादित्यन्वयः ॥ नन्वभावस्यप्रपंचांतर्गतस्यस्वज्ञानेऽध्या(सोंऽगीक्रियतए)सएवेतिचेन्न। तस्यपारमार्थिकत्वांगीकारात्। ननुकथंपारमार्थिकत्वमभावस्य तथात्वेदृग्रूप( ब्रह्माभेदाप )त्वापत्तेः । नचेष्टाप

त्तिः । भावाभावयोस्तदयोगादित्यतउक्तं ॥ अदृग्रूपत्वेपीति ॥ अब्रह्मरूपत्वेपीति सत्यस्येतिशेषः। ननुतर्ह्यद्वैतहानिरित्यतउ क्तमभावाद्वैतमतइति । अभावरूपंद्वितीयंपारमार्थिकमस्ति "अद्वितीय"मित्यादिश्रुतिस्तुद्वितीयभावनिषेधपरेतिमतइत्यर्थः। "भावाद्वैतमत" इत्यपिपाठः । तत्रभावरूपंद्वितीयंनास्तिअभावरूपंद्वितीयमस्तीतिमतइत्यर्थोद्रष्टव्यः । तथाचोक्तनियमस्यतु च्छेऽविद्यानिवृत्तावभावतत्वेचाभावात्तत्रैवव्यभिचारइतिभावः । पुनरुक्तनियमस्यस्थलांतरेव्यभिचारमाह ॥ अपरोक्षेति ॥ अतीतादेर्व्यावहारिकस्यपरोक्षानुभवरूपेऽनुमित्यादिरूपस्वज्ञानेऽनध्यासादित्यन्वयः । नन्वतीतादेरपिव्यावहारिकस्यानुमि

(रभावाद्वैमते)र्भावाद्वैतमतेअभावस्यचादृग्रूपत्वेपि स्वज्ञानेऽनध्यासात् । अपरोक्षा नुभवैकरसेब्रह्मण्यध्यस्तस्यव्यावहारिकस्यातीतादेर्नित्यातींद्रियस्यचपरोक्षानुभवरूपे स्वज्ञानेऽनध्यासात् । स्मर्यमाणस्यचस्मृतिरूपेवृत्त्यात्मकेस्वज्ञानेऽनध्यासात् । प्रातिभा सिकस्यचप्रातिभासिकेस्वज्ञानेव्यावहारिकस्यच वर्तमानघटादेर्व्यावहारिकेस्वज्ञाने

त्यादिरूपपरोक्षज्ञानएवाध्यासोस्त्वित्यतउक्तमपरोक्षेति । अध्यस्तस्य अध्यस्तत (यात्वदंगी) यांगीकृतस्यानित्यातींद्रियस्य धर्मादेः । स्थलांतरेव्यभिचारमाह ॥ स्मर्यमाणस्येति ॥ स्मृतिविषयस्येत्यर्थः । ननुस्मर्यमाणमपिस्मृतावेवाध्यस्तंस्मृतेश्चैतन्य रूपत्वादित्याशंकावारणायवृत्त्यात्मकइति । स्मृतेरंतःकरणवृत्त्यात्मकत्वात्तत्रचैतन्यप्रतिफलनादेरप्यभावादित्यर्थः। स्थलांतरेव्य

त्वन्मतइति ॥भ्रमरूपज्ञानस्यापि॥ अर्थज्ञानात्मकोभयविधभ्रमांगीकारादितिभावः।ननुप्रातिभासिकस्यापिप्रातिभासिकेस्व ज्ञानेव्यावहारिकस्यापिघटादेर्व्यावहारिकेस्वज्ञानएवाध्यासोस्त्वतोनव्यभिचारइत्यतआह ॥अध्यस्तेति ॥ अधिष्ठानस्याध्यस्ता धिकसत्ताकत्वनियमादितिभावः । अतएवाध्यस्ताधिकसत्ताकत्वाभावप्रदर्शनार्थंपूर्वंप्रातिभासिकेव्यावहारिकइत्युक्तमितिध्येयं । प्रातिभासिकस्यरूप्यादेःप्रातिभासिकेस्वज्ञानेऽध्यासइत्यत्रदूषणांतरमाह ॥प्रातिभासिकादिति॥ रूप्यादित्यर्थः। अधिष्ठानस्या ध्यस्तात्पूर्वंसत्त्वनियमात्प्रातिभासिकाद्रूप्यात्पूर्वंप्रातिभासिकस्यतज्ज्ञानस्यसत्त्वमयुक्तं। रूप्यस्यप्रतिभासमात्रशरीरत्वेनतयोरेकका

नध्यासात् । त्वन्मतेऽर्थवद्भ्रमरूपज्ञानस्यापिकल्पितत्वात् । अध्यस्ततुल्यत्वेनकल्पितस्यचान धिष्ठानत्वात् प्रातिभासिकात्पूर्वमसत्वास्तत्प्रतीतेरधिष्ठानत्वायोगाच्च । त्वयापिरूप्यादिकमिदमं शावच्छिन्नचैतन्येध्यस्तं । रूप्याकाराविद्यावृत्तिप्रतिबिंबितेनतुचैतन्येनप्रकाशतइत्यंगीकाराच्च

लीनत्वादितिभावः । इतोपिनरूप्यस्यज्ञानेऽध्यासः तथात्वेत्वन्मतविरोधादित्याह ॥ त्वयापीति ॥ इदमंशेति ॥ शुक्त्यवच्छि न्नेत्यर्थः ॥ प्रकाश्यतइति॥ तथाचरूप्याकाराविद्यावृत्तिप्रतिबिंबितचैतन्यमेवरूप्यज्ञानमित्यर्थः। तथाचरूप्यज्ञानाधिष्ठानयोर्भे दान्नरूप्यादेःस्वज्ञानेऽध्यासइत्याशयः। अधिष्ठानाज्ञानेनाध्यासजन्म तज्ज्ञानेनाध्यासनिवृत्तिरितिविवेकः ॥रूप्येति॥ रूप्यज्ञान स्याधिष्ठानत्वाद्रूप्यज्ञानाज्ञानेनरूप्यभ्रमजननप्रसंगः । रूप्यज्ञानज्ञानेनरूप्यभ्रमनिवृत्तिप्रसंगइत्यर्थः। नचेष्टापत्तिः । ज्ञानस्य

ज्ञातैकसत्त्वेनतदज्ञानायोगादितिभावः ॥ ज्ञानमिति ॥ अधिष्ठा(नसामानाधिकरण्येनाध्य)नासंभिन्नतयाध्यस्तप्रतीतेर्दर्शनाज्ज्ञानंरूप्यमितिधीःस्यादितिभावः । ज्ञानात्स्वाधिष्ठानभूतात् स्वज्ञाने पश्चाद्भाविनि । तथाचघटादेःपूर्वमसत्त्वेसन्निकर्षायोगेनाधिष्ठानभूततज्ज्ञानोत्पत्तेरेवायोगादित्यर्थः । स्वाधिष्ठानभूतस्वज्ञानेघटादेरध्यस्तत्वेप्रातिभासिकत्वापत्त्याऽध्यासेसतिघटस्वरूपसिद्ध्याघटसन्निकर्षजन्यघटज्ञानरू(पघटाधि)पाधिष्ठानसिद्धिः अधिष्ठानेसिद्धेसतितत्रघटादेरध्याससिद्धिरित्यन्योन्याश्रयइतिहृदयं ।

रूप्यादेःस्वज्ञानेऽध्यस्तत्वेऽधिष्ठानाज्ञानज्ञानाभ्यामध्यासजन्मनिवृत्त्योर्नियतत्वाद्रूप्यज्ञानस्याज्ञानज्ञानाभ्यांरूप्यभ्रमजन्मनिवृत्त्योःप्रसंगाच्च। ज्ञानंरूप्यमितिधीप्रसंगाच्च। घटादेःस्वसन्निकृष्टेंद्रियजन्यात्स्वज्ञानात्पूर्वंसत्त्वेनस्वज्ञानेऽध्यासायोगाच्च । ननुयाघटसन्निकर्षजावृत्तिर्नतयाघटःप्रकाश्यः येनचप्रकाश्यःघटाधिष्ठानचैतन्येन नतद्धटसन्निकर्षजन्यमितिचेन्न ।त्वन्मतेपिवृत्तेरेवाज्ञानविरोधित्वात्।

ननुनमयाघटसन्निकृष्टेंद्रियजन्यज्ञानेऽध्यासोंऽगीक्रियते येनोक्तदोषः किंनाम घटसन्निकर्षजन्यायावृत्तिस्तयाघटोनप्रकाश्यते साघटज्ञानंनभवतीतियावत् । तस्यावृत्तेरज्ञाननिवर्तकत्वमात्रमेवांगीक्रियते तथाचाज्ञानेनिवृत्तेतदभिव्यक्तंयद्धटाधिष्ठानचैतन्यंतेनप्रकाश्यते तदेवचैतन्यंघटज्ञानमितियावत् । यच्चघटादिज्ञानत्वेनाभिमतंघटाधिष्ठानचैतन्यं नतद्धटसन्निकर्षजन्यं तच्चाधिष्ठानचैतन्यरूपंज्ञानंचघटापेक्षयापूर्ववृत्तीतियुक्तोघटादेःस्वज्ञानेऽध्यासइत्याशंकते ॥ नन्विति ॥ ननुवृत्तेरेवाज्ञानविरोधित्वंमयांगी

कृतमितिततःकिंप्रकृतइत्यतआह ॥ अज्ञानेति ॥ अन्यस्य चैतन्यरूपस्य। तथाचवृत्तेरेवज्ञानत्वात्तस्याश्चघटसन्निकृष्टेंद्रियजन्यत्वे नवृत्तेःपूर्वंघटस्यसत्त्वान्नतस्यज्ञानेऽध्यासइत्यर्थः। घटाधिष्ठानचैतन्यस्यैवघटज्ञानत्वांगीकारेस्ववचनविरोधंचाह ॥ त्वयापीति॥ घटाधिष्ठानस्यवृत्तिप्रतिबिंबितचैतन्यस्यत्वन्मतेआभाससंज्ञा । तथाचोक्तं । "चैतन्यंद्विविधंप्रोक्तंवृत्तौयत्प्रतिबिंबितं । आभास उच्यतेऽन्यच्चानाभासइतिशब्दित"मिति । उक्तिर्व्यवहारः। घटोयमित्यसावुक्तिरित्यस्यवृत्तिरूपज्ञानेनभवतीत्यर्थः। घटोयमिति

अज्ञाननिवर्तकादन्यस्यचज्ञानस्यानुपलंभात् त्वयापि "घटोयमित्यसावुक्तिराभासस्यप्रसा दतः। विज्ञातोघटइत्युक्तिर्ब्रह्मानुभवतोभवेत्" इतिवदतावृत्तिप्रतिबिंबितस्यघटानधिष्ठा नस्यचैतन्यस्यैवघटानुभवत्वोक्तेश्च। किंचदृश्यत्वान्यथानुपपत्त्यामिथ्यात्वमित्यर्थापत्तिर्विवक्षि ता किंवासत्यत्वेदृश्यत्वंनस्यादित्यनुकूलतर्कमात्रं ।नाद्यः। तत्सामग्र्यभावात्। आक्षेप्यस्यो

व्यवहारजनकंघटोयमितिज्ञानमाभासरूपमेवेतियावत् ॥ विज्ञातइति ॥ घटज्ञानवानहमित्युक्तिरित्यर्थः । ब्रह्मरूपानुभवसाक्षी। विज्ञातोघटइत्युक्तिजनकंअनुव्यवसायरूपंज्ञानंसाक्ष्येवेतियावत् ॥ घटानधिष्ठानस्येति ॥ तथाचघटानधिष्ठानस्यवृत्तिप्रतिबिंबितस्यविशिष्टचैतन्यस्यैवघटज्ञानत्वावगमात् घटाधिष्ठानचैतन्यस्यघटज्ञानत्वांगीकारेत्वद्वचनविरोधःस्यादितिभावः ॥दृश्यत्वान्यथानुपपत्त्येति॥ दृश्यत्वस्यान्यथासत्त्वेनुपपत्त्येत्यर्थः॥तत्सामग्रीति ॥ अर्थापत्तिसामग्रीत्यर्थः। आक्षेप्यस्य रा

नापीति ॥ एकस्यदृश्यत्वस्योपपत्तयेप्रत्यक्षादिनासत्यत्वेनप्रमितानेकप्रपंचाख्यवस्तुनस्त्यागोमिथ्यात्वकल्पनरूपोयुक्तः “ (त्य जेदेकंकुलस्यार्थे) ” इतिन्यायेनएकस्यदृश्यत्वस्यैवत्यागोस्तु बहुबाधस्यान्याय्यत्वादितिभावः । आक्षेपकंविकल्प्यदूषयति ॥ आक्षेपकंचेति ॥ मिथ्यात्वाक्षेपकमित्यर्थः ॥ दृगिति ॥ दृगध्यस्तत्वरूपंदृश्यत्वमित्यर्थः ॥ आक्षेप्येति ॥ दृगध्यस्तत्वस्यैवमिथ्यात्वरूपत्वादितिभावः ॥ तवेति ॥ विषयत्वमनंगीकर्तुः । तथाचप्रमितत्वंनास्तीतिभावः ॥ अनुपपत्तीति ॥ दृग्विष

नाप्येकस्यदृश्यत्वस्योपपत्तयेप्रमितानेकवस्तुत्यागोयुक्तः। आक्षेपकंचनतावदृगध्यस्तत्वं । तस्याक्षेप्याभिन्नत्वेनमांप्रत्यसिद्धेः । नापिदृग्विषयत्वरूपोदृक्संबंधः। तवासिद्धेः । सिद्धौवातेनैवसंबंधेनप्रकाशोपपत्त्याध्यस्तत्वंविनानुपपत्त्यभावात् । नापिदृगधीनसिद्धिकत्वं दृग्विषयत्वातिरिक्तसिद्ध्यसंमतेः । नचदृक्संबंधसामान्यमाक्षेपकं । तच्चप्रसक्तविशेषप्रतिषेधेध्यस्तत्वरूपविशेषेपर्यवस्यतीतियुक्तं । तस्यघटस्यज्ञानमितिधीसिद्धसंबंधसामान्यंप्रत्यविशेषत्वात् ।

यत्वरूपदृश्यत्वाख्याक्षेपकस्येत्यर्थः । तथाचार्थापत्तिसामग्री( भग्नेति )न्यूनेतिभावः ॥ सिद्ध्यसंमतेरिति ॥ दृगधीनसिद्धिकत्वमित्यत्रबहुव्रीह्यर्थस्यसिद्धिसंबंधस्यविषयत्वरूपत्वादितिभावः । तच्चतवासिद्धमितिहृदयं ॥ नचदृक्संबंधेति ॥ दृक्संबंधसामान्यमेवदृश्यत्वं । तच्चप्रसक्तसंयोगादिसंबंधविशेषनिषेधसहकृतंसत् अध्यस्तत्वरूपेसंबंधविशेषेपर्यवस्यच्चसंबंधिनोदृश्यस्यमिथ्यात्वंआक्षेप्स्यतीतिभावः ॥ तस्येति ॥ घटस्यज्ञानमित्यादिप्रतीतिसिद्धोयोज्ञानज्ञेययोस्संबंधस्तंप्रत्यध्यस्तत्वरूपसंबंधस्यविशे

षरूपत्वाभावात् । आदावध्यस्तत्वंसंबंधेनैवअक्लृप्तंदूरेज्ञानज्ञेयसंबंधसामान्यंप्रतिविशेषत्वेन । तथाचपरिशेषेणाध्यस्तत्वेनपर्यवसानमित्यर्थः । ज्ञानज्ञेयसंबंधसामान्यंप्रत्यध्यस्तत्वरूपसंबंधस्यविशेषत्वेघटस्यज्ञानमित्यादौयथाज्ञानज्ञेयसंबंधसामान्यव्यवहारेज्ञेयस्यषष्ठ्यंतेननिर्देशः ज्ञानस्यप्रथमांतेन तथातद्विशेषभूताध्यस्तत्वरूपसंबंधव्यवहारेपिअध्यस्तस्यषष्ठ्यंतेनाधिष्ठानस्यप्रथमांतेननिर्देशःस्यात् नहितथास्तीत्याह ॥ नहीति ॥ सत्त्वेदृश्यत्वंनस्यादित्यनुकूलतर्कमात्रमितिद्वितीयंनिराकरोति ॥ नांत्यइति॥ तर्कोऽप्रयोजकइत्याह ॥ सत्त्वेपीति ॥ संबंधांतरेणआध्यासिकसंबंधातिरिक्तेनसंबंधेनेत्यर्थः । अत्रापादकीभूतंसत्त्वंअनिर्वाच्य

नहिरूप्यस्यशुक्तिरित्यस्ति । नांत्यः । सत्त्वेप्युक्तरीत्यासंबंधांतरेणैवदृश्यत्वोपपत्त्याऽप्रयोजकत्वात् । किंचनतावदनिर्वाच्यत्वाभावआपादकः । तद्वतोपितुच्छस्यपरोक्षधीवेद्यत्वेनदृश्यत्वात् । नापिसत्त्वं सत्त्वेपिब्रह्मणस्वव्यवहृत्येवघटस्यापिस्वज्ञानेनसंबंधोपपत्तेः । किंचाध्यासिकसंबंधइतिकोर्थः । किंयःकश्चित्संबंधएवाध्यस्तइति किंवातदध्यस्तमेवसंबंधइति ।

त्वाभावोवापारमार्थिकत्वंवा । नाद्यइत्याह ॥ नतावदिति ॥ तद्वतोपीति ॥ सदसद्वैलक्षण्यरूपानिर्वाच्यत्वाभाववतइत्यर्थः । तथाचतर्कस्यतुच्छेव्यभिचारेणव्याप्तिभंगात्प्रशिथिलमूलत्वमितिभावः । नद्वितीयइत्याह ॥ नापीति ॥ सत्वं पारमार्थिकत्वं ॥सत्त्वेपीति॥ सत्त्वेपि घटस्यज्ञानेनसंबंधोस्त्वित्यप्रयोजकता । नचसत्त्वेसंबंधायोगः । यथाब्रह्मणःसत्यत्वेपितद्व्यवहारेणसंबंधोस्तिब्रह्मणोपिव्यवह्रियमाणत्वात् तद्वत्सत्यस्यापिघटस्यज्ञानेनसंबंधोस्त्वित्यर्थः । तदध्यस्तं भावेक्तः । तस्मिन्नध्यासएवसंबंधइत्यर्थः ।

॥ नदृश्येति ॥ संबंधस्याध्यस्तत्वेपिसंबंधिनःपारमार्थिकत्वंसंभवति घटस्यज्ञानेनाध्यस्तसंबंधवत्त्वेपिनसंबंधिनोमिथ्यात्वं विभक्तयोर्घटपटयोरारोपितसंयोगस्यमिथ्यात्वेपिसंबंधिनोस्तदभावात् । यथावा तार्किकैकदेशिमतेऽजन्यसंयोगाभावा( त्काला काशसं )द्विभुद्वयसंयोगस्यारोपितत्वेनमिथ्यात्वेपिसंबंधिनोर्मिथ्यात्वाभावाद्व्यभिचारइत्युक्तमित्यर्थः ॥ ज्ञेयवदिति ॥ अ ध्यासस्यसंबंधत्वपक्षेएकस्यापरत्राध्यासोवक्तव्यः । तत्रनतावज्ज्ञानंज्ञेयेध्यस्तं ज्ञेयस्यमिथ्यात्वेनज्ञानंप्रत्यधिष्ठानत्वाभावात् । तथाचज्ञेयस्यज्ञानएवाध्यासोवाच्यः । सनयुक्तः । व्यावहारिकस्यघटादेर्व्यावहारिकेतज्ज्ञानेऽनध्यासात् प्रातिभासिकस्यरू

आद्येनदृश्यमिथ्यात्वसिद्धिरित्युक्तं । नांत्यः । त्वन्मतेज्ञेयवत्तज्ज्ञानस्याप्यध्यस्तत्वेनतत्रतस्या

नध्यासादित्युक्तत्वात् । एवंचशाब्दधीवृत्तेर्हिविषयोब्रह्मतत्रनकल्पितं । यथातथादृग्विषयोदृश्यं

नदृशिकल्पितं ॥ अविद्याविषयोब्रह्मह्यविद्यायांनकल्पितं । यथातथादृशाग्राह्यंनविश्वंदृशिक

ल्पितं ॥ तस्माद्दृग्दृश्ययेच्छेष्यमाणादेर्नाध्यासिकस्संबंधः । किंत्वन्यएव । कोसाविितिचेत् न ।

प्यादेःप्रातिभासिकेतज्ज्ञानेऽनध्यासात् अर्थज्ञानात्मकोभयविधभ्रमांगीकारेणज्ञेयवज्ज्ञानस्याप्यध्यस्तत्वेन तत्रतस्यानध्यासा दित्युक्तत्वादित्यर्थः । संगृह्णाति ॥ एवंचेति॥ ज्ञानेज्ञे(यस्या)याध्यासपक्षदूषणायाद्यश्लोकः । विषयोविषयिण्यध्यस्तइतिसामा न्यनियमखंडनाभिप्रायेणद्वितीयश्लोकइतिज्ञातव्यं । दृशाग्राह्यं दृग्विषयः । दृशि विषयिभूतायां । आध्यासिकसंबंधखंडनमुप संहरति ॥ तस्मादिति ॥ अतिप्रसंगे सर्वसर्वेणदृश्येतेत्यातिप्रसंगइत्यर्थः । विशेषजिज्ञासायाः कोसाविितिविशेषविचारस्येत्य

र्थः । तन्नतार्किकोक्तंदृष्टांतमाह ॥ विशेषगतेति ॥ पार्थिवपरमाणुषुसमानगुणकर्मसामान्यवत्सुव्यावर्तकाभावेनव्यावृत्तिबु द्ध्य( संभ )भावेन योगीतरेषांपरस्परासंकीर्णव्यवहारोच्छेदरूपातिप्रसंगपरिहाराय विशेषोनामपदार्थोव्यावृत्तिहेतुतयाक ल्पितः। तेनचोक्तातिप्रसंगेनिरस्तेविशेषेपिव्यावृत्तिबुद्धिजनकः कस्सनिरूप्यतामिति जिज्ञासावृथाइदानींतत्प्रयोजनाभावादिति यथातार्किकेणसमाधीयतेतद्वदित्यर्थः । यथोक्तंद्रव्यकिरणावल्यां "असंकीर्णव्यवहृतेर्योगिनांपरमाणुषु ॥ विशेषकल्पनेतत्रवि शेषेच्छावृथातवे"ति। नन्वतिप्रसंगनिरासकसंबंधसद्भावेप्रमाणस्यतल्लक्षणस्यचाभावादप्रामाणिकएवासौसंबंधः। "लक्षणप्रमा

**संबंधेनैवातिप्रसंगेनिरस्तेविशेषजिज्ञासायाविशेषगतविशेषजिज्ञासायाइवानर्थकत्वात्।प्रमाणस्यचोक्त त्वात्।संयोगसमवायांतर्भावेचतल्लक्षणस्यवबाहिर्भावेतुतदितरत्वेसतिसंबंधत्वादेर्लक्षणत्वात्विशेषसंज्ञा याश्चयथारुचिकल्प्यत्वात्। यत्तुसंबंधस्यसंबंधिभिन्नत्वेऽनवस्था नचेत्संबंधासिद्धिरितिसंबंधसामान्यखंडनं**

णाभ्यांवस्तुसिद्धि" रितिवचनादित्यतआह ॥ **प्रमाणस्येति** ॥ अनुमानत्रयस्येत्यर्थः । यःसंबंधःकल्प्यतेससंयोगसमवायांतर्भू तश्चेत्तल्लक्षणमेवतस्यापिलक्षणं नपृथग्वक्तव्यं बहिर्भावेतुसंयोगसमवायान्यत्वेसतिसंबंधत्वमेवतल्लक्षणमस्त्वित्याह॥**संयोगेति**॥ नन्वेवंलक्षणप्रमाणाभ्यांजातातत्सिद्धिः तस्यविशेषनामकिमितिचेत्तत्राह ॥ **विशेषसंज्ञायाश्चेति** ॥ **कल्प्यत्वादिति** ॥ वि षयविषयिभावइत्यादिसंज्ञाकर्तव्येत्यर्थः । संयोगाद्यतिरिक्तःसंबंधःसामान्यतःसिद्ध्यतीत्युक्तंतदयुक्तमित्याशंक्यनिराकरोति ॥**यत्त्विति**॥ संबंधस्यकल्प्यमानस्य । अनवस्थाभेदःकिंभेदिभ्यांभिन्नोनवेत्यादिभेदपरंपरायामनवस्थेत्यर्थइतिकेचित् । वस्तुत

स्तु भिन्नस्यसंबंध्यसंबद्धस्यस्वकार्यकारित्वाभावात्तत्रापिसंबंधांतरंवक्तव्यं तत्राप्युक्तविकल्पापत्त्याऽनवस्थेत्यर्थः ॥ नचेदिति ॥ संबंधस्यसंबंध्यभिन्नत्वेसंबंध्येवास्तिनसंबंधइत्यागतं । तथाचतस्यसंबंधित्वंसंबंधत्वंचनस्यादित्यर्थः ॥ उक्तरीत्येति ॥ ज्ञानस्यज्ञेयेनसंबंधोनेतित्वद्वाक्योक्तसंबंधाभावस्यज्ञानेनासंबंधादित्युक्तरीत्याज्ञानज्ञेययोःसंबंधोनास्तीत्यादिवाक्यजन्यज्ञानस्यैतद्वाक्यप्रतिपाद्येनसंबंधाभावरूपेणार्थेनसंबंधासत्त्वेस्वक्रियाविरोधापत्त्यासंबंधेवाच्ये तस्यचभिन्नत्वेऽनवस्थानचेत्संबंधासिद्धिरितिस्वव्याहतमित्यर्थः । संबंधःसंबंध्यभिन्नएव नचोक्तदोषः । यथादृश्यत्वेदृश्यत्वांतराभावेपियुक्तंदृश्यत्वं यथावाप्रमेयत्वे

तदुक्तरीत्यास्वव्याहतं । युक्तंचदृश्यत्वाद्यंतरहीनस्यापिदृश्यत्वादेरिवसंबंधस्यापिक्वचित्स्वनिर्वाहकत्वं । यदपिज्ञानविषयत्वनिरुक्तिखंडन तत्प्रकृतानुपयुक्तं । अनतिप्रसंगायहिदृग्दृश्ययोस्संबंधोवाच्यः । नतुज्ञानविषयत्वंनिर्वक्तव्यं । नचाविषयत्वस्यानिरुक्तिमात्रेणाविषयस्यमिथ्यात्वं ।

प्रमेयत्वांतराभावेपिप्रमेयत्वमस्तिस्वनिर्वाहकत्वांगीकारात् । एवंसंबंधेसंबंधांतराभावेपिसंबंधत्वंयुक्तं स्वनिर्वाहकत्वांगीकारादित्याह ॥ युक्तंचेति ॥ क्वचिदिति ॥ स्वविषयइत्यर्थः । स्वनिर्वाहकत्वंयुक्तंचेत्यन्वयः ॥ प्रकृतानुपयुक्तमिति ॥ अनुकूलतर्कप्रस्तावेतन्निरुक्तिखंडनस्यप्रकृतानुपयोगादित्यर्थः ॥ अनतिप्रसंगायेति ॥ घटद्रष्टिपटस्यविषयत्वपरिहारायकरणसन्निकर्षादिद्वारकोदृग्दृश्ययोःसंबंधोवाच्योनतुविषयत्वमपिनिर्वक्तव्यमित्यर्थः ॥ नचाविषयत्वस्येति ॥ उक्तविकल्पखंडनाभ्यां

विषयस्यमिथ्यात्ववर्णनंभौतविचारमनुसरतीत्यर्थः। उक्तंह्यात्मतत्वविवेके। केनचिद्भूतेनद्विरदंचतुष्पादमवलोक्यविकल्पितंकिम यमंधकारोमूलकमस्ति अथवाजलवाहो बलाहकान्वर्षतिगर्जतिच यद्वाबांधवोयं। राजद्वारेश्मशानेचयस्तिष्ठतिसबांधवइतिवचना दितिभावः। अथवायोयंभूमौदृश्यतेतस्यछायेयं। नाद्यः। तस्यशूर्पयुगलस्फोटनाभावात्। नद्वितीयः। तस्यस्तंभचतुष्टया भावात्। नतृतीयः। तस्यपुच्छ(लगुड)भ्रामणाभावात्। नचतुर्थः। तस्यानरशिरश्शतोद्गिरणाभावात्। अतोनकिंचिदेतत्। किंतुमिथ्यैवेति। किमेतावताविकल्पखंडनमात्रेण द्विरदस्वरूपंनहिनिवर्तते किंतुयोद्विरदोस्तिसोस्त्येवेतिवदन्नेवपिशाचउपे क्ष्यतेपरीक्षकैः। "विकल्पदूषणाभ्यांस्वरूपंनैवहीयते। प्रमाणासिद्धंतत्कर्तोपेक्ष्यतेभूतवज्जनै"रितिवचनादिति ॥ विषयित्व

विषयित्वस्यानिरुक्तावपिविषयीभूतदृग्वत्सत्वोपपत्तेः स्वव्याहतंच। त्वयैवप्रमाणज्ञा

नंस्वविषयावरणेत्याद्युक्तेः। दृग्विषयत्वस्यहेतूकृतत्वाच्च। नचप्रमाणज्ञानेविषयोध्यस्तः।

स्येति॥ दृशोविषयवत्त्वंहिविषयित्वं ततश्चविषयत्वानिरुक्तौतद्घटितविषयित्वस्याप्यनिरुक्तावपिनविषयिण्यादृशोमिथ्यात्वंकिंतु सत्यत्वमेव। एवंविषयत्वानिरुक्तावपिविषयस्यसत्यत्वमक्षतमित्यर्थः॥ इत्याद्युक्तेरिति॥ एवमाद्यनुमानेविषयत्वस्यव्यवहृतत्वा द्विषयत्वनिरुक्तिखंडनंव्याहतमित्यर्थः॥ दृग्विषयत्वस्येति॥ दृग्रूपज्ञानविषयत्वस्येत्यर्थः। ननुप्रमाणज्ञानंस्वविषयावरणेत्यत्र विषयत्वंनामनवास्तवंकिंत्वध्यस्तत्वमेव। तथाचस्वविषयावरणेत्यत्रस्वाध्यस्तावरणेत्यर्थोविवक्षितइतिचेन्न। एवंवदताप्रमाणज्ञा नएवविषयोऽध्यस्तइतिवाच्यं। ॐमितिचेत्तत्राह॥ नचेति॥ प्रमाणज्ञानेतद्विषयस्याध्यासेतुच्छादिज्ञानेतुच्छादेरध्यासप्रसंगइत्युक्त

त्वादितिभावः। दोषांतरमाह ॥तदज्ञानजन्यमिति॥ प्रमाणज्ञानेस्वविषयस्याध्यस्तत्वंनयुक्तं। अध्यस्तत्वंनामाध्यासंप्रतिविषयत्वं अध्यासोहिलोकेऽधिष्ठानाज्ञानजन्योऽधिष्ठानज्ञाननिवर्त्यश्चदृष्टः। तद्विषयत्वमेवाध्यस्तत्वंतदनुविद्धतयाप्रतीयमानत्वंवा। नचघटश्चलतीत्यादिचलनानुविद्धतयाप्रतीयमानस्यघटादेस्तत्राध्यस्तत्वंस्यादितिवाच्यं। तदनुविद्धतयाप्रतीयमानत्वविशेषएवाध्यस्तत्वमितिविवक्षितत्वात्। एवंचप्रमाणज्ञानेविषयस्यनाध्यासः। तस्यप्रमाणज्ञानाज्ञानजन्यत्वाभावात्। कुतः ज्ञानस्यज्ञातैकसत्त्वेनप्रमाणज्ञानाज्ञानस्यैवाभावात्। तथाप्रमाणज्ञानाज्ञानजन्यत्वाभावादेवप्रमाणज्ञानज्ञाननिवर्त्यत्वाभावेनतस्याध्यासत्वाभावात्। ततश्चतद्विषयत्वरूपमध्यस्तत्वमयुक्तं। तथातदनुविद्धतयाप्रतीयमानत्वरूपमप्यध्यस्तत्वंनयुक्तं इदंरजतमितिवत्

तदज्ञानजन्यंतज्ज्ञाननिवर्त्यंवाध्यासंप्रतिविषयत्वाद्वातदनुविद्धतयाप्रतीयमानत्वविशेषाद्वान्यस्यतत्राध्यस्तत्वस्याभावाच्च। नह्यनिर्वाच्यत्वादिरूपंसाधारणमध्यस्तत्वंदृश्यविशेषस्यदृग्विशेषप्रकाश्यत्वेतंत्रं।

प्रमाणज्ञानंस्वविषयइतिप्रमाणज्ञानानुविद्धतयाविषयस्यप्रतीयमानत्वाभावात्। अतोनप्रमाणज्ञानेविषयस्याध्यासइत्यर्थः। अन्यस्याध्यस्तत्वस्याभावादित्ययुक्तं। अनिर्वाच्यत्वादिरूपंयत्परोक्षापरोक्षविषयसाधारणमध्यस्तत्वंतदेवापरोक्षज्ञानविषयस्यवृत्तिप्रतिबिंबितचैतन्यरूपेणतदभिव्यक्ताधिष्ठानचैतन्यरूपेणचदृग्विशेषेणप्रकाश्यत्वेप्रयोजकं। एवंचानिर्वाच्यत्वादिरूपंप्रमाणज्ञानाध्यस्तत्वंविषयेस्तीत्याशंक्यनिषेधति ॥ नहीति ॥ परोक्षज्ञानविषयस्यदृग्विशेषप्रकाश्यत्वेऽनिर्वाच्यत्वादिरूपंसाधारणमध्यस्तत्वंनप्रयोजकं परोक्षविषयस्थलेऽनिर्वाच्यत्वादिरूपेऽध्यस्तत्वेसत्यपिदृग्विशेषप्रकाश्यत्वाभावात् तस्मिन्सत्यभवतस्तदप्रयोजकत्वा

दितिभावः ॥ यादृशमिति ॥ वृत्तावनध्यस्तेवृत्तिंप्रतिविषयेचिदात्मनियादृशंविषयत्वंतादृशमेवज्ञेयस्यज्ञानंप्रत्यस्त्वित्यर्थः ॥ अनिर्वाच्यमेवेति ॥ निर्वक्तुमशक्यमेवेत्यर्थः । वृत्तिंप्रतिचिदात्मनइतिशेषः । विषयत्वस्य ब्रह्मगतस्य ॥ जगतइति ॥ जगन्निष्ठविषयत्वस्यानिर्वाच्यत्वेपीत्यर्थः । लक्षणस्यावश्यवक्तव्यत्वमाह ॥ त्वयापीति ॥ व्यावहारिकेति ॥ ज्ञानविषयेप्रपंचइतिशेषः ॥ असंकीर्णेति ॥ प्रातिभासिकविषयासंकीर्णेत्यर्थः ॥ लक्षणस्यापीति ॥ विषयत्वस्यव्यवहारविसंवादि

किंच यादृशंविषयत्वंतेवृत्तिप्रतिचिदात्मनः । तादृशंविषयत्वंमेदृश्यस्यापिदृशंप्रति ॥ नन्व निर्वाच्यमेवविषयत्वंमयाव्यवहृतमितिचेन्न । विषयत्वस्यानिर्वाच्यत्वेपितवब्रह्मवन्ममापिजगतस्सत्त्वोपपत्तेः । त्वयापिव्यावहारिकसत्त्वस्यासंकीर्णव्यवहारस्यचसिद्ध्यर्थंव्यवहाराविसंवादिनो लक्षणस्यापिप्रमाणवदविद्यादाविववक्तव्यत्वाच्च । कथंचत्वयासाध्यंमिथ्यात्वंनिर्ब्रुवतासाधनंदृग्विषयत्वंननिर्वक्तव्यं । नचतवापिघटादौपटाद्यसंकीर्णव्यावहारिकपृथुबुध्नोदराद्याकाराद्यज्ञाने

प्रातिभासिकविषयव्यावृत्तलक्षणस्यापिप्रमाणवद्वक्तव्यत्वादित्यर्थः । तत्रदृष्टांतः अविद्यादाविवेति । यथाऽविद्यायांप्रमाणंलक्षणंचकथ्यतेतद्वद्विषयत्वस्यापिलक्षणादिकंवक्तव्यमेवेत्यर्थः । तथाचावश्यवक्तव्यविषयत्वखंडनंस्वव्याहतमितिभावः ॥ निर्ब्रुवतेति ॥ सदसद्वैलक्षण्यमित्यादिनिर्वचनंकुर्वतेत्यर्थः ॥ साधनमिति ॥ विषयत्वस्यत्वदीयहेत्वंतर्गतत्वात्तद्धेतुज्ञानायतदवश्यंलक्षणीयमित्यर्थः ॥ नचेति ॥ नहीत्यर्थः । घटादौपटाद्यसंकीर्णव्यवहारायतद्धेतुभूतंपटाद्यसंकीर्णपृथुबुध्नोदरादेर्ज्ञानंतादृ

शासंकीर्णव्यवहारश्चतवाप्यस्ति । तथाचासंकीर्णतादृशाकारएवघटादेर्लक्षणमितिलक्षणतयाज्ञातस्यतादृशाकारस्यलक्षणत्वंयाव दवश्यंवक्तव्यं । एवमसंकीर्णव्यवहारहेतुतयाज्ञातस्यविषयत्वस्यलक्षणंत्वयापिवक्तव्यमितितत्खंडनमयुक्तमित्यर्थः । ननुतादृशा कारलक्षणज्ञानमपिनतादृशव्यवहारहेतुरितिशंकते ॥ नन्विति ॥ सममिति ॥ असंकीर्णविषयाकारमात्रेणासंकीर्णव्यवहा रोपपत्तौतन्निर्वचनंमयापिनकर्तव्यमित्यर्थः ॥ इयांस्त्विति ॥ अयमांतरालिकोविशेषः । असंकीर्णतदाकारस्यैवव्यवहारहेतु त्वादितिभावः । स आकारः । ननुविषयलक्षणंभवद्भिरेववाच्यं । मयातन्नवक्तव्यं । मयातस्याऽनिर्वाच्यत्वांगीकारात् । लक्ष

असंकीर्णघटादिव्यवहारः । नन्वसंकीर्णाकारज्ञानमात्रेणतदुपपत्तौकिंतन्निर्वचनेनेतिचेत् समं ममापि । इयांस्तुविशेषः । तवसआकारस्सद्विलक्षणः । ममतुसन्निरीति अनिरुच्यमानोपिसतवये नमानेनाप्रातिभासिकःतेनैवममतात्त्विकोस्तु । नचलक्षणोक्त्यनुक्तिभ्यांसदसद्वैलक्षण्यरूपानिर्व चनीयत्वहानिलाभौ । ब्रह्मण्यपिश्रौतस्यापिजगत्कारणत्वादिलक्षणस्यकारणत्वादिखंडनरीत्या

णवचनेतुवस्तुनोऽनिर्वाच्यत्वभंगापत्तिः निर्वक्तुमशक्यत्वमेवह्यनिर्वाच्यत्वंनामेत्यतआह ॥ नचलक्षणोक्तीति ॥ लक्षणो क्तावनिर्वाच्यत्वभंगःअनुक्तौतल्लाभइतिनयुक्तं । नह्यनिरुच्यमानलक्षणवत्त्वमनिर्वाच्यत्वं किंनाम सदसद्वैलक्षण्यं तच्चलक्षणो क्त्यनुक्त्योःसममेवेत्यर्थः । ननुसदसद्वैलक्षण्यमनिर्वाच्यत्वंतत्रतुदुर्निरूपलक्षणकत्वंप्रयोजकतयामयांगीक्रियतइतिचेत्तत्राह ॥ ब्रह्मणीति ॥ खंडनकारोक्तरीत्याकारणत्वलक्षणंदुर्निरूपमितिब्रह्मणि जगत्कारणत्वस्यासंभवापातात् । इष्टापत्तिंपरिहर्तुंश्रौत

स्येत्युक्तं । "यतोवाइमानिभूतानी"त्यादिश्रु(तिबोधितज)त्युक्तस्यजगत्कारणत्वस्यानिर्वचनीयत्वेश्रुतेरतत्वावेदकत्वंस्यादितिभावः ॥ **असंभवादिति** ॥ प्रसंगांतोहेतुः । असंभवप्रसंगादित्यर्थः । ब्रह्मणोदुर्निरूपलक्षणकत्वस्यत्वयोक्तत्वात्तस्यापिअनिर्वाच्यत्वंस्यादित्याह ॥ **त्वयैवेति** ॥ तत्प्रत्यगात्मस्वरूपं । कीदृक्कीदृशमितिचेत्पृच्छसितर्हिताहक् तादृशं ईदृक्ईदृशमितिनिरूपणंयत्रनप्रसरति तद्वस्तुप्रत्यगित्यवधार्यतामित्यनेनब्रह्मणोपिदुर्निरूपत्वस्योक्तत्वात्तस्याप्यनिर्वाच्यत्वंस्यादित्यर्थः । दुर्निरूपलक्षणवत्त्वेऽसत्यत्वमित्यनेनसुनिरूपलक्षणवत्त्वेसत्यत्वमितिप्राप्तं तच्चत्वन्मतेऽयुक्तमित्याह ॥ **प्रपंचादाविति** ॥ त्वदुक्तस

**असंभवात्।त्वयैव"कीदृक्तत्प्रत्यगितिचेत्तादृगीदृगितिद्वयं। यत्रनप्रसरत्येतत्प्रत्यगित्यवधारये"तिब्रह्मण्यपिदुर्निरूपत्वस्योक्तत्वाच्च। प्रपंचादावपित्वदुक्तानिर्वाच्यत्वादिलक्षणसंभवाच्च। "यत्काठिनं सापृथिवी"त्यादिश्रुत्यापृथिव्यादीनामपिलक्षणोक्तेश्च । तस्मात्प्रमितस्येत्थमितिनिर्वक्तुमशक्यत्वं**

दसद्वैलक्षण्यरूपानिर्वाच्यत्वलक्षणस्यप्रपंचेपिसुनिरूपणभावात्सत्यत्वापत्तिरित्यर्थः । प्रपंचेनिर्वचनीयत्वाख्यलक्षणमाधुनिकपुरुषोत्प्रेक्षितत्वात्संभावितदोषं नतत्सत्यत्वमापादयतीत्यतआह ॥ **यत्काठिनमिति** ॥ इत्यादीत्यादिपदेन"यद्द्रवंतदापोयदुष्णं तत्तेज"इत्यादिश्रुतिग्रहणं । तथाचनिर्दोषश्रुतिसिद्धलक्षणस्यसत्त्वात्पृथिव्यादीनामपिसत्यत्वापत्त्याऽनिर्वचनीयत्वंनस्यादितिभावः । इत्थमितिवक्तुमशक्यत्वमद्भुतत्वादेवयुक्तमित्यन्वयः । असत्त्वादेववक्तुमशक्यत्वंकिंनस्यादित्यतउक्तं ॥ **प्रमितस्येति** ॥

स्पष्टयाऽबाधितयादृष्ट्यादृष्टंविषयीकृतंयत्(विलक्षणंसंस्थानविशेषरूपंतस्यप्रतिपुरुषमुखेसत्त्वेपियथाद्भुतत्वाद्वक्तुमशक्यत्वं तथा प्रमितस्यविषयत्वस्यापिअद्भुतत्वादेवनिर्वक्तुमशक्यत्वमस्त्वित्यर्थः । इत्थमितिवक्तुमशक्यत्वेऽद्भुतत्वंप्रयोजकमित्येतत्प्रमाणेनद्रढयति ॥ उक्तंहीति ॥ अद्भुतत्वहेतोरित्थमित्यनिर्वाच्यमित्यर्थः । यदपिपरैःस्वग्रंथेप्रलपितंसुनिरूपलक्षणत्वंव्यावहारिकत्वेतंत्रंदुर्निरूपलक्षणत्वंप्रातिभासिकत्वेतंत्रं । एवंचविषयत्वस्यदुर्निरूपणत्वाज्जगतितत्प्रातिभासिकमेवेति । तद्व्यभिचारेणखंडयति ॥ नहीत्यादिना ॥ इतरेति ॥ इतरभेदकलक्षणरूपंरूप्यत्वमित्यर्थः ॥ प्रातीतिकेति ॥ प्रातिभासिकेत्यर्थः । तथाचप्रा

प्रतिपुरुषमुखंस्पष्टाबाधितदृष्टिदृष्टविलक्षणसंस्थानविशेषस्येवसत्वेप्यद्भुतत्वादेवयुक्तं।उक्तंहि "अद्भुतत्वादनिर्वाच्य"मिति। नहिशुक्तिरूप्यस्येतरभेदकंरूप्यत्वंप्रातीतिकजातिरूपतयासुवचमितितद्व्यावहारिकं। नवामुखसंस्थानविशेषोदुर्वचइतिसप्रातिभासिकः नवाब्रह्मणआनंदत्वज्ञानत्वसत्यत्वस्वप्रकाशत्वादिकं खंडनोक्तरीत्यादुर्वचमितिब्रह्मतत्वतोनानंदाद्यात्मकं तस्मान्निर्वचनायोग्यस्यापिविश्वस्येक्षुक्षीरादिमाधुर्यवत्ब्रह्मवच्चप्रामाणिकत्वादेवसत्वसिद्धेःसदसद्वैलक्षण्यरूपानिर्वाच्यत्वायनिरुक्तिखंडनंशब्दसाम्या

तिभासिकावांतरजातिविशेषएवरूप्यत्वमितिसुवचमितिसंप्रदायः । रज्जुसर्प(स्येतर)स्यभेदकंसर्पत्वमपिरूप्यत्वंस्यात्प्रातिभासिकावांतरजातिरूपत्वात्तस्यापीत्यतोविशेषपदं ॥ सप्रातिभासिकइति ॥ अतएवप्रातिभासिकत्वाभावोपपादनायैवस्पष्टाबाधितदृष्टिदृष्टेत्युक्तं । विषयत्वनिरुक्तिखंडनमुपसंहरति ॥ तस्मादिति ॥ विश्वस्य विश्वांतर्गतविषयत्वस्य ॥ शब्दसाम्यादि

ति ॥ निरुक्तौखंडितायांनिर्वचनाभावरूपमनिर्वचनीयत्वंसिद्ध्यति । निरुक्तिविरहस्यानिर्वचनीयत्वस्यचैकार्थत्वाच्छब्दसाम्यमि तिभावः ॥ भ्रांतिमूलमिति ॥ निरुक्तौखंडितायांनिर्वचनाभावरूपमनिर्वाच्यत्वंयद्यपिसिद्ध्यति तथापिसदसद्वैलक्षण्यरूपंत न्नसिद्ध्यति निरुक्तिविरहेपिप्रतिपुरुषमुखवदिक्षुक्षीरादिमाधुर्यवद्ब्रह्मवदानंदादिवत्सत्त्वसिद्धेः । एवंचसदसद्वैलक्षण्यरूपानिर्वच नीयत्वसिद्ध्यर्थंयन्निरुक्तिखंडनंकृतंतद्भ्रांतिमूलकं भ्रांतौकारणमनिर्वाच्यानिरुक्तिशब्दयोरेकार्थत्वरूपंशब्दसाम्यमित्यर्थः । निर्व चनायोग्यत्वमुपेत्यसमाहितं । वस्तुतस्तदपिनास्तीत्याह ॥ नचेति ॥ केषांचित् निर्वचनेऽकुशलानामित्यर्थः ॥ नहिजात्यं

भ्रांतिमूलं । नचकेषांचिन्निर्वचनाशक्तिमात्रेणवस्तूनांतदयोग्यत्वं । उक्तंहिबौद्ध
धिक्कारे । नहिजात्यंधेननीलंद्रष्टुंवक्तुंचनशक्यतइतिअज्ञेयमनिर्वाच्यमेवतत् ।
दुरवगाहत्वेनापितदुपपत्तेरिति । नचतदनिर्वचनं यथा "मंत्रस्यमंत्र" इत्य

धेनेति ॥ नहिजात्यंधोनीलंज्ञातुंवक्तुंचाशक्तइत्यज्ञेयानिर्वाच्यमेवतल्लोके अन्येनज्ञेयत्वादिसंभवादितिबौद्धाधिक्कारग्रंथस्यार्थानु वादोयमितिज्ञातव्यं ॥ अज्ञेयानिर्वाच्यमेवतदिति ॥ अन्येनज्ञेयत्वादिसंभवादितिभावः । बौद्धधिक्कारग्रंथस्थवाक्यांतर मुदाहरति ॥ दुरवगाहत्वेनापीति ॥ अयमप्यर्थानुवादः । तद्ग्रंथपाठस्त्वित्थं । "नहिलक्षणापरिज्ञानमात्रेणस्पष्टदृष्टमपिल क्ष्यमपह्नोतुंशक्यतेऽपरिज्ञानस्यदुरवगाहत्वेनाप्युपपत्तेरिति ॥ नचेति ॥ कुशलैर्निर्वक्तुमशक्यंनचेत्यर्थः ॥ यथामंत्रस्येति ॥

द्वितीयाध्यायेप्रथमपादेविचारितं। "अहिर्बुध्नीयमंत्रंमेगोपाये"त्या(दौप्र)दिप्रतीतमंत्रस्यकिंलक्षणं ।नतावद्विहिताभिधायकत्वं। निषेधकेऽव्याप्तेः । नापिनिषेधाभिधायकत्वं । विधायकेऽव्याप्तेः । उत्तमपुरुषांतोयोमंत्रअसिपदांतोयोमंत्रअनयोःपरस्पराव्या प्तेरित्याशंकायांयाज्ञिकसमाख्यायाएवनिर्दोषलक्षणत्वादितिसमाहितं । यथोक्तमधिकरणमालायां "याज्ञिकानांसमाख्या(नांल) यालक्षणंदोषवर्जितं । तेऽनुष्ठानस्मारकादौमंत्रशब्दंप्रयुंजत"इति ॥ प्रयोगइति ॥ प्रयुज्यतइतिप्रयोगःकर्मणिघञ् अभियुक्त प्रयोगविषयत्वमित्यर्थः । नचात्माश्रयःशंक्यः । अर्थस्यलक्ष्यत्वात् । मंत्रशब्दस्यैवलक्षणांतर्गतत्वात् । तथाचघटपदप्रयोगवि

भियुक्तप्रयोगएवलक्षणंतथाज्ञानविषयस्यापिज्ञानविषयइत्यभियुक्तप्रयोगएव लक्षणं । नचान्योन्याश्रयः। पूर्वपूर्वप्रयोगस्यज्ञानेनोत्तरोत्तरप्रयोगोपपत्तेः ।

षयत्वंघटत्वमितिवत्मंत्रपदप्रयोगविषयत्वंमंत्रत्वमित्युक्तंभवति ॥ ज्ञानविषयइति ॥ ज्ञानविषयपदप्रयोगविषयत्वमित्यर्थः ॥ अन्योन्येति ॥ प्रयोगापरपर्यायेव्यवहारेप्रवृत्तिनिमित्तज्ञानस्यकारणत्वाल्लक्षणस्यैवचप्रवृत्तिनिमित्तत्वान्मंत्रपदप्रयोगविषयत्वरू पप्रवृत्तिनिमित्तज्ञानेमंत्रपदप्रयोगःमंत्रपदप्रयोगसिद्धौतद्घटितप्रवृत्तिनिमित्तज्ञानमित्यन्योन्याश्रयइत्यर्थः ॥ पूर्वपूर्वेति ॥ स्यादयमन्योन्याश्रयः । यदिमंत्रपदप्रयोगविषयत्वरूपलक्षणांतर्गतःप्रयोगोलक्षणसाध्यप्रयोगएवस्यात् । नचैवं । किंतुलक्षणसा ध्यप्रयोगोऽस्मदीयोभिन्नएव । लक्षणांतर्गतोयःप्रयोगः सपूर्वतनानामेवविवक्षितः । सचभिन्नएव । पूर्वतनानामपियःप्रयोगः

सोपितत्पूर्वतनप्रयोगज्ञानेनेतिव्यक्तिभेदान्नान्योन्याश्रयइतिभावः । पूर्वोक्तलक्षणान्येवदूषणपरिहारेणसमर्थयते ॥ अथवेत्यादिना ॥ ननुचक्षुरादिनाज्ञानानंतरंवागिंद्रियपाटवाभावेनाभिलपनरूपव्यवहारःएडमूकानांनभवतितज्ज्ञानविषयेऽव्याप्तिरित्यतआह ॥ करणेति ॥ नाव्याप्तिःशंक्या । तत्राप्येडमूकादिज्ञानेव्यवहारकारणत्वस्यफलोपधानस्याभावेपिव्यवहारजननयोग्यतारूपंकारणत्वमस्त्येव । ननुयोग्यत्वंनामतदवच्छेदकावच्छिन्नत्वं । तत्रचज्ञानेव्यवहारजननयोग्यत्वंनामव्यवहारजनकतावच्छेदकावच्छिन्नत्वंवाच्यं त(च्चव्य)व्यवहारजनकतावच्छेदकंतद्विषयविषयकत्वमेववाच्यं। तन्नवक्तुंशक्यं । विषयत्वस्यैवेदानींनि

अथवायज्ज्ञानंयदभिलपनरूपव्यवहारकारणंसतस्यविषयः । करणपाटवा
द्यभावेनव्यवहारानुदयेपिसहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वरूपंकारण
त्वमस्त्येव । कदापिव्यवहाराजनकंतुनिर्विकल्पकंनोपेयतइतिनाव्याप्तिः ।

रुच्यमानतयातस्याज्ञानादितिचेत् । अस्त्यत्रसंप्रदायविशेषः । योग्यत्वंद्विविधं । तदवच्छेदकावच्छिन्न(त्वरूपमेकं)त्वंएकं सहकारिवैकल्यप्रयुक्तकार्याभाव(वत्वरू)रूपंचापरं । उभयमपिवनस्थदं(डादौप्रसिद्धं)डेस्ति प्रथमस्यायोगेपिएडमूकादिज्ञानेव्यवहाराभावेपिवाग्रूपसहकार्यभावेनसहकार्यभावप्रयुक्तकार्याभाववत्त्वापरपर्याययोग्यतारूपकारणतायाःसत्त्वान्नाव्याप्तिरित्यर्थः । सहकारिवैकल्येत्यादेर्योग्यतारूपत्वंतूत्तरत्रैवस्पष्टं । तार्किकाणांमतेनिर्विकल्पकज्ञानस्यकदापिव्यवहारजनकत्वानंगीकारात्तद्विषयेव्याप्तिरित्यतआह ॥ कदापीति ॥ तत्रापिनिरुक्तयोग्यतारूपकारणत्वमंगीकृत्ययद्यप्यव्याप्तिःपरिहर्तुंशक्यते तथापित्वस्तु

स्थितिकथनमेतदित्याहुः ॥ यत्वतत्वेति ॥ यज्ज्ञानंयदभिलपनेत्यादिलक्षणांतर्गतयोर्यत्त्वतत्त्वजात्योरित्यर्थः ॥ कस्येति ॥ अयंचन्यायःतार्किकाणामपिसंमतएव । कस्य(का)व्याप्तिरितिप्रश्नेऽस्ये(यंव्याप्तिरित्य)त्यननुगतायाएवलक्ष्यत्वादित्युक्तत्वात् । ननुयत्रघटज्ञानानंतरंप्रमादात्पटइतिव्यवहारोभवतितत्रघटज्ञानंपटाभिलपनरूपव्यवहारकारणमतोघटज्ञानस्यपटोपिविषयःस्यादितितत्राह ॥ घटेति ॥ प्रमादएवतत्रहेतुरितिभावः । ननुक्रियाजनकत्वाख्यकारकविशेषःकर्मत्वंतच्चनित्येश्वरज्ञानविषयेऽव्याप्तमित्यतआह ॥ ज्ञानकर्मशब्देनेति ॥ करणपाटवाभावेनयत्रज्ञानेव्यवहारोनोत्पन्नस्तद्विषयेऽव्याप्तिरित्यतउक्तं ॥ यो

नचयत्वतत्वजात्योरभावेनाननुगमः कस्यकोविषयइत्यननुगतप्रश्नेअस्यायंविषयइत्यननुगतस्यैववक्तव्यत्वात्। घटज्ञानानंतरंप्रामादिकेपटइतिव्यवहारेनघटज्ञानंहेतुरितिनातिव्याप्तिः। अतएवज्ञानकर्मत्वंविषयत्वमित्यत्रापिनदोषः । ज्ञानकर्मशब्देनज्ञानाधीनव्यवहारयोग्यत्वरूपातिशयवत्त्वस्याविवक्षितत्वात्। नहिक्रियाजनकत्वंविशेषःकर्मत्वं । (पटं)घटंकरोती

ग्यत्वरूपेति ॥ नन्वत्रविषयनिष्ठंयोग्यत्वंज्ञानाधीनव्यवहारजनकतावच्छेदकयुक्तत्वमित्युक्तं । तच्चतद्विषयकत्वमेववाच्यं । तच्चनसंभवति । तस्यैवेदानींनिरुच्यमानत्वेनतस्याज्ञानादितिचेन्न । उक्तन्यायेनज्ञानाधीनव्यवहारेसहकारिवैकल्यप्रयुक्तकार्याभावरूपयोग्यतायास्तत्राप्यनपायादितिध्येयं ॥ पटमिति ॥ कृतिःप्रयत्नः । पटजननानुकूलयत्नवान्भवतीतितदर्थः । तथाच कृतिकालेपटोनास्तीतितत्कर्मणिपटेऽव्याप्तिः । ननुकृतिरूपक्रियाजनकत्वंपटेस्तीतिचेत् तत्रपृच्छामः किमसिद्धस्यपटस्यकृतिज

नकत्वमुतसिद्धस्य । नाद्यः । असिद्धस्यजनकत्वाभावात् तस्यपूर्ववृत्तित्वघटितत्वात् । नद्वितीयः । सिद्धेइच्छायाइवयत्नस्याप्यभावात् । अतोऽव्याप्तेर्नकर्मत्वलक्षणंत्वदुक्तं किंत्वस्मदुक्तमेव तच्चतत्राप्यस्ति यदातज्ज्ञानंभविष्यतितदातदधीनव्यवहारयोग्यतारूपकर्मत्वस्यानपायादित्याह ॥ नहीत्यादिना ॥ भासमानतायाएवाद्याप्यनिरूपणादित्युक्तदोषंपरिहरति ॥ भासमानत्वंचेति ॥ योग्यत्वंनामव्यवहारजनकतावच्छेदकयुक्तत्वं तच्चावच्छेदकंतद्विषयत्वमेववाच्यं । तन्नज्ञातुंशक्यं तस्यैवेदानीं

त्यादावभावात् । नह्यसिद्धंजनकं नापिसिद्धंकृतिकर्म । अतएवयस्यांसंविदीत्यादिलक्षणे

पिनदोषः । यतस्संविदीतिसतिसप्तमी । भासमानत्वंचव्यवहारयोग्यत्वं । योग्यत्वंचसति

कारणांतरेव्यवहारावश्यंभावः योग्यत्वेचदृश्यत्वेदृश्यत्ववदाध्यासिकसंबंधेआध्यासिकसंबं

धवच्चतदेववान्यद्वायोग्यत्वमस्ति । आत्माश्रयादिकंतुतद्वदेवोत्पत्त्याद्यप्रतिबंधकत्वाददोषइ

तिनाव्याप्तिः । अन्येतुयस्संबंधांतरमनपेक्ष्ययज्ज्ञानावच्छेदकोयज्ज्ञानानवच्छिन्नस्वभावश्च

निरुच्यमानत्वादित्यतआह ॥ योग्यत्वंचेति ॥ सतीति ॥ सहकारिवैकल्यप्रयुक्तकार्याभावइतियावत् । ननुयोग्यतायांयोग्यतांतराभावादित्युक्ताव्याप्तिंपरिहरति ॥ योग्यत्वेचेति ॥ तर्ह्यात्माश्रयइत्यतआह ॥ आत्माश्रयादिकंत्विति ॥ तद्वदेवेति ॥ दृश्यत्वादिवदेवेत्यर्थः । नाव्याप्तिः योग्यतायामितिशेषः । अन्येत्वित्यस्यनतत्राव्याप्तिर्दोषइत्याहुरित्यनेनवक्ष्यमाणेनसंबंधः ॥ संबंधांतरमिति ॥ ज्ञातर्यतिव्याप्तिवारणायसंबंधांतरमिति । संबंधांतराभावेसतीत्यर्थः । तत्रचसमवायएवास्ती

त्यस्यैवविवरणंश्रवणनियमादृष्टसाध्येसाक्षात्कारइति । अंगीकृतइतिशेषः । श्रवणादिरूपक्रियातन्नियमादृष्टयोस्साक्षात्काररूपमेकफलंप्रत्येवहेतुत्वांगीकारेनियमविधित्वमेवनस्यात् । "विधिरत्यंतमप्राप्तेनियमःपाक्षिकेसती"तिवचनात् "व्रीहीनवहंती"त्यत्रवितुषीभावरूपेफलेऽवहननिरपेक्षनखविदलनादिरूपोपायांतरप्रसक्तौसत्यांअवहननेनैववितुषीभावंसंपादयेत्तेनाऽदृष्टंजायतइत्येवंनियमादृष्टंकल्प्यते एवंसाक्षात्काररूपेफलेश्रवणादिनिरपेक्षोपायांतरप्रसक्तौसत्यांश्रवणादिनैवसाक्षात्कारंसंपादयेदितिनियमेनाकिंचिददृष्टंजायतइतिकल्पनीयं नचैवमस्ति श्रवणादिनिरपेक्षोपायांतरप्रसक्तेरेवाऽभावेनोपायांतरप्रसक्त्यधीननि

**श्रवणनियमादृष्टसाध्येसाक्षात्कारेश्रवणनिरपेक्षस्योपायांतरस्याप्रसक्त्यातत्प्रसक्त्यधीननियमविध्ययोगात् । नचपरोक्षज्ञानमेवश्रवणादपरोक्षज्ञानंतुनियमादृष्टादितियुक्तं।श्रवणविधौपरोक्षज्ञानप्रवाहरूपनिदिध्यासनसाध्यापरोक्षज्ञानस्यैवदृशिनोद्देशात्**

यमविध्ययोगादित्यर्थः । श्रवणादिक्रियातन्नियमादृष्टयोःफलभेदात्द्वितीयतर्केपुनरिष्टापत्तिरित्याशंक्यनिराकरोति ॥ **नचेति** ॥ **श्रवणादिति** ॥ "आत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्य"इत्यत्रयादृशज्ञानमुद्दिश्यनिदिध्यासनंविहितं तादृशमेवज्ञानंदृशिनानिर्दिश्यतादर्थ्येनश्रवणादिकमपिविधीयते अन्यथानिदिध्यासनापेक्षयादृशेरपरोक्षज्ञानोपस्थापकत्वंश्रवणाद्यपेक्षयापरोक्षज्ञानोपस्थापकत्वंचेतिद्वैरूप्यापत्तेः । अतःश्रवणविधेरप्यपरोक्षज्ञानार्थत्वमितिनफलभेदइतिनेष्टापत्तिरितिभावः । ननुनिदिध्यासनविधावपिश्रवणविधाविवपरोक्षज्ञानमेवदृशिनोद्दिश्यतामित्यतउक्तं परोक्षेत्यादि । निदि

ध्यासनस्यपरोक्षज्ञानप्रवाहरूपत्वात्परोक्षज्ञानफलकत्वंनसंभवतीत्यर्थः ॥ साक्षात्कर्तव्यइति ॥ "श्रोतव्यआत्मासाक्षात्कर्तव्य" इतिश्रवणादिविधेःसाक्षात्काररूपफलसमर्पकवाक्यांतरसद्भावात्तस्यसाक्षात्कारएवफलंनपरोक्षज्ञानमित्यर्थः ॥ त्वन्मतइति ॥ इदमत्राकूतं । नश्रवणविधौपरोक्षज्ञानस्योद्देश्यत्वं काम्यत्वमे(वह्यु)वोद्देश्यत्वं परोक्षज्ञानेचकामनानसंभवति । तथाहि । ब्रह्मज्ञानंमेभूयादितिहिकामनाकर्तव्या तत्रप्रष्टव्यं ब्रह्मज्ञानंज्ञातंनवा नचेत् ब्रह्मज्ञानंमेभूयादितिकामनायाअयोगः ब्रह्मज्ञानमितिव्यवहारस्यैवायोगात् आद्येज्ञानावच्छेदकतयाब्रह्मणोपिज्ञातत्वेनसुतरांकाम्यत्वायोगः सिद्धेइच्छाविरहादिति

**साक्षात्कर्तव्यइतिश्रुत्यंतराच्च त्वन्मतेपरोक्षज्ञानेकामनायोगेनतस्योद्देश्यत्वायोगाच्च। आपरोक्ष्यस्यैवनियमादृष्टसाध्यत्वेपितत्साध्यदेवतापरोक्ष्यनिवर्त्यदुरितवदध्यस्तत्वायोगाच्च। किंचकल्पितत्वे स्वधीहेत्विंद्रि**

भावः । नचभवन्मतेऽपरोक्षज्ञानस्यापिकाम्यत्वायोगः । तत्रापिप्रष्टव्यं अपरोक्षज्ञानमपिज्ञातंनवा नेतिपक्षेकामनाऽयोगः आद्येब्रह्मणोपिज्ञातत्वात्कामनाऽयोगइतिवक्तुंनयुज्यते परोक्षतोज्ञातेब्रह्मणिअपरोक्षज्ञानकामनायाःसंभवात् । नचैवंत्वयावक्तुंशक्यते अपरोक्षतोज्ञातेब्रह्मणिपरोक्षज्ञानकामनाऽसंभवादितिद्रष्टव्यं । श्रवणनियमादृष्टयोःसाक्षात्काररूपैकफलकत्वमंगीकृत्याप्याह ॥ आपरोक्ष्यस्यैवेति ॥ तत्साध्येति ॥ नियमादृष्टसाध्येत्यर्थः ॥ दुरितवदिति ॥ दुरितंयथादेवतायांनाऽध्यस्तंतथेत्यर्थः । मिथ्यात्वानुमानस्यप्रतिकूलतर्कांतरमाह ॥ किंचेति ॥ विश्वस्यकल्पितत्वेप्रतीतिमात्रशरीरत्वरूप

प्रा(तीतिक)तिभासिकत्वापत्त्याज्ञानात्पूर्वमसत्त्वादि(तिभावः)त्यर्थः। स्वशब्देनप्रपंचोग्राह्यः ॥ प्रतिकर्मेति ॥ सर्वसर्वेणदृश्येते त्यतिप्रसंगभंजकेंद्रियसंनिकर्षायोगादि( तिभावः । )त्यर्थः । प्रतिकूलतर्कांतरमाह ॥ किंचेति ॥ "यतोवा" इत्यादिकंतत्तत्सूत्र

यासन्निकर्षात्प्रतिकर्मव्यवस्थानयुक्तास्यात् किंचयदिजगत्कल्पितंस्यात्तदात्वन्मतेपि "जन्माद्य स्ययत" इतिसूत्रे "यतोवे" त्यादिश्रुतौचजन्माद्युक्तिः "ईक्षतेर्नाशब्दं" इतिसूत्रे "तदैक्षत" इत्या दिश्रुतौचईश्वरस्येक्षापूर्वककर्तृत्वोक्तिः "लोकवत्तुलीलाकैवल्यं" इतिसूत्रे "आप्तकामस्यका स्पृहे" तिश्रुतौचप्रयोजनाभावेपिलीलयासृष्ट्याद्युक्तिः "वैषम्यनैर्घृण्येनसापेक्षत्वात्" इतिसूत्रे "पुण्येनपुण्यंलोकंनयती" त्यादिश्रुतौचकर्मसापेक्षत्वेनावैषम्योक्तिः "तेजोतस्तथाह्याह" इतिसूत्रे "वायोरग्नि" रित्यादिश्रुतौचतेजआदेर्वाय्वादिजन्यत्वोक्तिः "विपर्ययेणतुक्रम" इतिसूत्रे "पृथि व्यप्सुप्रलीयत" इतिश्रुतौचपृथिव्यादीनामबादौलयोक्तिरित्याद्ययुक्तंस्यात् । नहिकल्पितस्यरू प्यादेर्जन्मादिकमीक्षापूर्वंसृष्टत्वंवा तद्भ्रांतेःप्रयोजनापेक्षावाजीवस्यसुखदुःखेश्वरादिविषयभ्रांत्ये श्वरस्यवैषम्यादिप्रसक्तिर्वा एकस्यकल्पितस्यकल्पितांतरादुत्पत्तिर्वा तत्रलयोवादृष्टः युक्तोवा ।

विषयवाक्यंद्रष्टव्यं । कुतोऽयुक्तमित्यतस्तदुपपादयति ॥ नहीति ॥ नहिदृष्टोयुक्तोवेत्यन्वयः । लयशब्दानुसारेणपुल्लिंग प्रयोगइतिज्ञातव्यं । ननुकल्पितस्यापिप्रपंचस्यव्यावहारिकसत्त्वाभ्युपगमेनजन्माद्युक्तिःसंभवति रूप्यादेस्तुप्रातिभासिकत्वा

तथाचनताभ्यामीश्वरःकल्पितइत्यर्थः । नन्वीश्वरस्यकल्पकाभावेपिकल्पितत्वमस्त्वित्यतआह ॥ नचेति ॥ तथाचपरिशेषेणजीवकल्पितएवेश्वरोवाच्यः । तत्रचान्योन्याश्रयउक्तएवेतिभावः । एकस्यकल्पितस्यकल्पितांतरादुत्पत्तेरदर्शनाद्वायोरग्निरित्यादिश्रुतौतेजआदेर्वाय्वादिजन्यत्वोक्तिरयुक्तास्यात् । ततश्चश्रुतेर्निर्विषयत्वंस्यादित्युक्तमयुक्तं । कल्पितेनवास्तवोत्पत्तेरभावेपिवाय्वादिभ्योऽग्न्यादिकमुत्पद्यतइतिजीवानांभ्रमस्यविद्यमानत्वात् जीवभ्रमसिद्धार्थावलंबनेनसविषयत्वोपपत्तिरित्याशंक्यनिषेधति ॥ नचेति ॥ आदिकालीनवाय्वादेःप्रत्यक्षागोचरत्वेनतत्रप्रत्यक्षेणजन्यजनकभावभ्रमायोगादित्यर्थः । ननुजीवानामेतादृशभ्र

नचकल्पकंविनाकल्पना । नचजीवानांवाय्वादिभ्योऽग्न्याद्युत्पत्तिभ्रमोवास्ति यःश्रुतेराल
बनंस्यात् । नचभ्रांतिंविनाकल्पितमस्ति । नचैतद्वाक्यजभ्रांतिसिद्धालंबनेनैवएतद्वाक्यस्यप्रा
माण्यं। बौद्धागमस्यापितत्प्रसंगात्। त्वन्मतेभ्रांतिहेतूनांदेहेंद्रियादीनांपृथिव्यादिकार्यत्वात्।

माभावेपिवायोस्सकाशादग्न्युत्पत्तिःकल्पितास्ति तादृशकल्पितार्थविषयकतयाआलंबनवत्तोपपद्यतइत्यतआह ॥ नचेति ॥ ननुप्रत्यक्षेणैतादृशभ्रमासंभवेपिवायोरग्निरित्यादिवाक्येनैवअग्न्यादीनांजन्यजनकभावभ्रमोभवति तादृशभ्रमसिद्धार्थावलंबनेनैतद्वाक्यस्यप्रामाण्यमुपपद्यतइत्याशंक्यनिराकरोति ॥ नचेति ॥ बौद्धेति ॥ केशोल्लुंठनसप्तघटिकाभोजनप्रतिपादकबौद्धागमजन्यभ्रांतिसिद्धैतदर्थावलंबनेनैवबौद्धागमस्यापिप्रामाण्यंस्यादित्यर्थः । एतद्वाक्यजन्यभ्रांतिसिद्धार्थावलंबनेनैतद्वाक्यस्यप्रामाण्यमित्युक्तं तत्रपृच्छामः एतद्वाक्यजन्यभ्रांतिर्जीवानामुतेश्वरस्य नाद्यइत्याह ॥ त्वन्मतइति ॥ पृथिव्यादीति ॥ देहस्यपृ

